॥श्रीः॥

महामहोपाध्यायाचार्य श्रीजीमूतवाहनकृतः

# दायभागः

# DĀYA BHĀGAH

पण्डित श्रीकृष्णतर्कालङ्कारभट्टाचार्यकृता
दायभागप्रबोधिनीव्याख्यासमलङ्कृत

• भूमिकालेखकः सम्पादकश्च

**श्री श्याम बापटः**

भारतीय विद्या प्रकाशन

दिल्ली वाराणसी

# दायभागः

श्री श्याम बापटः

भारतीय विद्या प्रकाशन
वाराणसी दिल्ली

मुल्य - 300/-

।।श्रीः।।

महामहोपाध्यायाचार्य श्रीजीमूतवाहनकृतः

# दायभागः

पण्डित श्रीकृष्णतर्कालङ्कारभट्टाचार्यकृता
दायभागप्रबोधिनीव्याख्यासमलङ्कृत

भूमिकालेखकः सम्पादकश्च
**श्री श्याम बापटः**
पुराणेतिहास विभागः
सम्पूर्णानन्द संस्कृत विश्वविद्यालयः
वाराणसी



**भारतीय विद्या प्रकाशन**

वाराणसी दिल्ली

प्रकाशक :
**© भारतीय विद्या प्रकाशन**
(1) पो. बा. नं. 1108 कचौड़ीगली, वाराणसी-221001
फोन : 0542-2392376

(2) 1. यू. बी. जवाहर नगर, बंग्लो रोड, दिल्ली-110007
फोन : 011-23851570, 23850944
e-mail : bvpbooks@gmail.com

अन्य प्राप्ति स्थान :
**भारतीय बुक कारपोरेशन**
5824, न्यू चन्द्रावल, (शिव मन्दिर के पास)
जवाहर नगर, दिल्ली-110007
फोन : 011-23851570

**प्रथम संस्करण** : 2009

ISBN : 978-81-217-0216-4

**मुद्रक :**
आर. के. प्रिंट प्रोसेस
नवीन शाहदरा, दिल्ली

**अक्षर संयोजक :**
राज कम्प्यूटर्स
लाहौरीटोला वाराणसी

# सूचीपत्रम्

# भूमिका

भारतवर्षमिदं धर्मभूमिः, धर्म प्राणोऽयं देशः। धृ धातोः धर्मशब्दस्य निष्पत्तिर्भवति। 'धरतीति धर्मः' अथवा 'येनैतद्धार्यते स धर्म्मः' अर्थात् यः धारयति अथवा येन विश्वमिदं धृतं रक्षितं सः धर्मः। वेदेऽपि एतादृशं लक्षणमुपलभ्यते—

**धर्मो विश्वस्य जगतः प्रतिष्ठा लोके धर्मिष्ठं प्रजा उपसर्पन्ति धर्मेण पापमपनुदति धर्मे सर्वं प्रतिष्ठितं तस्माद् धर्मं परमं वदन्ति** —नारायणोपनिषद् ७९

धर्मः समस्त संसारस्य स्थितेर्मूलम्। संसारे जनाः धर्मात्मानमनुसरन्ति। धर्मेण पापापनोदनम्। धर्मेणैव सकलसंसारस्य स्थितिः। अतएव धर्म एव परमपदार्थः।

एवं हि भगवता वेदव्यासेनापि उक्तम्—

**धारणाद्धर्ममित्याहुर्धर्मो धारयते प्रजाः।**
**यत्स्याद्धारणसंयुक्तं स धर्म इति निश्चयः।।** —म. भा.

यया ईश्वरशक्त्या सम्पूर्णसृष्टिक्रिया धृता रक्षिता सा एव धर्मः धर्मशक्त्या एव जीवः प्रकृतिराज्ये क्रमोन्नत्या मनुष्ययोनिं प्राप्नोति। यथा व्यासेनोक्तम्—

**उन्नतिं निखिला जीवा धर्मेणैव क्रमादिह।**
**विदधानाः सावधाना लभन्तेऽन्ते परं पदम्।।** —म. भा.

महाभारतानुसारं मनुष्य एव धर्मसाधनाधिकारी—

**मानुषेषु महाराज! धर्माधर्मौ प्रवर्ततः।**
**न तथान्येषु भूतेषु मनुष्यरहितेष्विह।।**
**इयं हि योनिः प्रथमा यां प्राप्य जगतीपते!।**
**आत्मा वै शक्यते त्रातुं कर्मभिः शुभलक्षणैः।।**

मनुष्येष्वेव धर्माधर्मप्रवृत्तिः सम्यक् जायते नत्वेतरजीवेषु। इयं हि प्रथमा योनिः यां प्राप्य मनुष्यः शुभकर्माणि कुर्वन् मुक्तिं प्राप्तुं शक्नोति।

'वेदोऽखिलो धर्ममूलम्' इति वचनेन वेदविहित कर्मणा एव धर्मस्य रक्षणं भवितुं शक्यते।

आर्यजातौ मानवस्य सर्वविद्योन्नत्यर्थं द्विविधानि शास्त्राणि स्वीकृतानि श्रुतिः स्मृतिश्च। तत्र श्रुतयः वेदाश्च अपौरुषेयाः, सर्वथानित्याः, स्वतःप्रमाणप्रमिताः, सल्लक्षणलक्षिताः, सम्यगनुभवगम्याः, अनधिगतार्थगन्तारः, संशयविपर्ययादिदोषशून्याः ईश्वरदेवर्षिक्रमादाविर्भूताः, धर्मार्थकाममोक्षप्रदाश्च। श्रुति शब्दाः नित्याः। समस्तयुगमन्वन्तर-

कल्पादिषु तेषामानुपूर्वी समाना एव। सृष्ट्यादौ प्रणवगायत्रीमन्त्रसंहितारूपेण तेषामनाहत-नादो भवति। विशुद्धान्तकरणाः ऋषयः तेषां श्रवणं कुर्वन्तः पश्चात् स्वशिष्यपरम्परायां तेषामेव शब्दानां विस्तारं कुर्वन्ति। एते परमात्मनः निश्वसितच्छब्दाः।

द्वितीयप्रकारकाणि शास्त्राणि स्मृति शब्देन व्यवह्रीयन्ते, मन्वादिस्मृतयः, महाभारतादि- इतिहासः, भागवतादि पुराणानि स्मृति शब्दान्तर्गतानि।

गुणत्रयभेदेन मानवस्य बुद्धिः त्रिविधा सात्विकी, राजसी, तामसी च। सात्विकी बुद्धिः प्रवृत्तिं निवृत्तिञ्च, कार्याऽकार्यं, भयाऽभये बन्धं मोक्षं च वेत्ति। या बुद्धिः धर्माधर्मं कार्याकार्यं विषये किञ्चित् संदेहात्मिका सा राजसी एवं हि धर्मे अधर्मं, अधर्मे धर्मं पश्यति या अज्ञानावृता बुद्धिः सा तामसी[1]। यद्यपि स्मृतिशास्त्रेषु त्रिविधानां मनुष्याणां कृते धर्मोपदेशः वर्णितः तथापि प्रधानतः राजस-तामस-बुद्धियुक्तानां साहाय्यार्थमेव स्मृतिशास्त्राणामाविर्भावः।

त्रिविधबुद्ध्यानुसारं धर्मानुशासनान्यपि त्रिविधानि भवन्ति। १. योगानुशासनम्, २. शब्दानुशासनम्, ३. राजानुशासनम्। तत्र तमःप्रधानजनानां कृते राजानुशासनम्, रजःप्रधानमनुष्याणां कृते शब्दानुशासनं, सत्वप्रधानमानवानां कृते योगान्नुशासनञ्च। स्मृतिषु राजानुशासनशब्दानुशासनयोः समावेशः। वेदद्रष्टृणां महर्षिणां स्मृत्या यानि धर्मशास्त्राणि प्रणीतानि तान्येव स्मृतय इत्यभिधीयन्ते। आदौ मन्त्रद्रष्टृभि ऋषिभिः शब्दब्रह्मरूपिश्रुतिप्रकाशनसमये स्वाभिमतस्यावश्यकता नानुभूता किन्तु कालान्तरे धर्ममर्यादासंरक्षणार्थ विशेषानुशासनवाक्यानामावश्यकतामनुभूय तैः वेदज्ञानयुक्तस्मृतिरा-श्रित्य यानि वर्णाश्रमधर्म राजधर्म तथा लोकोपकारी साधारण धर्म सम्बन्धीनि यान्यनु-शासनात्मकानि शास्त्राणि प्रणीतानि तान्येव स्मृतिशास्त्राणि।

अनुशासनात्मकेषु प्रधानानि स्मृतिशास्त्राणि यथाऽनुशासनदृष्ट्या जगद्रक्षणे समर्थानि न तथेतराणि एवं महिमामण्डितानि। वर्तमान कल्पस्य स्मृति ग्रन्था एते सन्ति—

**'मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोऽङ्गिरा।**
**यमाऽपस्तम्बसंवर्ताः कात्यायनबृहस्पती।।**
**पराशरव्यासशङ्खलिखिता दक्षगौतमौ।**
**शातातपो वसिष्ठश्च धर्मशास्त्रप्रयोजकाः।।**

(या. स्मृ. १।४-५)

मनुः, अत्रिः, विष्णुः, हारीतः, याज्ञवल्क्यः, उशना, अङ्गिरा, यमः, आपस्तम्बः, संवर्तः, कात्यायनः, बृहस्पतिः, पराशरः, व्यासः, शङ्खः, लिखितः, दक्षः, गौतमः, शातातपः, वसिष्ठश्च एते ऋषयः धर्मशास्त्र प्रयोजकाः। एतदतिरिक्तं गोभिलः, जमदग्निः, विश्वामित्रः, भरद्वाजः, छागलेयः, जाबालिः, च्यवनः, मरीचिः कश्यपादयः अन्येपि स्मृतिकाराः।

---

१. श्री. भ. गी.—अ. १४

सर्वासु स्मृतिषु एकमेव लक्ष्यं धर्मप्रतिपादनम्। किन्तु केचन स्मृतिकारेण केचन विषयाः व्यासरूपेण अपरेण च समासरूपेण वर्णिताः। सर्वासां स्मृतीनामनुशासने यद् वैविध्यं तस्य कारणं सृष्टेर्वैचित्र्यमेव। यस्मिन्नार्षअन्तःकरणे येन भावेन या स्मृतिः प्रकाशिता तेन तद्भावयुक्तं स्मृतिशास्त्रं प्रणीतम्। एतासु स्मृतिषु यत्र पदार्थस्य गुरुत्वं विज्ञानस्य च सूक्ष्मत्वं तत्र मतभेदः संभाव्यते किन्तु यत्र पदार्थस्य सूक्ष्मत्वं विज्ञानस्य च प्राबल्यं तत्र मतविरोधो न दृश्यते।

एतादृशं मतमपि दृश्यते। प्रधान स्मृती द्वे एव मनुस्मृतिः याज्ञवल्क्यस्मृतिश्च, अन्याः अष्टादशोपस्मृतयः अष्टादशौपस्मृतयश्च। केचन महाभारतस्य काश्चन अंशान् स्मृतिरूपेण स्वीकुर्वन्ति एवं हि केचन आचार्याः समस्तपुराणानां अंशविशेषान् स्मृतिरूपेण स्वीकुर्वन्ति। यथा आख्यानुपाख्यानं गाथाकल्पशुद्धिश्चेति चत्वारि पुराणोपकरणानि स्वीकृतानि तत्र कल्पशुद्धौ समीक्षाचक्रवर्तिभिः पं० मधुसूदनओझामहोदयैः तथा म०म० पण्डित गिरिधरशर्मचतुर्वेदमहाभागैश्च धर्मशास्त्रस्य सर्वे विषयाः स्वीकृताः।

प्राचीनकाले कल्पशास्त्रवत् स्मृतिशास्त्राण्यपि सूत्रबद्धान्यासन्। परवर्तिकाले बुद्धिमान्द्यं वीक्ष्य जनानां सहाय्यार्थं शिष्यपरम्परया स्मृतयः श्लोकबद्धाः कृताः। स्मृतिग्रन्थेषु यया जीवनचर्यया सामाजिकं व्यक्तिगतं, लौकिकं-पारलौकिकं च जीवनं उन्नतिशिखरं गन्तुं शक्नोति तत्सर्वं अन्यैरूपदेशैः सह सम्यक् निरूपितम्। यो विधिरूपः निषेधरूपो उपदेशः ससर्वात्र स्पष्टरूपेण स्मृतिषु वर्णितः।

महर्षिणा याज्ञवल्क्येन यानि चतुर्दश विद्या स्थानानि परिगणितानि तानि एवं—

**पुराणं न्यायमीमांसा-धर्मशास्त्राङ्गमिश्रिताः।**
**वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश।।** —या. स्मृ. १।३

तान्येव चतुर्दशधर्मस्थानानि। एवं वेदशास्त्राध्ययनं धर्मकोटौ प्रविशति। वैषेषिक दर्शनानुसारं 'यतोऽभ्युदय निःश्रेयससिद्धिः स धर्मः'। 'धर्मशास्त्रम्' इत्यत्र धर्मस्य शास्त्रम् तत्र (शास् + ष्ट्रन्) शिष्यतेनेन इति शास्त्रम्, यस्य आज्ञा, समादेशः, नियमः, विधिः, धर्मशास्त्रस्याज्ञा, वेदधर्मशास्त्राणि ग्रन्थाः, विद्याविभागः विज्ञानेत्यादयः बहवोर्थाः भवन्ति यथा गीतायां 'इदं गुह्यतमं शास्त्रम्' अनेन धर्म सम्बन्धि आज्ञा, नियमः, विधिर्वा इति कर्तुं पार्यते। वस्तुतः एतद् प्राचीनं विधिशास्त्रम्।

एवं धर्मशास्त्रं वेदानुमापकमभ्युदयनिःश्रेयसप्रापकमनुष्ठानवतां, मानवानामुपादेयं सकलशास्त्रललामभूतं वेदोपकारकं शास्त्रं नास्त्यत्र संदेह लेशः। यथा पुराणानां ज्ञानेन विना वेदस्य पूर्णं सम्यक् ज्ञानं भवितुं नार्हति तथैव धर्मशास्त्रज्ञानेन विनाऽपि। महर्षेः व्यासस्य सकाशात् सूतेन रोमहर्षेणेन न केवलं पुराणानि सेतिहासानि पठितानि अपितु धर्मशास्त्राण्यपि। उभय शास्त्राणि परस्परपूरकाणि- यथा भागवते उक्तम्—

**त्वया खलु पुराणानि सेतिहासानि चानघ।**
**अख्यातान्यप्यधीतानि धर्मशास्त्राणि यान्युत।।** —श्री. भा. १।१।६

धर्मशास्त्रे मुख्यतः भागत्रयं दृश्यते—१. आचारभागः, २. व्यवहारभागः, ३. प्रायश्चित्तभागश्च। यत्र वर्णधर्म-आश्रमधर्म-साधारण धर्माणां चर्चा विद्यते स भागः आचरभागः कथ्यते।

यत्र गुणधर्माणां चर्चा सः व्यवहारभागः। एवं हि यत्र निमित्तधर्माणां चर्चा कृता स भागः प्रायश्चित्त भागेत्यभिधीयते।

अत्र गुणधर्ममध्येऽभिषेकादि गुणयुक्तस्य राज्ञो धर्मोऽन्तर्भवति। अतो गुणधर्म राजधर्म एव। अत्र अभिषेकादि गुणयुक्तस्य राज्ञः अथवा अभिषिक्तजनपदपुरपालयितृ-पुरुषस्य प्रजापालनं एव परमो धर्मः। सः दुष्टानां दमनेन विना प्रजापालनं सम्यक् कर्तुं न पार्यते। दुष्टानां निग्रहार्थं तेषां परिज्ञानमावश्यकम्। दुष्टपरिज्ञानं च न व्यवहार-दर्शनमन्तरेण सम्भवति। अतो नृपतेः धर्मेषु व्यवहारदर्शनं मुख्यम्। तद्व्यवहारदर्शन-महरहः कर्तव्यमित्युक्तम्। अस्य व्यवहारस्य कीदृशं स्वरूपं, किञ्च लक्षणं कानि पदानीत्यादीनि याज्ञवल्क्यमन्वादिभिः स्वेषु स्वेषु स्मृतिग्रन्थेषु सम्यक् प्रतिपादितानि। मन्वादिस्मृतौ अष्टादशविवादपदानि व्यवहारस्य स्वीकृतानि।[१]

१. ऋणादानम् (ऋणस्य आदानम्) २. निक्षेपः (स्वधनस्यान्यस्मिन्नर्पणम्) ३. अस्वामिना कृतो विक्रयः ४. सम्भूय च समुत्थानम् (अनेकैर्मिलित्वा यत्र धनार्थं वाणिज्याद्युधमः क्रियते) ५. कर्मकरस्य वेतनस्य अदानम् ६. दत्तस्यानपकर्म अप्रत्यर्पणम् ७. कृतव्यवस्थायाः अतिक्रमः ८. क्रय-विक्रये च कृते पश्चात्तापाद् विप्रतिपत्तिः ९. स्वामिपशुपालयोर्विवादः १०. ग्रामसीमा विप्रतिपत्तिः ११. दण्डपारुष्यम् १२. वाक्पारुष्यम् १३. स्तेयम् १४. अतिसाहसम् (प्रसह्य धनहरणादि) १५. स्त्रियश्च परपुरुषसम्पर्कः १६. स्त्रीसहितस्य पुंसो धर्मे व्यवस्था १७. पैतृकादि धनस्य विभागः १८. अक्षादिक्रीडाः।

अत्राष्टादशविवादपदेशु आदौ ऋणादानमित्यादिना तस्य विवादस्य प्राथम्येऽपि विभक्तस्यैव ऋणादानाधिकारस्मरणात् दायभागस्य तदपेक्षया अवश्यमेव श्रेष्ठत्वं स्वीकृत्तम्। श्रुतौ 'मनु पुत्रेभ्यो दायमभजदिति' गौरववाक्येन दायभागस्य महत्वं दर्शितम्। भागवतेऽपिसदायभाक् 'न याचतोऽदात् समयेन दायम्' इत्यादि वाक्यै दायस्य महत्वं दृश्यते। मनुना तु विभागश्चेति पदेन दायभाग विवादपदं प्रदर्शितम्।

अस्मिन् संसारे समस्तलोका एक स्थाने अवस्थातुं न शक्नुवन्ति न तु तत्समीचीन-मपि। स्व स्व प्रारब्धवशात् जीविकार्थं वा अन्यैः कारणैश्च सर्वे कौटुम्बिकाः प्रायः एकत्र न निवसन्ति। अतो विभागस्यावश्यकता निश्चयेन भवत्येव। यद्यपि मनुना अविभक्ता भ्रातरः स संवसेयु इत्युक्तं तथापि धर्मकामनया पृथक्वसेयु इत्यपि उक्तम्

**एवं सह वसेयुर्वा पृथग्वा धर्मकाम्यया।**

**पृथग्विवर्धते धर्मस्तस्माद्धर्म्या पृथक् क्रिया।।** (म० स्मृ. ९।१११)

---

१. म. स्मृ. ८।४-७

यस्माद् पृथगवस्थाने सति पृथक्-पृथक् पञ्चमहायज्ञाद्यनुष्ठानैः धर्मस्तेषां प्रवर्धते। तस्माद् विभागक्रिया धर्मार्था। बृहस्पतिनापि समर्थितमेतद्—

**एकपाकेन वसतां पितृदेवद्विजार्चनम्।**
**एकं भवेद्विभक्तानां तदेव स्याद् गृहे गृहे।।**

एतस्माद् कारणाद् दायभागस्य महत्वं तु वर्तत एव। नारदेन दायभागस्य लक्षणमेवं कृतम्—

**विभागोर्थस्य पित्र्यस्य पुत्रैर्यत्रप्रकल्प्यते।**
**दायभाग इति प्रोक्तं तद्विवादपदं बुधः।।**

एतेन पित्रादिधनानां पुत्रादिभिर्यो विभागः स एव दायभाग पदेनोच्यते।

यथा प्रागेवोक्तं यत् स्मृतिशास्त्राणि सूत्रबद्धान्यासन् कालान्तरे जनानां कृते सहजतया बोधगम्यं कर्तुं श्लोकबद्धानि कृतानि। भूरीणि स्मृतिशास्त्राणि तत्रापि एकैकं विषयमधिकृत्य तत्र स्मृतिकाराणां अनेकाःसम्मतयः सन्ति। अतः परवर्तिकाले देशकालमनुसृत्य जनानां सौविध्यार्थं भ्रान्तिनिवारणार्थं च धर्मशास्त्रीयविषयाणामुपरि विविधाः निबन्ध ग्रन्थाः लिखिताः दायभागमप्याधिकृत्य अनेकै विद्वद्भिः धर्मशास्त्रकोविदैः निबन्धग्रन्थाः लिखिताः। येषु केचन् प्रसिद्धदायभाग निबन्धकाराः सन्ति—

| क्र० | निबन्धकारः | रचना | रचनाकालः |
|---|---|---|---|
| १. | मेधातिथिः | मनुस्मृतिभाष्यम् | (८१०-११००) खीस्ताब्द्मध्ये |
| २. | विज्ञानेश्वरः | याज्ञवल्क्यस्मृतेरुपरि मिताक्षरा टीका | १०५० खीस्ताब्दः |
| ३. | जीमूतवाहनः | धर्मरत्नम् (दायभागः) | १०९३ खीस्ताब्दः |
| ४. | अपरादित्यः | याज्ञवल्क्यस्मृतेरूपरि अपरार्क टीका | द्वादशशतकम् |
| ५. | कुल्लूकभट्टः | दायनिर्णयः | १३००-१४०० ई. मध्ये |
| ६. | लक्ष्मीधरः | कृत्यकल्पतरुः | १३००-१४०० ई. मध्ये |
| ७. | शूलपाणिः | याज्ञवल्क्यस्मृतेरूपरि दीपकलिका टीका | १३७५-१४६० ई. मध्ये |
| ८. | वाचस्पति मिश्रः | विवाद चिन्तामणिः | १४२५-१५४० ई. मध्ये |
| ९. | श्रीनाथआचार्य-चूडामणिः | दायभागटीका | १४७०-१५४० ई. मध्ये |
| १०. | श्रीकरः | दायभागनिर्णयः | १४७५-१५०० ई. मध्ये |

| | | |
|---|---|---|
| ११. कामदेवः | दायभागविनिर्णयः | १४७५-१५०० ई. मध्ये |
| १२. रघुनन्दनः | दायभागभाष्यम् | १४९०-१५७० ई. मध्ये |
| १३. प्रतापरुद्रदेवः | सरस्वती विलासः | १४९७-१५३९ ई. मध्ये |
| १४. अच्युतचक्रवर्ती | दायभागसिद्धान्त-कुमुदचन्द्रिका | १५००-१५५० ई. मध्ये |
| १५. बलभद्रतर्क-वागीशः | दायभागसिद्धान्तः | १५०० ई. |
| १६. मिशरुमिश्रः | विवादचन्द्रः | १५०० ई. |
| १७. श्रीकृष्णतर्का-लङ्कारः | दायदीपः (दायभागटीका) | १५००-१५५० ई. मध्ये |
| १८. रामचन्द्रनारायण तर्कालङ्कारभट्टाचार्यः | दायभागटीका | १५४०-१५७० ई. मध्ये |
| १९ गोपालन्यायपञ्चाननः | दायनिर्णयः | १५७०-१६२० ई. मध्ये |
| २०. अनन्तरामः | स्वत्वरहस्यम् | १६०० ई. (षोडषशताब्दी) |
| २१. सार्वभौमः | दायभागव्यवस्था | १६०० ई. (षोडषशताब्दी) |
| २२. मित्रमिश्रः | वीरमित्रोदय व्यवहार प्रकाशः (दायभागः) | १६१०-१६४० ई. मध्ये |
| २३. नीलकण्ठभट्टः | व्यवहारममूखः | १६१०-१६४५ ई. मध्ये |
| २४. पीताम्बरसिद्धान्त-वागीशः | दायकौमुदी | १७०० ई. (सप्तदशशतकम्) |
| २५. मोहनचन्द्र-विद्यावाचस्पतिः | दायभागकारिका | १७०० ई. (सप्तदशशतकम्) |
| २६. रामनाथः | दायरहस्यम् | १७०० ई. (सप्तदशशतकम्) |
| २७. रामनाथविद्या वाचस्पतिः | दायभागविवेकः | १७०० ई. (सप्तदशशतकम्) |
| २८. श्रीशङ्करशर्मा | दायनिर्णयः | १७०० (सप्तदशशतकम्) |
| २९. बालम्भट्टः | बालम्भट्टी (मिताक्षराटीका) | १७३०-१८२० ई. मध्ये |
| ३०. जगन्नाथः | विवादभङ्गार्णवसेतुः | १८०० ई. (अष्टादशशतकम्) |
| ३१. रघुरामः | दायभागार्थदीपिका-पद्यावली | १८०० ई. (अष्टादशशतकम्) |
| ३२. वरदराजः | दायभागनिर्णयः | १८०० ई. (अष्टादशशतकम्) |

अनेन प्रकारेण अनेके निबन्धग्रन्था:, टीकाश्च समुपलब्धा: यत्र दायभागमधिकृत्यमपि चिन्तितम्। दायभागे मुख्यतो द्विविधं चिन्तनं परिलक्ष्यते। एतासु टीकासु दायभाग मधिकृत्य तिस्र: प्रधाना:। त्रयाणामालोचनेनैव अन्येषामपि मतान्यालोचितानि भवन्ति। ता: रचना: सन्ति:—१. याज्ञवल्क्यस्मृतेरुपरि मिताक्षरा टीका २. जीमूतवाहनस्य धर्मरत्नान्तर्गतदायभाग: ३. मित्रमिश्रस्य वीरमित्रोदयान्तर्गतव्यवहारप्रकाशस्य दायभाग:। या द्विविधा धारा। तत्र विज्ञानेश्वरादिभि: अङ्गजातत्वादिना पुत्रादीनां पित्रादिधनेऽधिकारो दर्शित:। किन्तु जीमूतवाहनेन तदनुयायिभिश्च पिण्डदानाद्युपकारादिना पित्रादिधने पुत्रादीनामधिकार: स्वीकृत:। मन्येऽत्र जीमूतवाहनस्य परिचयदानात् पूर्वं विज्ञानेश्वरमित्रमिश्रयो: परिचयदानं समीचीनं भविष्यति। यतो हि जीमूतवाहन: प्राय: मिताक्षराकारस्य विज्ञानेश्वरस्य विना नामग्रहणेन तन्मतं आक्षिपति। किन्तु मित्रमिश्र: जीमूतवाहन मतानि निरस्य विज्ञानेश्वरमतान्येव समर्थयति।

आचार्य विज्ञानेश्वर:—यद्यपि याज्ञवल्क्यस्मृतिमधिकृत्य बहव्य: टीका विश्वरूपापरादित्यशूलपाणिमित्रमिश्रप्रभृतिभि: विद्वद्भि: लिखिता: किन्तु विज्ञानेश्वरकृता मिताक्षरा शिर:स्थानं भजते। धर्मशास्त्रकोविदै: विज्ञानेश्वरमतं सर्वथा सर्वोत्कृष्टं प्रामाणिकं चोद्घोषितम्। अनेनैव कारणेन वङ्गप्रान्तं विहायाशेषभारते व्यवहारकाण्डान्तर्गतं दायभागपदं समानेन सर्वत्र शासनेनाद्रियते। मिताक्षरायां तस्य विषय एवं विवरणं उपलभ्यते—

**नासीदस्ति भविष्यति क्षितितले कल्याणकल्पं पुरम्।**
**नो दृष्ट: श्रुत एव वा क्षितिपति: श्रीविक्रमार्कोपम:।**
**विज्ञानेश्वरपण्डितो न भजते किं नान्यदन्योपम-**
**श्चाकल्पं स्थिरमस्तु कल्पलतिका कल्पं तदेतत् त्रयम्।।**

अनेनज्ञायते यत् कल्याणनगरे विक्रमादित्यनृपते: सांन्निध्ये भारद्वाजोत्तमस्यान्तेवासिना पद्मनाभभट्टस्यपुत्रेण विज्ञानेश्वरेन मिताक्षराटीका लिखिता। ग्रन्थान्ते यथा टीकाया: वैशिष्ट्यं टीकाकारेणैव सूचितं यत् प्रमिताक्षराऽपि विपुलार्थवती श्रवणयोरमृतं परिषिञ्चति।

आचार्य मित्रमिश्र:—ग्वालियर (गोपाचल) वास्तव्यस्य नृपतेर्वीरसिहस्य सभापण्डितोऽयं मित्रमिश्र: परशुरामात्मज:। राज्ञो वीरसिंहस्यादेशेन वीरमित्रोदयसंज्ञक अशेषविभागानधिकृत्य धर्मशास्त्रीय ग्रन्थ एको निर्मित:, यत्र द्वाविंशति प्रकाशेषु द्वादश प्रकाशा: प्रकाशिता: संस्कारपरिभाषा व्यवहारप्रकाशादय:। तथा दानमोक्षकर्म प्रायश्चितादयस्त्वप्रकाशिता: येषु व्यवहारप्रकाश: तस्य पाण्डित्यं सर्वथा प्रकाशयति। आचार्य मित्रमिश्र: विशेषत: दायभागप्रकरणे सबलयुक्तिप्रतिपादनपूर्वकं आचार्यस्य जीमूतवाहनस्य मतमपास्य दार्शनिकशैल्या आचार्यप्रवरस्य विज्ञानेश्वरस्य मतं नितरां समर्थयति।

**म० म० आचार्य जीमूतवाहन:**—अनेकेषु प्रसिद्धेषु वङ्गीयधर्मशास्त्रनिबन्धकारेषु आचार्यजीमूतवाहन: चूडामणिरिव राजते। काणेमहोदयानां धर्मशास्त्रस्येतिहास इति

ग्रन्थेन ज्ञायते यत् आदिशूरेणानीतेषु पञ्चब्राह्मणेष्वन्यतमस्य नारायणभट्टस्य नवम-पुरुषीयोऽयं विश्वक्सेन नाम्ना प्रसिद्धस्य वंगशासकस्य शासनन्यायालये न्यायाधीशः (विवाकः) आसीत्। दायभागग्रन्थस्य पुष्पिकायामनेन लिखितं वर्तते—'इति पारिभद्रीय महाममहोपाध्याय श्रीजीमूतवाहनकृतौ धर्मरत्ने दायभागः समाप्तः' अनेन पारिभद्रकुल-सम्भूतोऽयं जनः इति ज्ञायते।

यथा प्रायः प्राचीनानामाचार्याणां जन्मकाल विषये विदुषां मध्ये मतैक्यं न दृश्यते तथा अस्यापि काल विषये बहु विसंवादाः सन्ति। यतो हि अस्य ग्रन्थे धारेश्वर-गोविन्दराजभोजदेवादीनां नामानि उल्लिखितानि। भोजस्य कालः (१०००-१०५० ई.) वर्तते। तस्मात् आचार्यजीमूतवाहनः एकादशशतकस्यान्तिमभागात् पूर्ववर्ती भवितुं नार्हति। एवं हि शूलपाणि (१४००-)-वाचस्पतिमिश्र (१४२५-१५००)-रघुनन्दन (१४९०-१५७०) प्रभृतिभिः स्वेषु स्वकीयेषु ग्रन्थेष्वाचार्यजीमूतवाहनस्य नामोल्लेखः कृतः अतः पञ्चदशशतकस्यमध्यभागादनन्तररवर्त्यपि भवितुं नार्हति। आचार्यवर्यस्य जीमूतवाहनस्य यः प्रथमलेखः कालविवेकः तत्र या ज्यौतिषीय गणना प्रस्तुता तदनुसार-मपि १०९२ खिस्ताब्दात् पूर्वं तस्य कालो भवितुं नार्हति। उपर्युक्त विवरणमधिकृत्य प्रख्यात विद्वान् काणे महोदयः १०९३ खिस्ताब्दात् आरभ्य ११०८ खिस्ताब्द मध्ये आचार्य जीमूतवाहनस्य ग्रन्थरचनाकालो भवेदिति स्वीकरोति।

यथा प्रागेवोक्तं यत् जीमूतवाहनस्य प्रथमलेखः कालविवेक इति। ततः परं व्यवहारमातृका इति ग्रन्थस्य प्रणयनं कृत्वा पश्चात् दायभागः निर्मितः। दायभाग-स्यानुशीलनेन ज्ञायते यत् तेन ऋणादान विषयकं कश्चन ग्रन्थविशेषं लिखितुं प्रतिज्ञातं किन्तु एतादृशस्य ग्रन्थस्यानुपलब्धत्वात् तेनायं ग्रन्थः लिखितः न वा इति निश्चयेन वक्तुं न पार्यते। कतिपयविदुषामभिमतं यत् आचार्य जीमूतवाहनेन ग्रन्थचतुष्टयं निर्मितं किन्तु तत्र केवलं कालविवेक एव स्वतन्त्र ग्रन्थः अन्ये त्रयो ग्रन्थास्तु धर्मरत्न नाम्नः मुख्यग्रन्थस्यांशविशेषा एव।

यद्यपि व्यवहारकाण्डान्तर्गत दायभागपदं सर्वकारेणाशेषदेशे आद्रियते, मिताक्षरा आचार्यज्ञानेश्वरकृता सर्वत्र प्रबुद्धैः स्वीक्रियते, किन्तु वङ्गदेशीयानां कृते हिन्दु-आइन शास्त्रमध्ये जीमूतवाहनप्रणीतो दायभागः एव समाद्रियते।

आचार्यजीमूतवाहनस्य दायभागे प्रामुख्येन मनु-याज्ञवल्क्य-नारद-व्यास-शङ्ख-लिखित-यम-उशन-आपस्तम्ब-बृहन्मनु-वृद्धशातातप-वृद्धकात्यायन-पैठीनसि सदृशानां प्राचीनस्मृतिकाराणां तथा मेधातिथि-गोविन्दराज-श्रीकरप्रभृति परवर्ति निबन्धकाराणामपि नामानि सादरं उट्टङ्कितानि। जीमूतवाहनेन नामोच्चारं विना मिताक्षराकारस्य विज्ञानेश्वरस्य मतानि प्रायःनिरस्तान्येव। तेन स्वानुकूलानि मतानि तु प्रायशः सम्मानितानि प्राचीन निबन्धकाराणां किन्तु प्रतिकूलानि तु प्रायः उपेक्षितान्येव यत्तु बालकेनोक्तं, इति हेयं इत्यादि वाक्यैः एवमाचार्यजीमूतवाहनस्य ग्रन्थे परमतखण्डनेऽतिशय प्रवृत्तिर्दृश्यते।

यैः निबन्धकारैः मनोः प्रतिकूलानि वचनानि प्रमाणरूपेणोपस्थापितानि तानि न स्वीकृतानि आचार्यजीमूतवाहनेन। 'मन्वर्थ विपरीता तु या स्मृतिः सा न शस्यते'। इयं तस्य दृढ़धारणा। जीमूतवाहनेन पिण्डदातृत्वमेव धनग्रहणे कारणमिति दाढर्येन प्रतिपादितम्।

महामहोपाध्याय आचार्य जीमूतवाहनकृत-दायभागस्योपरि श्रीकृष्णतर्कालङ्कार भट्टाचार्यमहोदयकृता दायभागप्रबोधिनी नाम्नी टीका प्रसिद्धा वर्तते। (१५००-१५५०) खिस्ताब्दे अस्य रचना जाता इति ज्ञायते। टीकाकारस्य कथनमस्ति यत् धीराणां कृते दुरुहे दायभागे श्रीकृष्णविप्रो विवृत्तिं वितेने। इयं नितरगूढार्थानां प्रकाशिनी, विशदार्था, मनीषिणां मोदकरी वर्तते। अस्यारम्भे ग्रन्थकारेण लिखितं यत् जगदम्बिकायाः पादाम्बुजे हृदि निधाय विप्रः श्रीकृष्णवर्यः दायभागग्रन्थावबोधनाय सदैकरम्यां मिमाटीकां करोतीति—

**''पादाम्बुजे द्वे जगदम्बिकायाः श्रीकृष्णविप्रो हृदये निधाय।**
**करोति टीकामिह दायभागग्रन्थावबोधाय सदैकरम्याम्।।''**

**दायभागः**—महामहोपाध्यायजीमूतवाहनप्रणीते दायभागे पञ्चदशाध्यायाः सन्ति। येषु दायभाग निरुपणं, स्वत्वविचारः, विभागकालः, स्त्रीधनं, संसृष्टिधनं, औरसादिपुत्राणां भागकल्पना, वृत्तविभागसन्देह-निर्णयादि-विविधविषयाणां सयुक्तिकं विवेचनं कृतं वर्तते। इदानीं क्रमेण किञ्चित् विचार्यते—

**प्रथमाध्यायः**—ग्रन्थारम्भे विघ्नविघाताय देवतानामोच्चारणरूपं मङ्गलमाचरन् शिष्यप्रवृत्त्यर्थमभिदेय प्रयोजनसम्बन्धांश्च प्रदर्शयन् दायभागमुद्दिशति मन्वादीति। यस्मिन् दायभागे बुधानामपि, मृतधनं प्रथमं पुत्रस्य, पितुरेष पत्न्या एव वेति बहुप्रकारो विवादः तेषां प्रबोधाय मन्वादिवाक्यान् विमृश्य दायभागो निरुपणीय इति प्रतिज्ञातम्।

**दायभागनिरूपणम्**—नारदेनोक्तं स्वस्मृतौ—

**'विभागोऽर्थस्य पित्र्यस्य पुत्रैर्यत्न प्रकल्प्यते।**
**दायभाग इति प्रोक्तं तद्विवादपदं बुधैः।।'**

एतेन पित्रादिधनानां पुत्रादिभिर्यो विभागः स एव दायभागपदेनोच्यते। जीमूतवाहनानुसारं 'पितृत आगतं पित्र्यं पितृमरणोपजातस्वत्वमुच्यते। अत्र पित्र्यस्येति पुत्रैरिति द्वयमपि सम्बन्धिमात्रोपलक्षणं सम्बन्धिमात्र धनविभागेऽपि दायभाग पद प्रयोगात्, अतएव दायभागं विवादपदमुपक्रम्य नारदोऽपि मात्रादिधनमप्युपदर्शितवान्।' अतएवोपक्रमे मनुना पित्रादिपदं नोपात्तम्।

**एवं स्त्रीपुंसयोरुक्तो धर्म्मो वो रतिसंहितः।**
**आपद्यपत्यप्राप्तिश्च दायधर्मं निबोधत।।**

(म. स्मृ. ९।१०३)

इत्युपक्रम्य सम्बन्धिधन विभागमुक्तवान्। मनोर्बलत्वात् नारदानुरोधात् तस्य सङ्कोचं कर्तुं न शक्यते।

दायलक्षणम्—निघण्टुकारेण दायशब्दस्य लक्षणमेवं कृतम्

**'विभक्तव्यं पितृद्रव्यं दायमाहुर्मनीषिणः।'**

अनेन 'दाय' शब्दो रूढ इति प्रतीयते। विज्ञानेश्वरमित्रमिश्रप्रभृतिराचार्यैरपि दायशब्दस्य रूढत्वमेव स्वीकृतम्। किन्तु जीमूतवाहनमते दानसाम्यात् गौणः—

'दीयत इति व्युत्पत्त्या दायशब्दो, ददाति प्रयोगश्च गौणः मृतप्रव्रजितादि स्वस्वत्वनिवृत्तिपूर्वक परस्वत्वोत्पत्ति फलसाम्यात् न तु मृतादीनां तत्र त्यागोऽस्ति। ततश्च पूर्व स्वामिसम्बन्धाधीनं तत् स्वाम्योपरमे यत्र द्रव्ये स्वत्वं तत्र निरुढो दाय शब्दः।'

वीरमित्रोदये उपर्युक्तमतस्य खण्डनमपि दृश्यते। 'सर्वथाऽवयवार्थराहित्ये हि निरुढत्वं। न च योगरूढत्वं, अवयवार्थ बाधस्य स्वयमेवोपन्यासात्। गौणमवयवार्थ परिकल्प्य तदङ्गीकारस्य निष्प्रयोजनत्वमन्योन्याश्रयत्वमनुभव विरोधो व्याघातश्च।' तत्स्वाम्योपरम इति च जन्मनापि स्वत्वस्योपपादयिष्यमाणत्वादव्यापकम्।

विज्ञानेश्वरमित्रमिश्रप्रभृतिभिर्दायो द्विविधः स्वीकृतः। अप्रतिबन्धः सप्रतिबन्धश्चेति। परन्तु महामहोपाध्यायेन जीमूतवाहनेन एवं भेदो नोपस्थापितः।

**विभागलक्षणम्**—विज्ञानेश्वरप्रभृतिभिराचार्यैः विभागो नामानेकस्वाम्यानां द्रव्य-समुदायविषयाणां तदेकदेशेषु व्यवस्थापनमिति स्वीकृतम्। परन्तु आचार्यजीमूतवाहन-स्यमतं तु सर्वथा भिन्नम्। तदनुसारं भूहिरण्यादौ उत्पन्नस्य एकदेशोपात्तस्य तत्तदंशा-वच्छिन्नस्य विनिगमना इदममुकस्य नान्यस्येत्यवधारणरूपा तत्प्रमाणाभावेन वैशेषिक व्यवहारः परस्परनैरपेक्षेण दानविक्रयादि लक्षणः तदनर्हतया अव्यवस्थितस्य सतोऽप्य-सत्कल्पस्य गुटिका पातादिना व्यञ्जनं इदममुकस्येत्यवधारणं विभागः। पुनश्चोक्तम्—विशेषेण भजनं स्वत्वज्ञापनं वा विभागः पुरुषविशेष निरूपितांश विशेषनिष्ठत्वेन स्वत्वज्ञानानुकूलव्यापारलक्षणो विभागः।

**स्वत्वविचारः**—महामहोपाध्यायः जीमूतवाहनः अन्याचार्याणां सदृशं जन्मना स्वत्वं नाङ्गीकरोति किन्तु स्वामिना स्वत्वापगमे पुत्रादीनां स्वत्वं स्वीकरोति। तन्मते समस्तपितृधनगतस्वत्वोत्पाद-विनाशकल्पनागौरवात् यथेष्ट विनियोगफलाभावेनानु-पयोगात् जन्मना स्वत्वमिति न समीचीनम्।

**जन्मना स्वत्वं भवति स्वाम्युपरमाद् वा**—यद्यपि 'उत्पत्यैवार्थस्वामित्वं लभेत इत्याचार्य्याः इति गौतमवचनेन जन्मना स्वत्वं प्रतिपादितम्। पुनश्च लोकेऽपि जन्मना एव स्वत्वं प्रसिद्धम्। तथापि जीमूतवाहनमते स्वत्वं न तु जन्मना भवति अपितु स्वाम्युपरमादेव भवति।

**'ये जाता येऽप्यजाताश्च ये च गर्भे व्यवस्थिताः।**
**वृत्तिं तेऽपि हि काङ्क्षन्ति वृत्तिलोपो विगर्हितः।।'**

अनेन वचनेन मिताक्षराकारेण वीरमित्रोदयकारेण च तथा अन्यैरपि पैतृकधने जन्मना

एव स्वत्वमुत्पद्यते इति स्वीकृतम्। अपि च—

**'मणिमुक्ताप्रवालानां सर्वस्यैव पिता प्रभुः।**
**स्थावरस्य समग्रस्य न पिता न पितामहः।।'**

अत्र मणिमुक्तादिचलसम्पत्तौ पितुरेव स्वाम्यमुक्तं किन्तु स्थावरे तु पुत्रादीनामपि स्वत्व साधारणमिति दर्शितम्। तेन जन्मनैव स्वत्वं दृग्गोचरं भवति। किन्त्वात्रावधेयम्—यत पुत्रस्यजनकाधीनत्वाद् यथेष्ट विनियोगाधिकारो नास्ति स्वातन्त्र्येण। पुत्रादीनां स्वत्वेऽपि पिता कुटुम्बभरणादिषु धर्मकृत्येषु आवश्यककर्तव्येषु धनव्ययकरणेऽस्ति अधिकारी। किन्तु अन्यायपूर्वकं विक्रयदानादितत्कृतकार्यं स्वत्वात् पुत्रः निरोद्धुमर्हति।

जीमूतवाहनमते मरणप्रव्रज्यादिना सत्वनाशानन्तरं तेन सह सम्बन्धादेव निमित्तात पुत्रादीनां स्वत्वं भवति। उपर्युक्त गौतमवचनेन जन्मना स्वत्वं यदन्यैराचार्यैः प्रतिपादितं तत् सः न स्वीकरोति। तस्याभिमतं यत् पितृस्वत्वोपरमेऽङ्गजत्वस्य हेतुभूतेनोत्पत्तिमात्र सम्बन्धेनान्यसम्बन्धाधिकेन जनकधने पुत्राणां स्वाम्यात् तद्धनमेव पुत्रो लभते नान्यः सम्बन्धीति। अतएव वचनमिदं जन्मना स्वत्वमिति न समर्थयति। नारददेवलवचनविरोधात्[1]। मनोरेतद् वचनमपि जीवतोर्मातापित्रोस्तद्धने पुत्राणामस्वाम्यं दर्शयति।

**ऊर्ध्वं पितुश्चमातुश्च समेत्य भ्रातरः समम्।**
**भजेरन् पैतृकं रिक्थमनीशास्ते हि जीवतोः।।**

—म. स्मृ. ९।१०४

मनुना इत्यपि उक्तम्—

**भार्या पुत्रश्च दासश्च त्रय एवाधनाः स्मृताः।**
**यत्ते समधिगच्छन्ति यस्यते तस्य तद्धनम्।।**

—म. स्मृ. ८।४१६

अनेन स्वार्जितेऽपि धने तेषामनधिकारो दृश्यते कुतो वा पुनः पैतृकधनेऽधिकारः। महाभारतेऽप्येवमुक्तं महर्षिणा व्यासेन[2]।

यदि जन्मनैव पुत्रादीनां पित्रादिधने स्वत्वं स्यात् तर्हि 'जातपुत्रः कृष्णकेशोऽग्नीनादधीत' इत्यादि श्रुति वचनात् द्रव्यसाध्येऽग्न्याधानादि कर्मणि पित्रादीनामनधिकारः प्रसज्येत अननुमत्या तु साधारणद्रव्यस्य दानमेव न सम्भवति। पुत्रोऽपि अग्न्याधानादि वैधकर्मणि पितुरादेशेनैव धनव्ययकर्तुं पार्यते। अतएव जन्मना स्वत्वमिति कथनं न शोभनम्।

---

१. पितर्यूर्ध्वं गते पुत्रा विभजेयुर्धनं पितुः। — नारदः
पितर्य्युपरते पुत्रा विभजेयुर्धनं पितुः।
अस्वाम्यं हि भवेदेषां निर्दोषे पितरि स्थिते।। —देवलः

२. त्रयः किलेमे ह्यधना भवन्ति दासः पुत्रश्चास्वतन्त्रा च नारी। —म० सभा० ७१।१

**भर्त्रा प्रीतेन यद्दत्तं स्त्रियै तस्मिन्मृतेऽपि तत्।**
**सा यथा काममश्नीयाद्द्याद्वा स्थावरादृते।।** —वि. स्मृ.

उपर्युक्त विष्णुवचनात् प्रीतिदानादिषु भर्त्रा स्त्रियै स्थावरं न प्रीत्या देयमज्ञानाद्दत्तमपि तेन पुत्रादिभिरपहृत्य विभजनीयमस्थावरं तु प्रत्याहर्तव्यम्। अत्रापि न जन्मना स्वत्वम्।

जन्मकालादारभ्य पिता अन्नवस्त्रौषधिभिः पुत्रस्य पालनं करोति। तस्य यथा कालं संस्कारानपि करोति किन्तु तत्र यो धनव्ययो भवति तत्कृते पुत्रस्यानुमतिः नापेक्षते। अतः जन्मना एव भवति स्वत्वं अस्य कृते न किमपि प्रमाणम्। वस्तुतः मरणादनन्तरं, संन्यासग्रहणोपरान्तं, वैराग्यं प्राप्य अथवा पतनादनन्तरं स्वामिस्वत्वनाशो भवति तस्मात् पश्चात् स्वत्वमुत्पद्यात इति जीमूतवाहनाचार्याणामभिमतम् मित्रमिश्रस्यामिमतमस्मिन् विषये यत् यदि जन्मना स्वत्वमस्वीकृत्य स्वामीमरणादनन्तर स्वत्वमिति स्वीक्रियेत् तर्हि यदि धनस्वामिनः मरणादनन्तरं विभागे कृते तदानीं पुत्राणां स्वत्वाभावात् तद्धनं तु यस्य कस्यापि भवितुमर्हति। अतः मनुवचनं जन्मना स्वत्वं न निराकरोति अपितु जीवति पितरि धनव्ययीकरणे पुत्राणां स्वाधीनत्वमेव वारयति।

**स्वत्वं शास्त्रैकसमधिगम्यं लौकिकं वा ?**—आचार्यः जीमूतवाहनः स्वत्वं शास्त्रैकसमधिगम्यमिति स्वीकरोति न तु लौकिकम्। तस्याभिमतं यदि स्वत्वस्य लौकिकत्वं स्वीक्रियते, तदाऽधोलिखितस्य गौतमस्य वचनस्य व्यर्थत्वमेव। गौतम वचनम्—'स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु ब्राह्मणस्याधिकं लब्धं, क्षत्रियस्य विजितं निर्विष्टं वैश्यशूद्रयोरिति।' अत्र रिक्थम् = अप्रतिबन्धोदायः, क्रयः = समुचितमूल्य दानेन द्रव्य स्वीकारः प्रसिद्ध एव, संविभागः = दायस्यैवैकदेशनिष्ठस्वामित्वव्यञ्जको विभागः अथवा शब्दान्तरेण द्रव्यविशेषेषु विभागपूर्वकं स्वत्वज्ञापनं सप्रतिबन्धदायस्य, परिग्रहः = पूर्वमपरेणास्वीकृतस्यारण्यादि साधारण प्रदेशसम्बन्धिनस्तृणजलकाष्ठादेर्ममेदमिति बुद्ध्या स्वीकरणम्। अधिगमः = अज्ञातस्वामिकस्य निध्यादेः प्राप्तिः। एते रिक्थादयस्तु पञ्च सर्वसाधारणाः स्वत्वहेतवः चतुर्णां वर्णानां ब्राह्मणादीनाम्। एवं हि ब्राह्मणस्य प्रतिग्रहादिप्राप्तं, क्षत्रियस्य युद्धविजयदण्डादि प्राप्तं, वैशस्य कृषिगोरक्षणादि भृतिलब्धं तथा शूद्रस्य द्विजशुश्रूषादि भृतिलब्धमसाधारणम्।

यतो हि धर्मसूत्रकारेण गौतमेन स्वत्वनिमित्तान्यैतानि स्वीकृतानि ततस्तु शास्त्रैकसमधिगम्यमेव स्वत्वम्।

स्वत्वस्य शास्त्रीयत्वाभावे 'अदत्तादायिनोश्चौरस्य हस्ताद्यो ब्राह्मणो याजनाध्यापनप्रतिग्रहैरपि परकीय धनं ज्ञात्वा लब्धुमिच्छेत्, स चौरवच्चौरतुल्यो ज्ञेयः, अतः स एव दण्ड्यः' इति मनोर्मतस्य संगतिर्न भवेत्। अत्र द्रव्यदातुश्चौर्यधने चौरस्य न स्वत्वमतः तत्प्रतिग्राहिणोऽपि ब्राह्मणस्य न केवलं स्वत्वाभाव अपितु स दोषभाजमनपि जायते।

स्वत्वस्य लौकिकत्वे सति धनापहर्तुरिव स्वत्वमपहृतधने भविष्यति येन यस्य

धनमपहृतं सः त्वनेन मम धनं बलात् गृहीतमित्यपि वक्तुं न पार्यते। अतः स्वत्वं शास्त्रैकगम्यमित्याचार्येण जीमूतवाहनेनाङ्गीक्रियते।

शास्त्रेषु कुत्रापि विभागस्य स्वत्वकारणनिर्देशाभावात् यद्यपि विज्ञानेश्वर प्रभृतिभिराचार्यैः नाङ्गीकृता विभागस्य स्वत्वकारणता किन्तु आचार्यप्रवरस्य जीमूतवाहनस्य दृढाभिमतं यत् विभागादेव स्वत्वं न तु स्वत्वस्य सतो विभागः ''पितर्यूर्ध्वगते पुत्रा विभजेयुर्धनं पितुः'' इति नारद वचनात्।

**धनसामान्यविभागकालः**—सामान्यरूपेण धनविभागस्य कालत्रयं प्रतिपादितम्।

१. ऊर्ध्वं पितुः पुत्रा रिक्थं विभजेरन्। —गौतमः

अत उर्ध्वं पितुः पुत्रा विभजेयुर्धनं समम्। —नारदः

एवं हिमनुनाऽप्युक्तम्।[1] पित्रोर्मरणानन्तरं पुत्राणामिच्छया एको विभाजन कालः।[2]

२. 'मातुर्निवृत्ते रजसि' इति 'बृहस्पतिवचनाच्च' निवृत्त रजस्कायां मातरि निवृत्तरमणे पितरि द्रव्य तदनिच्छयाऽपि पुत्राणामिच्छया द्वितीयो विभाग कालः।

३. 'पुनः जीवति चेच्छति' इति गौतम धर्मसूत्रे गौतम वचनात् जीवति पितरि तदिच्छया विभागस्य तृतीयकालः। याज्ञवल्क्येनापि एवं प्रोक्तम्—

'विभागे चेत् पिता कुर्यादिच्छया विभजेत्सुतान्।'

**पितृधनविभाग कालः**—जीमूतवाहनेन पितृधनविभागस्य कालद्वयं प्रतिपादितम्। तन्मते सामान्येन धनविभागस्य कालत्रयमिति प्रतिपादिते सति, पितृधनस्य विभाग यदा माता निवृत्तरजस्का भवति तदा एव भवेत् इति प्रतीयेत, येन 'ऊर्ध्वं विभागाज्जातस्तु पित्र्यमेव हरेद्धनमिति मनुवचनेन सह संगतिर्न भवेत्। यतोहि जनन्यः रजोनिवृत्तेरनन्तरं पुत्रोत्पत्तिर्न भवति। अतः रजोनिवृत्तेरनन्तरं यदि विभागः क्रियते तदा विभागानन्तरोत्पन्नस्य पितृभागग्रहणविधानस्य वैय्यर्थ्यमेव। मनुना 'त्रिंशद्वर्षोद्वहेत् कन्यां हृद्यां द्वादशवार्षिकीम्' इत्युक्त्वा विवाह कालस्य विधानं कृतं वर्तते एवं हि 'वनं पञ्चाशतो व्रजेत्' इत्युक्त्वा वानप्रस्थाश्रमगमनकालस्यापिविधानं कृतम्। तदा मातुः (३२ वर्षे वयसि) रजोनिवृत्तेरसम्भवे पितरि चोपरतस्पृहे वानप्रस्थे पुत्राणामिच्छया विभागाभावप्रसङ्गः।

निर्विशेषणमुपरतस्पृहत्वमेव पितृधन विभागकाल इति चेन्न अनुपरतस्पृहे पितरि पतितेऽप्यविभाग प्रसङ्गात् अयमप्यपरः काल इत्यभिधाने कालचतुष्टयापत्तिः पितुरुपरमः, पतितत्वं, निस्पृहत्वं, इच्छा चेति।

किन्त्वत्र पतितत्वनिस्पृहत्वोपरमैः तिसृणां दशायां स्वत्वापगमः। अतः त्रयाणां कृते स्वत्वापगम इति एकः कालोऽपरश्च सति तत्स्वत्वे तदिच्छात इति कालद्वयमेव युक्तम्।

---

१. म. स्मृ. ९।१०४

२. पित्रोरभावे भ्रातृणां विभागः सम्प्रदर्शितः —बृहस्पतिः

एवं प्रथमाध्याये दायनिरूपणं, स्वत्वविचार:; विभागकाल:; पितृधनविभागकालश्च इति चत्वार: विषया विवेचिता: दायभागे जीमूतवाहनकृते।

एवं जीमूतवाहनानुसारं पितृधनविभागस्य कालद्वयम्—

१. पितु: स्वत्वापगम इत्येक: काल: (तत्र स्वत्वापगम: पतितत्वनिस्पृहत्वोपरमैर्वा भवेत्)

२. स्वते सति जीवति तस्येच्छेति द्वितीय: काल:।

**पितामहधनविभागकाल:**—आचार्यजीमूतवाहन: पितृवत् पितामहधनविभागस्यापि कालद्वयं स्वीकृतवान्—

१. पित्रोरभाव इत्येक: काल:।

२. मातुर्निवृत्ते रजसि पितुरिच्छात इति द्वितीय: काल:।

किन्त्वत्र वीरमित्रोदयकार: जीमूतवाहनमतमपास्य मिताक्षराकारमतं समर्थयति। वस्तुतस्तु पितामहधने ''भूर्याप्रितामहोपात्ता'' इत्यादिना सदृशस्य पितापुत्रस्वाम्यस्य वक्षमाणत्वात् पुत्रेच्छयाऽपि तस्य विभाग उचित एव। अत: स्वातन्त्र्यार्हे पितरि जीवति तदिच्छैव विभागनिमित्तम्। पातित्यपारिव्रज्यादिभिस्तदनर्हे पुत्रेच्छाऽपि। तदुपरमे तु स्वेच्छाया निमित्तत्वमर्थ सिद्धयमिति कालत्रयमेवानेन प्रकारेणादत्तव्यम्।

**पितामहधने पितुर्भागा:**—आचार्यजीमूतवाहनेन पितामहधने पितुरंशद्वयं स्वीकृतम्। विभागोऽपि पितुरिच्छया एव स्यात्।

**भूर्या पितामहोपात्ता निबन्धो द्रव्यमेव वा।**
**तत्र स्याद् सदृशं स्वाम्यं पितुः पुत्रस्य चोभयोः।।**

—याज्ञ. स्मृ. २।१२१

श्लोकमिममाश्रित्य विज्ञानेश्वरमित्रमिश्रयोर्मतं यदत्र पितापुत्रयो: समांशकीर्तनात् विषमविभागं कर्तुं न शक्नोति अत: अत्र पितुरंशद्वयं पित्रिच्छाया: नियामकत्वं नोचितम्। किन्तु जीमूतवाहनेन स्वमतस्य पोषणार्थं सदृशं स्वाम्यमित्यस्य स्वाम्यं नामाधिकारित्वं समं न समानोंश इत्यर्थ: गृहीत:।

एवं हि—

**द्रव्ये पितामहोपात्ते स्थावरे जङ्गमे तथा।**
**सममंशित्वमाख्यातं पितुः पुत्रस्य चैव हि।।** —बृहस्पति

अस्मिन् बृहस्पति वचने अंशित्वं इत्यस्यार्थ: अंशभाक्त्वं समं न पितापुत्रयो: समानांश इति। 'स यद्येकपुत्र: स्यादात्मनो द्वौ भागौ कुर्यादिति शङ्खलिखितवचनमनुसृत्य। जीमूतवाहनानुसारं यदि स पिता एकस्य पुत्र: एक पुत्र: एकपितृक औरसपुत्र: स्यात्तर्हि स्वयमेव भागद्वयं गृह्णीयात्। यदि स द्विपितृक: (क्षेत्रजादि पुत्ररूपेण) तर्हि पुत्रै: सह सममंशं लभेत्। तन्मते।

**'जन्मविद्यागुणज्येष्ठो द्वयंशं दायादवाप्नुयात्।**
**समांशभागिनस्त्वन्ये तेषा पितृसमस्तु सः।।** —बृहस्पति

इति बृहस्पतिवचनानुसारेण पिता पुत्रापेक्षया पितामहधने भागद्वयं प्राप्तुमर्हति यतो हि जन्मनाऽनेकोपकारित्वेन च तस्य पुत्रापेक्षया श्रेष्ठत्वं ज्येष्ठत्वं च निर्विवादरूपेण सिद्धम्।

यदि पिता (कश्चिद्जनः) स्वभ्रात्रपेक्षया यदि जन्मविद्यागुणजेष्ठत्वेन अंशद्वयं प्राप्तुं शक्नोति तथैव सः स्वपितृधनादपि कथमंशद्वयं न प्राप्तुं शक्नोति अर्थात् शक्नोत्येव।

अतः पितामहधने पितुरंशद्वयं पुत्राणामेकैकोंऽशः इति जीमूतवाहनस्य दृढाभिमतम्।

आचार्यमित्रमिश्रेण वीरमित्रोदयस्य व्यवहारप्रकाशे अत्र संशोधनपूर्वकं मतमेतन्निराकृतम्। तदनुसारं यदि पुत्रो गुणवत्तया स्वजीवनयापने धनादिभिः समर्थश्चेत् तर्हि तेन सह विभागे पितामहधने पिताऽऽत्मनो भागद्वयं कुर्यात्। अत्र एक इत्यस्यार्थः सर्वगुणोपेतः पुत्र इति। व्यवहारपारिजातककारेणापि एकशब्दोऽत्र श्रेष्ठवाची इति लिखितम्।

**पुत्रार्जितधने पितुरंशः**—आचार्यस्य कात्यायनस्यवचनं वर्तते यत्—

**द्वयंशहरोऽर्द्धहरो वा पुत्रवित्तार्जनात् पिता।**
**माताऽपि पितरि प्रेते पुत्रतुल्यांश भागिनी।।**

उपर्युक्तश्लोकमुपन्यस्य जीमूतवाहनेन पुत्रार्जितधने पितुरंशद्वयं स्वीकृतम्। तदनुसारं पुत्रवित्तार्जनं नाम पुत्रस्यवित्तार्जनमिति, वित्तस्यार्जन वित्तार्जनमिव। तस्मात् पुत्रार्जितधनात् स्वार्जितधनमिव पितुरंशद्वयम्। अत्र पुत्रश्च वित्तञ्च इति पुत्रावित्ते तयोरर्जनादिति नास्ति।

अस्य तात्पर्यमिदं यत् यदि पितृद्रव्यस्योपयोगेन पुत्रस्य वित्तार्जन भवति तर्हि तस्माद्धनात् यदर्जितं तेन पितुरर्ध भवति। यत् शेषार्द्धं तत्रार्जकत्वेन पुत्रस्यांशद्वयं अन्येषां भ्रातृणामेकैकांशः। किन्तु यदि पुत्रः पितृधनेन विना स्वपौरुषेण धनार्जनं करोति तर्हि तस्माद्धनार्जनात् पितृत्वेन पितुरंशद्वयं तथाऽर्जकत्वेनार्जकपुत्रस्यांशद्वयमन्येषां भ्रातृणामंशहरत्वं नास्ति।

किन्त्वत्र मित्रमिश्रप्रभृतिभिराचार्यैः स्वार्जिते धने तु पितुरंशद्वयं स्वीकृतं किन्तु पुत्रार्जिते धने तु पितापुत्रयोः समो भागः स्वीकृतः क्रमेणोपकारित्वात् श्रेष्ठत्वाच्च तथा अर्जकत्वाद्।

जीमूतवाहनाचार्येण स्वदायभागे द्वितीयाध्याये पितामहधनविभागकालस्य चर्चां कृत्वा तृतीयेऽध्याये परिच्छेदद्वये पितृपरमानन्तरं भ्रातृकर्तृकविभागप्रकारस्य तथा सवर्णभ्रातृणां विभागप्रकारस्य विवरणमुपस्थापितम्।

भ्रातृकर्तृकविभागः—यथा मनुना उक्तम्—

**ऊर्ध्वं पितुश्च मातुश्च समेत्य भ्रातरः समम्।**
**भजेरन्पैतृकं रिक्थमनीशास्ते हि जीवतोः।।**

—म. स्मृ. ९।१०४

अत्र मातरि जीवन्त्यां सत्यपि पित्रुपरमाद्धनस्वामित्वे धर्म्यो न विभागः सोदराणां भवतीति कथ्यते। उभयोरुपरमे सोदराणां पैतृकधनविभागस्य ज्ञापनम्।

अत्रावधेयं यत् मातापित्रोः मरणादनन्तरमेव भ्रातरो विभजेरन्। यथा याज्ञवल्क्यः—

**विभजेरन् सुताः पित्रोरूर्ध्वमृक्थ ऋणं समम्।**
**मातुर्दुहितरः शेष ऋणात्ताभ्य ऋतेऽन्वयः।।** —याज्ञ. स्मृ. २।११८

महर्षिणा व्यासेनापि उक्तम्—

**भ्रातृणां जीवतोः पित्रोः सहवासो विधीयते।**
**तदभावे विभक्तानां धर्मस्तेषां विवर्धते।।**

अत्र सहवासविधानमाध्यमेन व्यासेन पृथक् भावस्य निषेधः कृतः। एकस्मिन्नपि जीवति विभागो न धर्म्यः किन्तु उभयोरभावे एव इति ध्वन्यते।

यद्यपि ब्रृहस्पतिना मातुर्निवृत्ते रजसि जीवतो विभागः स्वीकृतः अन्यथा तु पित्रोरभावे एव। एतदर्थं जीवन्त्यां मातरि मातृ प्रधानकं विभागं निर्दिशति। यथा—

**समान जाति सङ्ख्या ये जातास्त्वेकेन सूनवः।**
**विभिन्नमातृकास्तेषां मातृभागः प्रशस्यते।।**

अत्रापि मातुरेवायं विभागो न पुत्राणामित्युद्दिश्य विभागः कर्तव्यः। इतरमातृधनवत् मातरि जीवन्त्यां मातुरनुमतिविना धनविभाजनस्य न स्वातन्त्र्यम्।

विभागे धर्मवृद्धिरिति गौतमधर्मसूत्रादिषु यत्र कुत्रापि वर्णितं तत् सर्वमपि मातुः निधनादनन्तरमेव।

यदि अविभक्ता एव स्थातुमिच्छन्ति तदा 'ज्येष्ठ एव तु गृह्णीयात् पित्र्यं धनमशेषतः। इति मनु वचनात् तस्यैव अधिकारः तत्र इतरे पितरमिव तमुपजीवेयुः। किन्त्वत्र नारदेनोक्तं यत् शक्तः सन् कनिष्ठोऽपि सर्वान् विभृयादिति। अतः मध्यमोप्यत्र दण्डापूपन्यायात् सिद्ध एव। अयं उत्पत्तिक्रमेण नाधिकार क्रमः।

यदा चैक पुत्रोऽस्ति अपरस्य पुत्रस्य पुत्राः सन्ति तदा भागद्वयं भवति एकं तस्य अपरस्मिन् भागे भ्रातृपुत्राणां विभागो भविष्यति।

अत्र याज्ञवल्क्येनोक्तम्—

**'अनेक पितृकाणां तु पितृतो भागकल्पना'। इति।**

या. स्मृ. २।१२०

अत्र यदिऽविभक्ता भ्रातरः पुत्रानुत्पाद्य दिवंगतास्तदैकस्य द्वौ पुत्रावन्यस्य त्रयोऽपरस्य चत्वार इति पुत्राणां वैशम्येऽपि तत्र द्वावेकं स्वपित्र्यमंशं, अन्ये त्रयोऽपि एकं स्वपित्र्यमंशं तथा तथैव चत्वारोऽपि स्वपित्र्यं एकमेवाशं लभन्ते।

आचार्येण जीमूतवाहनेन दायभागस्य तृतीयाध्यायस्य प्रथम परिच्छेदे विषयोऽयं निरूपितः।

**सवर्णभ्रातृणां विभागप्रकारः**—आचार्येण जीमूतवाहनेन तृतीयाध्यायस्य द्वितीये परिच्छेदे सवर्णभ्रातृणां विभागप्रकारः निर्दिष्टः।

जीमूतवाहनस्तु सर्वभ्रातृणां समभागं दर्शयति। यतोहि सवर्णभ्रातृणां विभागो विंशोद्धारादि पूर्वको वा सम एव वेति विकल्पः।

उद्धारमन्तरेणापि समविभागमाह। 'पितरीत्यनुवृत्तौ हारीतः। समानतो मृते रिक्थविभागः।

याज्ञवल्क्य स्मृतौ—

**'विभजेरन् सुताःपित्रोरुर्ध्वं रिक्थमृणं समम्'।**

—या. स्मृ. २।११७

किन्तु मनुस्मृतौ—

**'ज्येष्ठस्य विंश उद्धारः सर्व द्रव्याच्च यद्वरम्।**
**ततोऽर्धं मध्यमस्य स्यात्तुरीयं तु यवीयसः।।**

—म. स्मृ. ९।११२

इत्यादिभिः अनेकैः श्लोकैः विषमो विभागो दर्शितः। अतः सर्वस्मिन्नपि काले विषमो विभागोऽस्तीति कथं सममेव विभजेरन्निति नियम्यते।

अयं विषमो विभागः शास्त्रदृष्टस्तथापि लोकविद्विष्टत्वान्नानुष्ठेयः।—'अस्वर्ग्यं लोकविद्विष्टं धर्म्यमप्याचरेन्नतु' इति निषेधात्।

अतः सोद्धारानुद्धारभागयोर्विकल्पः।

जीमूतवाहनमते उद्धारानुद्धारयोरुभयोः शास्त्रीयत्वाद् विकल्पः समीचीन एव। भक्त्यतिशयेन भ्रातृणामुद्धारानुमतेरपि अद्यतनानां भक्त्यतिशयाभावात् समभाग एव लोके दृश्यते।

यस्तु स्वयोग्यताबलात् पितृपितामहादिधनविभागे निस्पृहः सन् धनं न कामयते, तस्मै तदंशात् किञ्चिदेव दत्त्वा शेषं पुत्रादेः कालान्तरीयदुरन्ततानिरासार्थं विभजनीयः। 'शक्तस्यानीहमानस्य किञ्चिद्दत्त्वा पृथक् क्रिया।' इति। याज्ञवल्क्य वचनात्। मनुनाऽपि प्रसङ्गेऽस्मिन् उक्तम्—

**'भ्रातॄणां यस्तु नेहेत धनं शक्तः स्वकर्मणा।**
**स निर्भाज्यः स्वकादंशात् किञ्चित् दत्त्वोपजीवनम्।।**

—म. स्मृ. ९।२०७

अत्रोभययोर्वचननयोराशयः यत् सहैव निवसत्सु भ्रातृषु यदि कश्चिद् स्वस्थः कार्यकुशलो भूत्वाऽपि यद्यालस्यात् किञ्चित् कर्मकर्तुं न प्रभवति तर्हि तस्मै किञ्चित् जीवनार्थं द्रव्यं दत्त्वा स भागहीनः कार्य इत्यर्थः समीचीन प्रतीयते न त्वसारवस्तु-प्रदानं तण्डुलप्रस्थदानवत्।

पितरि चोपरते सोदरभ्रातृभिर्विभागे क्रियमाणे माताऽपि पुत्रतुल्यांशं गृह्णीयादित्युक्तम् —'समांश हारिणी मातेति वचनात्। यदि ताभिर्मातृभिः स्त्रीधनं स्वीकृतं पूर्वं तर्हि पुत्रांशस्यार्धकमेवार्हति न तु तुल्यम्। जीमूतवाहनानुसारमत्र मातृपदस्य जननीपरत्वात् सपत्नीमातॄणां न भागः।

पुत्रभागानुसारेण यथावर्णक्रमेण पुत्राणां चतुस्त्रिद्व्यैकभागिता वर्तते तथा अविवाहितानां दुहितॄणां पुत्रभागमनुसृत्य तच्चतुर्थांशः। यथाह बृहस्पतिः—

**समांशामातरस्त्वेषां तुरीयांशाश्च कन्यकाः।**

अयं चतुर्थांश नियमः पितुरल्पधने सति ज्ञातव्यः, न तु प्रचुरधने सति तदा तु विवाहोचितं धनमेव दातव्यम्।

एतच्च कन्यापुत्रयोः समसंख्यत्वे न तु विषमसंख्यत्वे तत्र तु कन्याया एव बहुतरधनं वा स्यात् पुत्रस्य वा निर्धनता स्यात्।

पित्रर्थेऽविद्यमानेऽपि स्वांशादुद्धृत्य पूर्वसंस्कृतैः भ्रातृभिः भ्रातॄणां संस्कारः अवश्यमेव कार्य इति नारदस्यादेशः। यथा—

**अविद्यमाने पित्रर्थे स्वांशादुद्धृत्य वा पुनः।**
**अवश्यकार्याः संस्कार भ्रातृभिः पूर्व संस्कृतैः।।**

—ना. १३।३४

किमत्र भगिनीनां संस्कारस्य निरंशतापि न दोषायेति। तदयुक्तं जीमूतवाहन-मतानुसारेण। यतोहि—'कर्तव्या भ्रातृभिस्तेषां पैतृकादेव तद्धनात्' इति नारदस्यापर-वचनादपि येषां तेषामिति पुंलिङ्ग निर्देशात् उपर्युक्त वचनं भ्रातृसंस्कारार्थमेव न तु भगिनीसंस्कारपरम्।

पूर्वोक्त विषये मित्रमिश्रविज्ञानेश्वरप्रभृतिभिराचार्यैः मनुयाज्ञवल्क्यादिवचनानामाशयो भ्रातृभागानुसारेण तच्चतुर्थांशो भगिन्या इति स्वीकृतः।

दायभागस्य चतुर्थाध्यायः परिच्छेदत्रयेषु विभक्तः प्रथम परिच्छेदे स्त्रीधननिरूपणं द्वितीये स्त्रीधनविभागचर्चा तृतीये च अप्रजः स्त्रीधनाधिकारिणां चर्चा कृता वर्तते। अत्रापि अन्याचार्येभ्यः जीमूतवाहनस्य मतं भिन्नम्।

**स्त्रीधननिरूपणम्**— विज्ञानेश्वरमित्रमिश्रप्रभृतिभिराचार्यैः स्त्रीस्वामिकं धनं स्त्रीधन-मित्युक्त्वा स्त्रीधनशब्दस्य यौगिकत्वं स्वीकृतं न तु पारिभाषिकत्वम्। आचार्यजीमूतवाहन-महोदयस्य मतानुसारेण स्त्रीधनशब्दस्तु पारिभाषिकः न तु यौगिकः यथा स्त्रिया अर्जितं धनं स्त्रीधनम्। यथा मनुना उक्तमस्ति—

**भार्या पुत्रश्च दासश्च त्रय एवाधनाः स्मृताः।**
**यत्ते समधिगच्छन्ति यस्यैते तस्य तद्धनम्।।**

—म. स्मृ. ८।४१६

अत: स्त्रीणामनधिकारत्वात् स्त्रिया धनं स्त्रीधनमिति कथं स्यात्। तत्र तु पूर्वोक्तमनुवचनेन भर्तुरेव स्वामित्वम्। अस्मिन् विषये जीमूतवाहनस्य कथनं यत् धनविशेषे स्त्रीधनं पारिभाषिकरूपेणाभिदधाति यथा विष्णुवचनम्—

**पितृमातृसुतभ्रातृदत्तमध्यग्न्युपागतम् ।**
**आधिवेदनिकं बन्धुदत्तं शुल्कान्वाधेयकम्।।** —वि. स्मृ १७।१८

एवं हि मनुना (९।१९४) कात्यायनेन, नारदेन (१३।८) तथा याज्ञवल्क्येनापि (२।१४४) स्त्रीधन विषये स्वाभिमतं प्रकटीकृतम्। यद्यपि मनुना षड्विधं स्त्रीधनं स्वीकृतं तत् तु न्यूनसंख्यानिरासार्थं न तु अधिक संख्या व्यवच्छेदाय यतो हि अन्यैः स्मृतिकारैः षड़तिरिक्तानि अन्वाधेयाधिवेदनिकादीनि स्त्रीधनानि स्वीकृतान्येव।

अत्र पित्रोश्च सकाशात् विवाहात् परतो लब्धं तथा भर्तुः सकाशात् श्वशुरादितो वा यल्लब्धं तदन्वाधेयम्, पितृमातृकुलात यल्लभते धनं भर्तृगृहं नीयमाना तदध्यावाह-निकम्, यच्च द्वितीयस्त्री विवाहार्थिना पूर्वस्त्रियै पारितोषिकं धनं दत्तं तदाधिवेदनिकम्, एतत् सर्वं स्त्रीधनम्।

वर्तमानेऽपि 'हिन्दुविधिशास्त्रे स्त्री स्वामिक' धनं स्त्रीधनं मुद्घोषितम्। वर्तमाने एकादशविधं कल्पितम्— १. पितृदत्तम्, २. मातृदत्तम्, ३. भ्रातृदत्तम्, ४. भर्तृदत्तम्, ५. अग्न्युपागतम्, ६. अधिवेदनिकम्, ७. अन्वाधेयम्, ८. अध्यावाहनिकम्, ९. पाद वन्दनादिकम्, १०. शुल्कम्, ११. पुत्रदत्तम्।

स्त्रीणां केवलं स्वामित्वं यस्मिन् धने तद् स्त्रीधनं मुख्यतः भागत्रये तस्य प्राप्तिः दर्शयितुं शक्यते।

(क) विवाहात् प्राग् पितृमातृकुलात् यत् प्राप्तम्।

(ख) वाग्दानावसरे वरपक्षतः उपहाररूपेण यल्लब्धम्।

(ग) विवाहसमये पतिगृहगमनावसरे स्वजनानां पक्षतः यद्धनं प्राप्तम्।

**स्त्रीधनविभागक्रमः**—दायभागस्य चतुर्थाध्यायस्य द्वितीय परिच्छेदे स्त्रीधन-विभागः निर्दिष्ट आचार्यजीमूतवाहनेन। अस्मिन् विषये आचार्यस्य मनोर्वचनम्—

**'जनन्यां संस्थितायां तु समं सर्वे सहोदराः।**
**भजेरन्मातृकं रिक्थं भगिन्यश्च सनाभयः।।'**

—म. स्मृ. ९।१९२

यदनुसारं मातरि मृतायां सोदर्य भ्रातरो भगिन्यश्च सौदर्या अनूढा मातृधनं समं कृत्वा गृह्णीयुः। अत्र पुत्र कुमारी दुहित्रोस्तुल्योऽधिकार उक्तः। जीमूतवाहनानुसारं एतयोश्चैकतराभावे तद्धनमप्यैकतरस्य। द्वयोरप्येतयोरभावे तु ऊढायाः पुत्रवत्याः। तदभावे सम्भावितपुत्रायाश्च तुल्योऽधिकारः स्वपुत्रद्वारेण पार्वणपिण्डदान सम्भवात्। अतः

दुहित्रभावे दौहित्रोऽपि धनभाक् भवति। स्त्रीधनेषु यत् यौतुकं[1] धनमर्थात् विवाहकाले लब्धं तत् कुमारीणामेव। यथा मनुना उक्तम्—

**'मातुस्तु यौतकं यत्स्यात्कुमारीभाग एव सः।**
**दौहित्र एव च हरेदपुत्रस्याखिलं धनम्।।**

—म. स्मृ. ९।१३१

यदनुसारं मातुर्यद् यौतुकं धनं तत्तस्यां मृतायां कुमारीभाग एव स्यान्न पुत्राणां तत्र भागः। अत्र कुमारी चानूढाऽभिप्रेता गौतमोऽपि—

**'स्त्रीधनं दुहितृणामदत्तानामप्रतिष्ठितानां च'।**

आचार्य जीमूतवाहनमते कुमारीणामभावे विवाहितानाम्। तास्वपि प्रथमं केवलं विवाहितानां। तदभावे परिणीतानां (भर्तृगृह गतानाम्) सर्वदुहित्रभावे च पुत्राणामधिकारः। पुत्राभावे दौहित्री तदभावे दौहित्रो धनाधिकारी भवति।

अत्र विज्ञानेश्वरमित्रमिश्रयोर्मते भिन्ने। विज्ञानेश्वर मतेन ऊढास्वपि अपुत्रा निर्धना प्रथमं धनाधिकारिणी भवति। तथा दौहित्राणामभावे पुत्राः धनं गृह्णन्ति तदभावे पौत्रादयः।

आधुनिक हिन्दुविधौ अवैधसन्तानानामपि स्त्रीधनेऽधिकारः स्वीक्रियते किन्तु वैधसन्तानानामग्राधिकारो दीयते। एवं हि यदि स्त्रीधनाधिकारिणी स्त्री अविवाहितावस्थायां म्रियते तदा तस्य धने क्रमेण सहोदरा, भिन्नोदरः, माता, पिता, पितृष्वसा मातृष्वसा चाधिकारिणी भवति। वाग्दानावसरे धनं प्राप्य यदि म्रियते तदा विवाहाभावे तद्धनं प्रत्यर्पणीयं वर पक्षं प्रति[2]।

**अप्रजः स्त्रीधनाधिकारिणः**—दायभागे अस्य चर्चा चतुर्थाध्यायस्य तृतीये परिच्छेदे कृता वर्तते। महामहोपाध्यायजीमूतवाहनस्य मतानुसारं अप्रजस्त्रीधनं ब्राह्मादिगान्धर्वान्त पञ्चविवाहेषु भर्तृगामी। अत्रावधेयं यत् विज्ञानेश्वरमित्रमिश्रप्रभृतिभिराचार्यैः ब्राह्मादयः चत्वार एव विवाहाः स्वीकृतः न तु गान्धर्वः किन्तु मनुनाऽपि प्रोक्तं यत् 'ब्राह्मदैवार्षगान्धर्वप्राजापत्येषु यद्वसु। इति। जीमूतवाहनानुसारं भर्तृभावे प्रथमं भर्तुः कनीयान् भ्रातः।

(तत् पिण्ड-तद्भर्तृपिण्ड-तद्भर्तृदेय पूर्वत्रिपुरुषपिण्डदातृत्वात्), तदभावे तद्भर्तृभ्रातृसुतः, तदभावे भगिनी पुत्रः, मातृष्वसुर्धनेऽधिकारी भवति। तद्भावे स्वभर्तुर्भगिनी सुतः मातुलानीधनाधिकारी, तदभावे स्वभ्रातृसुतः पितृष्वसुर्धनभाग् भवति। तस्याप्यभावे श्वशुरयोर्पिण्डदाता जामाता धनाधिकारी भवति। आसुरादि विवाह समये लब्धं तु स्त्रीधनं जीवत्यपि भर्तरि माता गृह्णीयात् तदभावे पिता।

१. जीमूतवाहनस्य यौतुक विषये मतम्—
'यु' मिश्रण इति धातोर्युत इति पदं मिश्रता वचनम्। मिश्रता च स्त्रीपुरुषयोरेकशरीरता। विवाहाच्च तद्भवति श्रुतिप्रमाणात् अतः विवाहलब्धधनमेव यौतुकं धनमिति।

२. हि. वि. पृ. १५८

आधुनिक हिन्दुविधौ अपत्यरहितायाः स्त्रियः धनं प्रथमं भर्त्ता तदभावे सपिण्डाः, तेषामभावे मातापितरौ ततः पितुः सपिण्डास्तेषामभावे मातुः सपिण्डा अधिकारिण इति क्रमः।

विभागानधिकारिणः—दायभागस्य पञ्चमेऽध्याये विषयोऽयं विवेचितः जीमूतवाहनाचार्येण।

सम्प्रति विभागानधिकारिणः कथ्यन्ते। तत्रापस्तम्बः—सर्वे हि धर्मयुक्ता भागिनो द्रव्यमर्हन्ति यस्त्वधर्मेण द्रव्याणि प्रतिपादयति ज्येष्ठोऽपि तमभागं कुर्वीतेति। आपस्तम्बस्याऽयमर्थः पित्रादेरौर्ध्वदेहिकस्य कर्मणोऽसंस्कृतः सुतः श्रेष्ठो नापरो वेद पारग इति।

'पुन्नाम्नो नरकात् त्रायतेति पुत्रः' यदनुसारेण पुत्रकर्तृकतया महाफलश्रुतेस्तत्कर्मवेतन धनसम्बन्धित्वं अतस्तदकुर्वतः कुतो वेतनम्। अतएवाह मनुः—

**'सर्व एव विकर्मस्था नार्हन्ति भ्रातरो धनम्'।**

—म. स्मृ. ९।२१४

एवं हि याज्ञवल्क्यमतानुसारं क्लीव-पतित-पतितोत्पन्न-पङ्गु-उन्मत्त-जड-अन्ध-अचिकित्सनीयव्याधिपीडितानां, सन्यासाद्याश्रमान्तरगतानां पितृद्वेष्युपपातकिनां औरसत्वेऽपि अंशभाक्त्वं नास्ति[1]।

**'अनंशौ क्लीवपतितौ जात्यन्धबधिरौ तथा।**
**उन्मत्तजडमूकाश्च ये च केचिन्निरिन्द्रियाः।।**
**सर्वेषामपि तु न्याय्यं दातुं शक्त्या मनीषिणा।**
**ग्रासाच्छादनमत्यन्तं पतितो ह्यददद्भवेत्।। इति।**

मनुवचनानुसारं नपुंसकपतितजात्यन्धश्रोत्रविकलोन्मत्तजडमूकाश्च ये च कुणिपङ्ग्वादयो विकलेन्द्रियास्ते पित्रादि धनहरा न भवन्ति किन्तु ग्रासाच्छादनभागिनः।[2]

एते ग्रासाच्छादनदानेन यावज्जीवं पोषणीयाः। विभागात् पूर्वं दोषावाप्तौ अनंशित्वं किन्तु विभागानन्तरं चेत् पुनः यदि औषधादिसेवनात् दोष निवृत्तिश्चेत तदा तु भाग प्राप्त्यस्त्येव। एतेषां क्लीवादीनां औरसाः क्षेत्रज पुत्रा निर्दोषाश्चेद्धनहारिणो भवन्ति। तेषां दुहितरश्च संस्कर्तव्याः। विवाहात् प्राग् ता भरणीयाः। एषामपुत्राः स्त्रियः शीलत्वात् भर्तव्याः व्यभिचारिणो निर्वास्याः।

**'अक्रमोढासुतश्चैव सगोत्रात् यस्तु जायते।**
**प्रव्रज्यावसितश्चैव न रिक्थं तेषु चार्हति।।' इति।**

कात्यायनस्य वचनात् हीनवर्णस्त्रीपरिणयनान्तरम् उत्तमवर्णस्त्रीपरिणयने द्वयोरप्य-

---

१. क्लीवोऽथ पतितस्तज्जः पङ्गुरुन्मत्तको जडः।
अन्धोऽचिकित्सरोगाद्या भर्तव्याः स्युर्निरंशकाः।

२. म. स्मृ. ९।२०१-२०२

क्रमोढात्वं तयोः सगोत्राद् नियुक्तादुत्पन्नः क्षेत्रजः पुत्रो नार्हति धनम्। अक्रमोढायामपि सवर्णेन परिणेत्रां उत्पादितः पुत्रो धनाधिकारी क्रमोढायामसवर्ण जातोऽपि। इति जीमूतवाहनस्याभिमतम्।

अत्रावधेयं यत् मित्रमिश्रस्तु वेदविहितकर्म त्यागिनां विकर्मरतानामपि विभागेऽनधिकारत्वं स्वीकरोति।

आधुनिक हिन्दुविधिशास्त्रे तु जडानां, प्रमत्तानां, धनलोभात् हत्याकारिणः, धर्मान्तर कर्तृणामेव धनेऽनधिकारो भवति।

**विभाज्यमविभाज्यधनम्**— दायभागस्य षष्ठे अध्याये परिच्छेद द्वये प्रथमं तावत् विभाज्यमविभाज्यधनस्य विवेचनं पश्चाच्च विद्याधनस्य निरूपणं कृतं वर्तते।

कात्यायनानुसारेण—

**पैतामहश्च पित्र्यश्च यच्चान्यत् स्वयमर्जितम्।**
**दायादानां विभागे तु सर्वमेतद्विभज्यते।।**

साधारणतया पितृपैतामह परम्परया प्राप्तं धनं तु यथाविधि विभाज्यधनमेव किन्तु कानिचित् धनानि अविभाज्यानि भवन्ति तेषामत्र चर्चा क्रियते—

**'पितृद्रव्याविरोधेन यदन्यत् स्वयमर्जितम्।**
**मैत्रमौद्वाहिकञ्चैव दायादानां न तद्भवेत्।।'**

इति याज्ञवल्क्यवचनात् जननीजनकयोर्द्रव्याविरोधेन, मैत्रीविवाहादिना यद्धनं स्वयमर्जितं भवति तत् सर्वमविभाज्यमेव एवं हि नारदस्यापि मतमविभाज्यधनविषये—

**'शौर्य्यभार्याधने हित्वा यच्च विद्याधनं भवेत्।**
**त्रीण्येतान्यविभाज्यानि प्रसादो यश्च पैतृकः।।'** —ना. स्मृ.

अत्र नारदेनापि संग्राम-भार्य्या-विद्यार्जितधनानामविभाज्यत्वं स्वीकृतम्।

**'अनुपघ्नन्पितृद्रव्यं श्रमेण यदुपार्जितम्।**
**स्वयंमीहितलब्धं तन्नाकामो दातुमर्हति।।'**

—(म. स्मृ. ९।२०८)

इति मनुवचनात्—पितृधनानुपघातेन यत्कृष्यादिक्लेशादर्जयेत् तत्स्वचेष्टाप्राप्तमनिच्छन्भ्रातृभ्यो दातुं नार्हति।

एवं हि विभागात् पूर्व वस्त्रवाहनालङ्कारादि येन यत् धृतो भवति तदन्यैर्न विभाज्यम्। अतिरिक्तं तु विभाज्यमेव। यदि पतिः जीवति तदा स्त्रीभिर्धृता अलङ्कारादय तु अविभाज्या एव। यः यत् धारयति तत् तु तस्यैव। पित्रोपभुक्तानि वस्त्रालङ्कारादीनि तु पितर्युपरते श्राद्धभोक्त्रे देयानि। विभागे ज्येष्ठस्याधिकं भवेत् यदा द्रव्याणि विषमाणि।

**'वस्त्रं पत्रमलङ्कारं कृतान्नमुदकं स्त्रियः।**
**योगक्षेमं प्रचारं च न विभाज्यं प्रचक्षते।।** —(म. स्मृ. ९।२१९)

इति मनुवचनात् कृतान्न (ओदनादिकम्), कूपजलाशयादिकं सर्वमविभाज्यम्। एवं हि गृहोद्यानादिषु प्रवेशनिर्गममार्गा अविभाज्या भवन्ति।

नारदस्य वचनमिदं 'भर्त्रा प्रीतेन यदत्तम्' निर्दिशति यत् पितुः भर्तुर्वा सकाशात् स्थावरादृते प्रीतिप्रसादाददधिगतं धनमविभाज्यम्।

एवं हि पूर्वक्रमागतं भूम्यादिकं पूर्वैर्नष्टं यदि कश्चनोद्धरति, तर्हि उद्धर्तुर्चतुर्थांशो भवति तत्तस्मै दत्त्वाऽवशिष्टं सर्वे समं विभजेरन्। अत्र सर्वत्र प्रायः जीमूतवाहनस्य विज्ञानेश्वरमित्रमिश्रप्रभृतिभिराचार्यै सह मतैक्यम्।

आचार्यजीमूतवाहनस्याभिमतं यत् साधारणीभूतं द्रव्यं व्ययीकृत्य कश्चन् किञ्चिद्धन-मर्जयति, तर्हि तत्र इतरेषां भ्रातृणां भागो भवत्येव। तत्र यस्य यावतोंऽशस्योपघातः तदनुसारेण भागकल्पना कर्तव्या। तत्र पुनरर्जयितुरंशद्वयमन्येषां स्वभागानुसारम् भवेत्।

किञ्चोपघातार्जिते अर्जकस्य भागद्वयमिति तावन्निर्विवादम्—

**साधारणं समाश्रित्य यत्किञ्चिद्वाहनायुधम्।**
**शौर्यादिनाप्नोति धनं भ्रातरस्तत्र भागिनः।।**
**तस्य भागद्वयं देयं शेषास्तुसमभागिनः।** —व्या. स्मृ.

**विद्याधननिरूपणम्**— दायभागस्य षष्ठाध्यायस्य द्वितीये परिच्छेदे आचार्येण जीमूतवाहनेन विद्याधनस्य निरूपणं कृतं वर्तते।

कात्यायनानुसारं विद्याधनं तावदभिधीयते—

**उपन्यस्ते तु यल्लब्धं विद्ययापणपूर्वकम्।**
**विद्याधनं तु तद्विद्यात् विभागे न नियोजयेत्।**
**शिष्यादर्त्विज्यतः प्रश्नात् सन्धिग्धप्रश्ननिर्णयात्।**
**स्वज्ञानशंसनात् वादात् लब्धं प्राध्ययनाच्च यत्।**
**विद्याधनं तु तत् प्राहुर्विभागेन नियुज्यते।**

इति कात्यायन वचनात्—'यदि भवान् भद्रकमुपन्यस्यति तदा भवते मया एतावद्देयमिति **पणितं** तत्रोपन्यासं निस्तीर्य यल्लभते **तदुपन्यस्तं**, शिष्यादध्यापिताद्, यजमानात् दाक्षिणादिना लब्धं, यत् प्रश्ने निस्तीर्णे परितोषाद् लभ्यते, शास्त्रार्थे संशयम-पनार्थं यत्राप्यते, शास्त्रादिषु स्वप्रकृष्टज्ञानं विभाव्य यल्लब्धं, अन्योन्यज्ञानविवादे निर्जित्य यल्लब्धं, शिल्पादिविद्यया चित्रकार सुवर्णकारादिभिर्लब्धं, द्यूतेनापि परं निर्जित्य यल्लब्धं तत् सर्वमविभाज्यम्। यथा—

**'परं निरस्य यल्लब्धं विद्यया द्यूतपूर्वकम्।**
**विद्याधनं तु तद्विद्यात् न विभाज्यं बृहस्पतिः।।'**

जीमूतवाहनमते साधारणं द्रव्यं व्ययीकृत्याप्यर्जिते विद्याधने विद्यानुपालितानां यवीयसां भ्रातृणां भागो भवति अविद्यानुपालितानां न इति विशेषः। पित्रर्जिते तु अविदुषांमधिकारः किन्तु ज्येष्ठार्जिते विदुषामेवाधिकार इति भेदः।

आधुनिक हिन्दुविध्यनुसारेणापि पैतृकधनस्यानुपघातेन यत् किञ्चिद्धनमर्जितं यथा शौर्यात्, श्वशुरगृहात्, अध्ययनात्, शिष्यात् मित्रसकाशात्, शास्त्रार्थात्, विद्यया द्यूत-क्रीडया, अन्यं विजित्य वा लब्धं तत् सर्वमविभाज्यम्। एवं हि सर्वकारपक्षतः व्यक्तिगतरूपेण व्यक्तिविशेषस्य सहाय्यार्थं यत् प्राप्तं तत् सर्वं नेतरैर्विभाज्यम्।

**विभागानन्तरजातोविभागः**—आचार्यजीमूतवाहनः दायभागस्य सप्तमेऽध्याये विभागानन्तर जातानां विभाग विषये चर्चा करोति—

तत्र यथा मनुनारदाभ्यामुक्तम्—

**'ऊर्ध्वं विभागाज्जातस्तु पित्र्यमेव हरेद्धनम्।**
**संसृष्टास्तेन वा ये स्युर्विभजेत स तै सह।।**[१]

तदनुसारं यदि पिता पुत्रान् विभज्य स्वयं च यज्ञाशास्त्रं भागं गृहीत्वा पुत्रैरसंसृष्ट एव मृतः तदा विभागानन्तरं जातः पितृधनमेव गृह्णीयात् स एव तस्य भागः, अथ कैश्चित् पुत्रैः सह संसृष्टः पिता मृतः तदा संसृष्टेभ्यो भागं गृह्णीयात्।

तथा च गौतमः—'विभक्तजः पित्र्यमेव'[२]

असवर्णायां जातस्तु स्वांशमेव पित्र्याल्लभते।

अपि च विभागादनन्तरं पित्रा यत् किञ्चिदर्जितं तत् सर्वं विभक्तजस्य पुत्रस्यैव भवति। किन्तु ये च विभक्ताः सन्तः पित्रा सह संसृष्टाः पितुरूर्ध्वं तैः सह विभक्तोऽपि धनं विभजेत्।

विभागादनन्तरं जातः यः स विभक्तजः इति विज्ञानेश्वरस्य मतम्। किन्तु जीमूत-वाहनानुसारं विभक्तेन पित्रा जातो विभक्तजः यदनुसारं विभागादनन्तरं यस्य गर्भाधानम्। मृते पितरि अस्पष्टगर्भायां मातरि विभागे कृते पश्चाज्जातं भ्रातरं सर्वे भ्रातरः स्वेभ्यः स्वेभ्योंऽशेभ्यः किञ्चित् किञ्चित् उद्धृत्य स्वभाग समभागिकं कुर्य्युः।

**विभागानन्तरागतविभागः**—दायभागस्याष्टमेऽध्याय अस्मिन् विषये चिन्तितमा-चार्येण जीमूतवाहनेन। विभागानन्तरागतविभागविषये बृहस्पतिना उक्तम्—

**'कृतेऽकृते विभागे वा रिक्थी यत्र प्रदृश्यते।**
**सामान्यश्चेद्भवेद् यत्तु तत्र भागहरस्तु सः।**
**ऋणं क्षेत्रं गृहं लेख्यं यस्य पैतामहं भवेत्।'**
**चिरकालप्रोषितोऽपि भागभागगतस्तु सः।**
**गोत्र साधारणं त्वद्धा योऽन्यदेशं समाश्रितः।**
**तद्वंशस्यागतस्यांशः प्रदातव्यो न संशयः।।**

---

१. मनु. स्मृ. ९।२१६, नारद स्मृ. १३।४३
२. गौतम २८।२७

**तृतीयः पञ्चमश्चैव सप्तमो वा यो भवेत्।**
**जन्मनाम परिज्ञाने लभेतांशं क्रमागतम्।।**

उपर्युक्त विवरणे चिरप्रोषितवंश्येन आत्मज्ञापनपूर्वकं भागग्रहणं कार्यम्। यद्यपि विभागानन्तरागतस्याधिकारितया विभाग: सिद्ध एव। अत्र सप्तम पर्यन्तानामेव देशान्तरादागतानां भागिता न त्वष्टमादेरिति। यतो हि स्वदेशावस्थाने तु चतुर्थपुरुषपर्यन्तस्यैव विभागार्हत्वम्।

एवं हि वंशपरम्पराक्रमेण तद्देशावस्थायिनः प्रतिवासिनः परम्परया स्वामिनं जानन्ति तेषामन्वयस्यागतस्य गोत्रजैर्भूमिः दातव्या।

**एकपितृकाणां सवर्णानुलोमपरिणीतस्त्रीजातानां पुत्राणां विभागः—** आचार्यप्रवरस्य जीमूतवाहनस्य दायभागस्य नवमेऽध्याये अस्मिन् विषये चर्चा कृता वर्तते।

ब्राह्मणक्षत्रियवैश्यानां प्रथमे विवाहे कर्तव्ये सवर्णा श्रेष्ठा भवति कामतः पुनर्विवाहे प्रवृत्तानां वक्ष्यमाणा आनुलोम्येन श्रेष्ठा भवेयुः। यथा मनुना उक्तम्—

**'सवर्णाग्रे द्विजातीनां प्रशस्ता दारकर्मणि।**
**कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशो वराः।।'**

—(म. स्मृ. ३।१२)

अत्र एकपितृकाणामित्यस्यार्थः विभिन्नजातिमातृकाणां पुत्राणामिति। सजातीया भार्या एव कार्याः सर्वेषां श्रेयस्यः स्युरिति प्रायः सर्वेषामाचार्याणामभिमतम्। ततोऽनुकल्पः चतस्रो ब्राह्मणस्यानुपूर्वेण, तिस्रो राजन्यस्य, द्वे वैशस्य, एका शूद्रस्य इत्याहतुः शङ्खलिखितौ।

**'चतुरोंऽशान् हरेद्विप्रस्त्रीनंशान्क्षत्रियासुतः।**
**वैश्यापुत्रो हरेद्द्व्यंशमंशं शूद्रासुतो हरेत्।।'**

—(म. स्मृ. ९।१५३)

इति मनुवचनात् तत्र ब्राह्मणीपुत्रः चतुरोभागान् गृह्णीयात्, क्षत्रियायामुत्पन्नः त्रीन्, वैश्यायामुत्पन्नः द्वौ शूद्रायाञ्चैकमिति।

एवं हि क्षत्रियेण क्षत्रियायामुत्पन्नो भागत्रयं, वैश्यायामुत्पन्नो भागद्वयं शूद्रायाञ्चैकं भागं प्राप्नोति। यतो हि शूद्रस्य वर्णान्तरे विवाहो निषिद्धः अत एव शूद्रस्य शूद्रापुत्राः समभागिनः।

अत्रावधेयं यत् प्रतिग्रहलब्धायां भूमौ क्षत्रियादिपुत्राणां नास्त्यधिकारः। स्नेहेन पित्रा दत्ताभूरपि पितुर्युपरते विप्रापुत्रो गृह्णीयात् एतादृशं बृहस्पतेरभिमतम्—

**'न प्रतिग्रहभूर्देया क्षत्रियादि सुताय वै।**
**यद्यपेषां पितादद्यान्मृते विप्रासुतो हरेत्।।'** —बृ. स्मृ.

यथा मनुना उक्तम्—

**ब्राह्मणक्षत्रियविशां शूद्रापुत्रो न रिक्थभाक्।**
**यदेवास्य पिता दद्यात् तदेवास्य धनं भवेत्।।**

—(म. स्मृ. ९।१५५)

तदनुसारं शूद्रायां द्विजातिभिरुत्पन्नः पुत्रोधनभाङ्न भवति। किन्तु यदि पिता तस्मै यदेव धनं दद्यात् तदेव तस्य भवेत्।

आचार्यस्य जीमूतवाहनस्य मतं यत् ब्राह्मणात् जातः क्षत्रियापुत्रः तदा ब्राह्मणेन सह तुल्य भागमर्हति यदा सः ज्येष्ठो गुणवांश्च भवति। ब्राह्मणेन क्षत्रियेण वा जातो वैश्यश्चेत्तद्रूपः, तदा क्षत्रियेण सह तुल्यांशौ।[१] शूद्रस्यापि एवं विधस्य वैश्येन सह समांशिता दर्शिता[२]।

पितामहप्रपितामहादि क्रमागतं गृहं क्षेत्रादिकं तु द्विजातिपुत्राणामेव न शूद्रस्य भवति।[३] क्रयप्रसादादिनापि द्विजातिलब्धभूमौ शूद्रस्यानधिकारः सिध्यति बृहस्पति वचने भूमिमात्रोपादानात्। यत्र शूद्रस्त्वेक एव पुत्रो ब्राह्मणस्य तदा स तृतीयांशभाक्। भागद्वयं सपिण्डानां, तदभावे सकुल्यानां तदभावे श्राद्धकर्तुः[४]। एवं हि क्षत्रियवैश्ययोः शूद्रएवैकः पुत्रः तदा तद्धनस्यार्धहरः। किन्त्वेतत्तदा एव भवेत् यदा सः विद्वान् विनीतश्च भवेत्। ब्राह्मणक्षत्रियविशां शूद्रापुत्रो रिक्थाऽधिकाराभावेऽपि पितृप्रसादात् दशमांशं लब्धुमर्हति। शूद्रस्यापरिणीता शूद्रापुत्रः पितुराज्ञया इतरपुत्रवतुल्यांशहरः, अभ्रातृकश्चेद् सर्वांशाधिकारी दौहित्राभावे। दौहित्रे सति उभयो समांश इति जीमूतवाहनस्याभिमतम्।

**पुत्रिकौरसयोर्विभागः**—दायभागस्य दशमेऽध्याये पुत्रिकाकरणानन्तरमौरसपुत्रे जाते तयोर्विभागः प्रतिपाद्यते।

कृतायां पुत्रिकायां यदि तत्कर्तुः पुत्रोऽनन्तरं जायते, तदा तयोर्विभागकाले समो विभागो भवेत्। नोद्धारः पुत्रिकायै देयः। यस्माज्जेष्ठाया, अपि तस्या उद्धार विषये ज्येष्ठता नादरणीया यथा मनुना उक्तम्—

**पुत्रिकायां कृतायां तु यदि पुत्रोऽनु जायते।**
**समस्तत्र विभागः स्याज्जेष्ठता नास्ति हि स्त्रियः।।**

—(म. स्मृ. ९।१३४)

अत्रावधेयं यत् पुत्रिकौरसयोस्तु सवर्णत्वे सति पूर्वोक्त विभागो बोद्धव्यः असवर्णत्वे तु तयोरसवर्णौरसपुत्रवदेव विभागः पुत्रिकौरसयोः समानत्वात्। यदि पुत्रिकाकृताऽपि

१. विप्रेण क्षत्रियाजातो जन्मज्येष्ठो गुणान्वितः।
भवेत् समांश क्षत्रेण वैश्याजातस्तस्तथैव च।। —बृहस्पति

२. बौधायन

३. बृहन्मनुः

४. देवलः

पुत्रिका पुत्रोत्पादनं विना विधवा वन्ध्या वा भवति तदा तस्याः पितृधनेऽनधिकारः।

**औरसादिपुत्राणां विभागः**—देवलानुसारेण द्वादशविधाः भवन्ति पुत्राः ते यथा—

**'आत्मजाः परजाश्चैव, लब्धा यादृच्छिकास्तथा।**
**तेषां षट् बन्धुदायादाः पूर्वेऽन्ये पितुरेव षट्।।'**

मनोरनुसारं औरसः, क्षेत्रजः, दत्तकः, कृत्रिमः, गूढोत्पन्नः अपविद्धश्चैते षड् बन्धुदायादाः तथा कानीनः, सहोढः, क्रीतः, पौनर्भवः, स्वयंदत्तः, शौद्रश्चैते षड् दायाद बान्धवाः। एतेषु द्वादश पुत्रेषु औरसपुत्रो मुख्यः। अपरे कामजा अतस्तेषां गौणत्वम् औरसादयः षट्-पुत्रा न केवलं पितृदायहराः किन्तु बन्धूनामपि सपिण्डादीनां दायहराः अन्ये तु केवलं पितुरेव न सपिण्डानाम्। औरसपुत्रशून्यस्य पितुः सर्वहरा औरसे सति ये पितृसवर्णास्ते तृतीयांशहरः।

पितुर्हीनवर्णस्य औरससम वर्णत्वे षष्ठांशिता तस्मादुत्तमवर्णत्वे पञ्चमांशिता युक्ता। अनियोगादुत्पन्नः यस्य बीजात् यो जातः स तस्य धनं गृह्णीयात् इतरोऽन्य बीजजो न गृह्णीयात्। इति जीमूतवाहनस्याभिमतम्।

विज्ञानेश्वरस्तु कानीनादीनां केवलं ग्रासाच्छादनभागित्वमेव स्वीकरोति एवं हि मित्रमिश्रप्रभृतयः देशाचारभेदेन कानीनादि विषये विरोधः परिहरणीय इति वदन्ति।

**अपुत्रधनाधिकारिणः**—दायभागस्यैकादशाध्याये षट्सु परिच्छेदेषु अपुत्रधनाधिकारिणां चर्चा कृता वर्तते आचार्येण जीमूतवाहनेन। तत्र प्रथमे परिच्छेदे अपुत्रधन विभागस्य, द्वितीये दुहित्राधिकारस्य, तृतीये पित्रधिकारस्य, मात्रधिकारस्य चतुर्थे, भ्रात्रधिकारस्य पञ्चमें तथा चरमे षष्ठे परिच्छेदे भ्रातृपुत्राधिकारो विवक्षितः।

**अपुत्रधनविभागः**—पुत्रपौत्रप्रपौत्रादीनामभावे भवत्यपुत्रः तस्यापुत्रस्य मृतस्य धने कस्याधिकारः प्रथम इत्यस्मिन् विषये नास्त्याचार्याणां मतैक्यम्। याज्ञवल्क्यस्मृतौ यः क्रमः प्रदर्शितः स तु एवमेव—

**पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा।**
**तत्सुतो गोत्रजो बन्धुः शिष्यः सब्रह्मचारिणः।।**
**एषामभावे पूर्वस्य धनभागुत्तरोत्तरः।**
**स्वर्यातस्य ह्यपुत्रस्य सर्ववर्णेष्वयं विधिः।।**

—याज्ञ. स्मृ. २।१३५-१३६

अनेन पूर्वपूर्वस्याभावे परपरस्याधिकारं वदन् सर्वेभ्यः पूर्वं पत्न्या एव धनाधिकारमभिधत्ते।

बृहस्पत्यनुसारमपि मृतस्यापुत्रस्य यावद्धनं स्थावरजङ्गमादिकं तत्सर्वं पत्न्या एव ये तु सोदरभ्रातृपितृव्यादयः प्रतिपक्षाः ते चौरवद्दण्डनीयाः।

विष्णुनाऽपि अपुत्रस्य धनस्य पत्न्याभिगामित्वं स्वीकृतम्। तदनुसारं पत्नी-दुहिता-

पिता-माता-भ्राता-भ्रातृपुत्राः-सकुल्याः-बान्धवः-शिष्यः-सहाध्यायी-राजगामी (ब्राह्मण-धनवर्जम्) चेति पूर्वपूर्वस्याभावे परपरस्यायं क्रमः प्रदत्तः।[१]

एवं हि वृद्धमनुनाऽपि पतिव्रतायाः पत्न्या एव न केवलं धनहारित्वमपितु पिण्ड-दातृत्वञ्चापि स्वीकृतम्। किन्तु शंखलिखितपैठीनसदेवलादीनां मतं भिन्नम्। ते सर्वादौ भ्रातुरधिकारः स्वीकुर्वन्ति न तु भार्यायाः यथा—

**'ततो दायमपुत्रस्य विभजेयुः सहोदराः।**
**तुल्या दुहितरो वापि ध्रियमाणः पितापि वा।**
**सवर्णा भ्रातरो माता भार्याचेति यथा क्रमम्।।**
**एषामभावे गृह्णीयुः कुल्यानां सहवासिनाम्'।।** —देवल

किन्तु पत्न्येव प्रथममधिकारिणीति विषये जीमूतवाहनमित्रमिश्रविज्ञानेश्वरादि समस्तप्रमुखाचार्याणां मतैक्यं दृश्यते। वस्तुतस्तु पुत्राभावे तु पौत्रादीनामपि अभाव एव। यदि पत्नी व्यभिचारिणी तदा तु सा ग्रासाच्छादनमात्रस्यैवाधिकारिणी। अतः मृतस्यापुत्रस्य परिणीता स्त्री संयता सती सकलाधिकारिणी। एवं हि या केवला भुजिष्यादिः साऽपि ग्रासाच्छादनमात्रं प्राप्तुं शक्नोति।

जीमूतवाहनमते पत्नीषु प्रथमं सवर्ण्णा, तदभावेऽसवर्ण्णाऽधिकारिणी जायते वर्णक्रमेण। द्विजातीनां शूद्रपरिणयस्य निषेधात् शूद्रायाः धनाधिकारो नास्ति।

आधुनिक हिन्दुविधौ अपुत्रधने पत्न्याधिकारो भवति किन्तु साधनं केवलं भोक्तुं पार्यते न तु दानविक्रयादि कर्तुम्।

**दुहितुरधिकारः**—पत्न्यभावे दुहितुरधिकारो भवति मनुनारदयोर्वचनम्। यथा—

**यथैवात्मा तथा पुत्रः पुत्रेण दुहिता समा।**
**तस्यामात्मनि जीवन्त्यां कथमन्यो हरेद्धनम्।।**
**पुत्राभावे च दुहिता तुल्यसन्तानदर्शनात्।**
**पुत्रश्च दुहिता चोभे पितुः सन्तानकारिके।।**

अत्र दुहितुरधिकारे सन्तानदर्शनं हेतुः। अतः पुत्रवती सम्भावित पुत्राचाधिकारिणी।

पत्न्यभावे दुहितरो गृह्णीयुरित्युक्त्वा बहुवचनप्रयोगेन समानासमानजातीयानां च समविशमांश प्राप्त्यर्थं सङ्केतः। बृहस्पत्यनुसारं मृतस्यधने अव्यभिचारिणी पत्नी एवाधि-कारिणी भवति तदभावे तु अनूढा दुहिता एव, इत्युक्त्वा पत्न्यभावे दुहितृणामेवाधिकारः दर्शितः। तत्र सर्वप्रथमं अनूढा तदभावे ऊढा तत्रापि प्रथमम् प्रतिष्ठिता तदभावेऽ प्रतिष्ठिता। गौतम धर्मसूत्रानुसारं स्त्रीधनं तु दुहितृणामविवाहितानामप्रतिष्ठितानाञ्चेति' अतः दुहितृणामभावे दौहित्रो धनभाक् भवति। गोविन्दराजेन मनुटीकायामुक्तम्—

**'अपुत्रपौत्रे संसारे दौहित्रा धनमाप्नुयुः।**
**पूर्वेषान्तु स्वधाकारे पौत्र दौहित्रका: समाः।।'**

जीमूतवाहनाचार्यस्याभिमतं यत् दुहितृषु प्रथममविवाहिता तदभावे विवाहिता तत्रापि प्रथमं पुत्रवती पश्चात् सम्भावितपुत्रा तदभावे वन्ध्याविधवादि पितृधनाधिकारिण्यः। सवर्णाऽसवर्णोढानां दुहितृणामध्ये सवर्णाविवाहिताचाधिकारिणी सा यदि न जीवति तदा तदभावेऽपि दौहित्र एव धनभाक्।

वर्तमाने हिन्दुविधिशास्त्रे अप्रतिष्ठायाः मरणादनन्तरं धनं प्रतिष्ठायाः कन्यायाः भवति तस्याः मरणादनन्तरमेव सर्वे दौहित्रा मिलित्वा समानरूपेण विभजन्ति।

**दौहित्राभावे पित्रधिकारः**—बृहस्पतिमनुप्रभृतीनां वचनानुसारं दौहित्रस्याभावे माताधिकारिणी यथा—

**अनपत्यस्य पुत्रस्य माता दायमवाप्नुयात्।**
**मातर्य्यपि च वृत्तायां पितुर्माताहरेद्धनम्।।**

—म. स्मृ. ९।२१७

**भार्यासुतविहीनस्य तनयस्य मृतस्य च।**
**माता रिक्थहरी ज्ञेया भ्राता वा तदनुज्ञया।।** बृ. स्मृ.

किन्तु विष्णुमतेन दौहित्रस्याभावे पितुरधिकारो न मातुः नापि युगपन्मातापित्रोः तदभावे मातृगामीति।

अत्रावधेयं यत् मनुना एतदपि उक्तम्—

'सहस्रं तु पितॄन्माता गौरवेणाति रिच्यते।।' इति वचनात् मातुरेवाधिकोपकारत्वात् विज्ञानेश्वरमित्रमिश्रप्रभृतिभिराचार्यैः स्वस्वमतानुसारं प्रथमं मातुरनन्तरं पितुर्धनाधिकारः स्वीकृतः।

किन्तु आचार्यजीमूतवाहनमतं यत् पिता प्रथमं धनं गृह्णीयात्, ततश्चमातेति। तेन स्वमतस्य पुष्ट्यर्थं मनोरेतद् वचनमुपस्थापितम्—

**'बीजस्य चैव योन्याश्च बीजमुत्कृष्टमुच्यते।**
**सर्वभूत प्रसूतिर्हि बीजलक्षणलक्षिता।।'**

—म. स्मृ ९।३५

तेन जनन्यपेक्षया जनकस्य पुत्रे प्रत्यासत्यतिशयत्वं दृष्टम्।

वर्तमानेऽपि विध्यनुसारेण कन्याऽभावे प्रथमं पुत्रधने मात्रधिकारः।

**पित्राभावे मात्राधिकारः**—विष्णुमतं यत् पितुराधिकारानन्तरं तद्भावे मातृगामीति।

युक्तश्चैतत् गर्भधारणपोषणात् कृतोपकारतयाऽतन्निषेक क्रियायावश्यककर्तव्यत्वात्, पुत्रभोग्यान्यपिण्डद्दजननेनाप्युपकारकत्वाच्च भ्रात्रादिभ्यः पूर्वमधिकारस्य न्यायत्वात्।

यथा पूर्वमुक्तं यत् पितृतोगौरवातिरेकश्रुतेः मातुरधिकारः पितृतः पूर्वमिति हेयम्।

यतो हि मनुना इत्यपि उक्तम्—

**'उत्पादक ब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिता।**
**ब्रह्मजन्म हि विप्रस्य प्रेत्य चेह च शाश्वतम्।।'** २।१४६

अत्र जनकाचार्यौ द्वावपि पितरौ, जन्मदातृत्वात्। तयोराचार्यः पिता गुरुतरः।

अतः जीमूतवाहनस्यमतं यत् पिता प्रथमं धनं गृह्णीयात् पश्चाच्च मातेति। अस्य विषयस्य विवेचना जीमूतवाहनेन कृता दायभागस्यैकादशाध्यायस्य चतुर्थे परिच्छेदे।

**मात्रभावे भ्रात्रधिकारः**—पित्रोरभावे भ्रातरो धनाधिकारिणः भवन्ति। भ्रातृष्वपि प्रथमं सोदरो गृह्णीयात्। तस्यत्वभावे सापत्नो भ्राता एक प्रभवत्वेन तस्यापि भ्रातृशब्दार्थत्वात्। मनुना यथा उक्तं—अनन्तरं सपिण्डाद्यस्तस्य तस्य धनं भवेत् (९।१८७) इति वचनमनुसृत्य जीमूतवाहनाचार्यस्यापि एददभिमतं यत् सहोदरा भावे भिन्नोदर भ्रातरोधनं गृह्णीयुरिति। आधुनिकहिन्दुविधिशास्त्रेऽपि एवं हि स्वीकृतम्। इत्यैकादशाध्यायस्य दायभागस्य पञ्चम परिच्छेदे निरूपितम्।

**भ्रात्रभावे भ्रातृपुत्राधिकारः**—जीमूतवाहनप्रणीतस्य दायभागे एकादशाध्यायस्यान्तिमे परिच्छेदे भ्रातृपुत्राणां तथा अन्येषामपि अपुत्रस्यधनाधिकारस्य विवेचना कृता वर्तते। तदभावे (भ्रात्रभावे) भ्रातृपुत्रगामीति विष्णुवचनात् भ्रातृणामभावे भ्रातृपुत्रा धनाधिकारिणो भवन्ति। तत्रापि प्रथमं सोदरभ्रातृपुत्रस्य तस्य चाभावेऽसोदरभ्रातृपुत्रस्याधिकारः 'सोदरस्य तु सोदर' इति वचनात्। जीमूतवाहनमित्रमिश्रौ एतत् स्वीकुरुतः। किन्तु मिताक्षराकारस्य विज्ञानेश्वरस्य मतं तु भिन्नं सः 'अनन्तरं सपिण्डाद्यः' इति मनुवचनं स्वीकृत्य सोदरभ्रातृपुत्राणामभावे, स भिन्नोदराणां धनाधिकारमस्वीकृत्य सपिण्डानामधिकारं स्वीकरोति।

**गोत्रजानामधिकारः**—भ्रातृपुत्राणामभावे गोत्रजाः धनभाजो भवन्ति। अत्र पितामहादि सपिण्डाः तदभावे प्रपितामहादि सपिण्डाः ते गोत्रजाः। अत्राऽपि पूर्ववत् जीमूतवाहनेन प्रथमं पितामहस्य तदनन्तरं पितामह्या अधिकारः स्वीकृतःअन्येषां मतानुसारेण प्रथमं पितामही पश्चाच्च पितामहः धनाधिकारी। अत्रैतदाप्यवधेयं यत् मित्रमिश्रेण समं जीमूतवाहनेनापि सापिण्डयं प्रपौत्र पर्यन्तमेव स्वीकृतं न तु सप्तमपुरुषावधिपर्यन्तं यथा विज्ञानेश्वरेण। जीमूतवाहनानुसारं प्रपितामह्यादीनां गोत्रजत्वाभावात् दायग्रहणाधिकारः नास्ति।

सपिण्डा, समानोदकाः तदभावे बन्धवोऽधिकारिणो भवन्ति।

**बन्धवाः दायभागिनः**—बन्धवस्तु त्रिविधाः—

**१. आत्मबन्धवा**—आत्मनः पितृष्वसु-मातृष्वसु-मातुलस्य च पुत्राः।

**२. पितृबन्धवा**—स्वजनकस्य पितृभगिनी-मातृभगिनी मातुलश्च तेषां पुत्राः।

**३. मातृबन्धवा**—स्वजनन्याः पितृभगिनी-मातृभगिनी मातुलश्च तेषां पुत्राः।

एतेषु प्रथमं आत्मबन्धवः तदभावे पितृबन्धवः तदभावे च मातृबन्धवः धनभाजः भवन्ति।

**आचार्यादयः धनभागिनः**—यथा मनुना उक्तम्—तदभावे सकुल्यः स्यादाचार्य्यः शिष्य एव वा।।(९।१८७)

अत्र सकुल्यो विभक्तपिण्डः प्रतिप्रणप्तृतः प्रभृति पुरुषत्रयमधस्तनं वृद्ध प्रपितामहादि-सन्ततिश्च।

सकुल्या भावे समानोदकाः तदभावे आचार्य्यः, तस्याप्यभावे शिष्यः तदभावे सब्रह्मचारी धनभाक् तदभावे ब्राह्मणाः।

**सर्वेषामप्यभावे तु ब्राह्मणः रिक्थहारिणः।**
**त्रैविद्याः शुचयो दान्ता एवं धर्मो न हीयते।।**

—म. स्मृ.९।१८८

इति मनुवचनात् सर्वान्ते ब्राह्मणा एवाधिकारिणः। अत्र जीमूतवाहनस्याभिमतं यत् ते ब्राह्मणा समग्रामा भवेयुः। ब्राह्मणाभावे राजागृह्णीयात्।

एवं हि वानप्रस्थाश्रमिणां वानप्रस्थी, यतीनां सत्शिष्यः नैष्ठिक ब्रह्मचारिणां धनं आचार्यः स्वीकरोति तत्र तत्र तेषामेवाधिकारः।[१]

**संसृष्टि विभागः**—दायभागस्य द्वादशाध्याये संसृष्टिधनमधिकृत्य विवेचना कृता जीमूतवाहनाचार्येण।

संसृष्टिधनं नाम किमत्र बृहस्पतिना स्वमतमेवं प्रकटितम्—

**'विभक्तो यः पुनः पित्रा भ्रात्रा वैकत्र संस्थितः।**
**पितृव्येणाथ वा प्रीत्या स तत् संसृष्ट उच्यते।।'**

यदनुसारं पित्रा, भ्रात्रा पितृव्येण वा विभक्तधनं पुनर्मिश्रितं चेत् तत् संसृष्टमित्युच्यते।

अनपत्यस्य संसृष्टिनः धनं यदि तस्य पत्नी जीवति तदापि भ्राता एव गृह्णीयात् इति मिताक्षराकारस्याभिमतं किन्तु जीमूतवाहनः यदि पत्नी जीविता तदा सा एव गृह्णीयात् किन्तु तत्र भोग्यादीनां नाधिकारः।

भ्रातृणां मध्ये सोदरस्य धनं सोदर संसृष्टी एव गृह्णाति तदभावे भिन्नोदर संसृष्टी यथा याज्ञवल्क्येनोक्तम्—

**'संसृष्टिनस्तु संसृष्टी सोदरस्य तु सोदरः'** या. स्मृ २।१३९

'याज्ञवल्क्येन इदमपि उक्तम्—

**'अन्योदर्य्यस्तु संसृष्टी नान्योदर्य्यो धनं हरेत्।**
**असंसृष्टयपि चादद्यात् संसृष्टो नान्यमातृजः।।'**

—या. स्मृ. २।१४०

१. या. स्मृ. २।१३७

अत्र 'संसृष्टो नान्यमातृजः' इति निषेधवचनं प्रयुज्य असंसृष्टिना सोदरेण संसृष्टिना चासोदरेण विभज्य गृहीतव्यम् इत्युक्तम्। प्रायः जीमूतवाहनादीनां सर्वेषामिदमेव मतम्।

वर्तमान हिन्दुविध्यनुसारेणापि संसृष्टभावः केवलं पिता-भ्राता-पितृव्यादि पुरूषपुरुष-योर्मध्ये एव स्यादिति प्रतिपादितम्।

**विभागकाले निह्वतस्य विभागः**—अस्मिन् विषये दायभागस्य त्रयोदशाध्याये चर्चा कृता वर्तते। विभागकाले निह्वुतस्य पश्चादवगतस्य विभाग विषये मनुना उक्तं वर्तते—

**ऋणे धने च सर्वस्मिन् प्रविभक्ते यथाविधि।**
**पश्चाद्दृश्येत यत् किञ्चित्तत् सर्वं समतां नयेत्।।**

म. स्मृ. ९।२१८

यदि परस्परापहृतं सामूहिकं द्रव्यं विभागकाले अचर्चितम् किन्तु यदि पितृधन-विभाजनानन्तरं तस्य ज्ञानं भवति तदा विंशोद्धारादिव्यवस्थां विना समस्तेषु भ्रातृषु तस्य समानरूपेण विभाजनं स्यात्। यथा याज्ञवल्क्येनाप्युक्तम्—

**'अन्योन्यापहृतं द्रव्यं विभक्तैर्यत्र दृश्यते।**
**तत् पुनस्ते समैरंशैर्विभजेरन्निति स्थितिः।।**

—या. स्मृ. २।१२६

एवं अत्र आचार्यः जीमूतवाहनः उपर्युक्तमनुवचनात् तत्रापहर्तुरल्पभागमभागं वा न स्वीकरोति। विंशोद्धारादि व्यवस्था विषयेऽपि जीमूतवाहनस्य स्पष्टमभिमतं यत् मनुवचने सम-पदेन ज्येष्ठादीनां तथैव विंशोद्धारादिव्यवस्थया एव विभागः कार्य इति किन्तु मिताक्षराकारेणोक्तं यत् स्वकीयबुद्धया ज्ञानतोऽज्ञानतो वा साधारणद्रव्यस्या-पहरणेऽपि दोषो भवति तदा अत्र कथं नहि। अतः विंशोद्धारादिव्यवस्थया विना समान-रूपेण सर्वेषु भ्रातृषु धन विभाजनं भवेदिति।

**यो ज्येष्ठो विनिकुर्वीत लोभात् भ्रातृन् यवीयसः।**
**सोऽज्येष्ठः स्यादभागश्च नियन्तव्यश्च राजभिः।।**

—म. स्मृ. ९।२१३

इति मनुवचनात् भ्रातृणां साधारणधननिह्नवे स्तेयविषयकं प्रायश्चितस्य तथा राज-दण्डस्यापि विधानं स्वीकृतं मित्रमिश्रैः।

**वृत्तविभागसन्देह निर्णयः**—दायभागस्य चतुर्दशेऽध्याये विषयोऽयं चर्चितः। अस्मिन् विषये यथा नारदेनोक्तम्—

**'विभागधर्मसन्देहे दायादानां विनिर्णयः।**
**ज्ञातिभिर्भागलेख्येन पृथक् कार्य्य प्रवर्तनात्।।'** ना. १३।३५

तदनुसारं विभागधर्मसन्देहे समुत्पन्ने ज्ञातिभिः पितृ-मातृ-आत्मबन्धुभिः लेख्यादिभिश्च विभागपत्रेण पृथक्-कृतगृहक्षेत्रैश्च विभागनिर्णयः कार्य इति।

अस्मिन् विषये याज्ञवल्येनोक्तं वर्तते—

**विभागनिह्नवे ज्ञातिबन्धुसाक्ष्यभिलेखितैः।**
**विभागभावना ज्ञेया गृहक्षेत्रैश्च यौतकैः।।**

—या. २।१५०

विभागनिर्णये साक्षिषु प्रथमं ज्ञातयः सपिण्डः, ततः बन्धवः सम्बन्धिनः, तदभावे उदासीना अपि साक्षिणो भवन्ति।

लिखितप्रमाणस्य साक्षिभ्यः बलवत्त्वातेनैव निर्णयः कार्यः इति जीमूतवाहनस्याभिमतम्।

**'अनुमानेन विज्ञेयं न स्यातां पत्रसाक्षिणौ'। इति**

बृहस्पतिवचनात् जीमूतवाहनोऽपि लिखितसाक्षिणामभावेऽनुमानेनैव निर्णयस्य समर्थनं करोति।

पृथक् कार्यप्रवर्तनादपि निर्णयः। यथा नारदेनोत्तम्—

**भ्रातॄणामविभक्तानामेको धर्मः प्रवर्तते।**
**विभागं सति धर्मोऽपि भवेत्तेषां पृथक् पृथक्।।** १३।३७
**साक्षित्वं प्रातिभाव्यञ्च दानं ग्रहणमेव च।**
**विभक्ता भ्रातरः कुर्युर्नाविभक्ताः कथञ्चन।।** १३।३९

**ग्रन्थनिर्माणस्योद्देशः**—दायभागस्य चरमेऽध्याये त्रयः श्लोकाः सन्तिः। तत्र प्रथमे तेनोक्तं यत् श्रीकरमिश्रादीनामाचार्याणामादरेण पराहतो दायभागतत्त्वस्य यथार्थज्ञानं येषां, तादृशजनानां कृते नायं ग्रन्थः यतो हि तेषां रञ्जनमनुरञ्जनमनेन नैव शक्यम्। किन्तु प्रमाणं वेदादि तत्परतन्त्रधियां मुनीनां मन्वादीनां संवादः परस्परवचनाविरोधः तदर्थमेव मदीयोऽयं प्रयत्नः। सर्वेषामेव मुनीनां वेदार्थनिबन्धृत्वेन वेदानां परस्पर-विरोधाभावात् तत्तद् वचनेऽपि निरोधो नास्त्येव।

द्वितीये श्लोके आचार्येणोक्तं दायभागमधिकृत्य बहुविध पूर्व निबन्धृव्याख्यासंजात-संशयस्य निराकरणार्थमेतद्रचितमिति सूचयति।

अन्तिमेन श्लोकेन पारिभद्रकुलोत्पन्नोयमिति ज्ञायते। यद्यपि जीमूतवाहनस्य दायभागे प्रायशः परमतखण्डनेऽधिकाभिरुचिर्दृश्यते, विज्ञानेश्वरसदृशीवाग्मिताऽपि तत्र नास्ति तथापि 'विदुषां किमशोभनम्' इति न्याय्येन, 'काव्यशास्त्र विनोदेन कालो गच्छति धीमतामिति दृष्ट्या च निश्चयेन महत्वपूर्णोयं ग्रन्थः दायतत्वप्रकाशनार्थम्।

अत्र मयाऽस्यां भूमिकायां छात्राणां सौविध्यार्थं धर्मशास्त्रस्य वेदानुकूलत्वं संक्षिप्त-

परिचयपुरस्सरं महत्वञ्च प्रदर्श्य व्यवहारदर्शनस्य राजधर्मे महत्वं प्रतिपादितम्। ततः परम् अष्टादश विवादपदेशु दायभागस्य महत्वं प्रतिपादितम्। अनन्तरं प्रसिद्धनिबन्ध-काराणां दायभाग सम्बन्धि ग्रन्थानां नामग्रहणपूर्वकं विज्ञानेश्वर, जीमूतवाहन- मित्रमिश्राणां प्रमुख निबन्धकारत्रयस्य संक्षिप्तः परिचयोपस्थापितः। तदनन्तरं प्रस्तुत ग्रन्थस्य सर्वेषां पञ्चदशाध्यायानां संक्षिप्तविषयविवेचनमपि मयाचात्र कृतम्।

यथाशक्ति यथामति गुरुचरणानामाचार्याणां कृपाप्रसादात सद्ग्रन्थानां स्वाध्यायेन च यत्प्राप्तं तदधिकृत्य विस्तृतभूमिकया सहितोऽयं ग्रन्थः मया सम्पादितः। तत्र यदुत्तमं तत् गुरोप्रसादस्वरूपम् यदनुचितं मदीयोऽयं प्रमादः इति मत्वा सुधियः स्वकीयेन बहुमूल्य मार्गदर्शनेन मामनुगृहिष्यन्तीति। आशासे ग्रन्थोऽयं धर्मशास्त्रानुरागिणां छात्राणां कृते उपयोगी भविष्यति यदि चेद् इदमेव मदीयं साफल्यम्।

शुभं भवतु।

कृष्णजन्माष्टमी

२४-०८-२००८

विद्वत् पादाब्जसेवकः

**श्याम बापटः**

।। श्रीः ।।

## महामहोपाध्याय श्री जीमूतवाहन विरचितः

# दायभागः

## प्रथमाध्यायः

**मन्वादिवाक्यान्यविमृष्य येषां यस्मिन् विवादो बहुधा बुधानाम्।**
**तेषां प्रबोधाय स दायभागो निःरूपणीयः सुधियः! श्रृणुध्वम् ।।१।।**

पादाम्बुजे द्वे जगदम्बिकायाः श्रीकृष्णविप्रो हृदये निधाय।
करोति टीकामिह दायभागग्रन्थावबोधाय सदेकरम्याम्।।

ग्रन्थारम्भे विघ्नविघाताय देवतानामोच्चारणरूपं मङ्गलमाचरन् शिष्यप्रवृत्त्यर्थमभिधेय प्रयोजनसम्बन्धांश्च प्रदर्शयन् दायभागमुद्दिशति मन्वादीति।

तथाचोक्तं ज्ञातार्थं ज्ञातसम्बन्धं श्रोतुं श्रोता प्रवर्त्तते।
ग्रन्थादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः।।

अत्राभिधेयो दायभागः प्रयोजनं दायभागनिर्णयः स च संशयापनोदनद्वारा दुःखनिवृत्तिहेतुतया गौणः। सम्बन्धश्च ग्रन्थस्य दायभागेन सह ज्ञाप्यज्ञापकभावः तन्निश्चयेन सह जन्यजनकभाव इति। श्लोकार्थस्तु हे सुधियः ! यस्मिन् दायभागे येषां बुधानां बहुधा विवादः सम्बन्धिस्वत्वापगमानन्तरं समुत्पन्नस्य सामुदायिकस्वत्वस्य विनाशेन प्रादेशिकस्वत्वानुकूलव्यापारो विभागः किंवा तदानीमुत्पन्नस्यैव प्रादेशिकस्वत्वस्य ज्ञापनं विभागः तथा मृतधनं प्रथमं पुत्रस्येव पितुरेव पत्न्या एव वेति बहुप्रकारो विवादः, तेषां बुधानां प्रबोधाय विशेषरूपेण दायभागस्य सम्बन्धिनां मध्ये व्यक्तिविशेषनिष्ठत्वेन प्राथमिकाधिकारस्य चावधारणाय स दायभागो निरूपणीयः निरूपणार्हः। न च नायमुद्देश्यः किन्तु प्रतिज्ञेति वाच्यं तथात्वे वक्ष्यमाणप्रतिज्ञान्तरानुपपत्तेः अतएव निरूपणीय इत्यनेन निरूपणस्य प्रातिज्ञेति सांम्प्रदायिकव्याख्यानमसदित्यवधेयं तस्मात् शृणुध्वम्। अत्र च निरूपणं लक्षणादिप्रकारेण ज्ञानानुकूलवचनं तदेव च निरूपणीयविशेषणतयोपस्थितं श्रवणक्रियायां कर्मतयान्वेति योग्यत्वात्। न च श्रुधातोः श्रवणवाचित्ववत् शाब्दबोधवाचितापीति निरूपणीयस्यापि तद्योग्यत्वमस्ति कथमन्यथा आत्मावारे श्रोतव्यो मन्तव्य इत्यादि श्रुतावात्मनः श्रोतव्येति वाच्यं सर्वत्र श्रावण बाधेनैव श्रुधातुना शाब्दबोधप्रतिपादनात् तत्र तस्य लाक्षणिकत्वात्। ननु सर्वेषांमेव विरुद्धवचनानां बुधवचनत्वेन प्रमाणत्वात् बहुधैव दायभागोऽस्तीत्यत आह मन्वादीति अविमृष्य अबुध्वा तथा च तद्वचनानां शास्त्राबोधमूलकत्वेन न प्रामाण्यमिति भावः। श्रीकराचार्य्यादि ग्रन्थादरपराहतविवेकानां पण्डितानां स्वव्यक्तव्यनैयायिकतत्तत्सूक्ष्मार्थग्राहकता नास्तीति तेषां व्यावृत्तये सुधिय इति सम्बोधनम्। न्यायगृहीतशास्त्रार्थग्राहकत्वमेव सुधीत्वम्। अत्र मनोर्देवतया तन्नामीत्कीर्त्तनरूपं मङ्गलं बोध्यम्। ऐनमेके वदन्त्यग्निं मनुमेके प्रजापतिम्। आहुरेके परं धर्ममपरे ब्रह्म शाश्वतमिति। स्वशब्दनिर्देशेन च मनोरादिशब्दनिर्दिष्टेतरस्मृतिकारेभ्यः प्राधान्यमावेदितं तेन स्मृत्यन्तरविरोधे मनुस्मृतिरेव ग्राह्या। अत एवोक्तं मन्वर्थविपरीता या सा स्मृतिर्न प्रशस्यते। वेदार्थोपनिबन्धृत्वात् प्राधान्यं हि मनोः स्मृतमिति।।१।।

# अथ दायभागो निरूप्यते

## तत्र नारदः

**विभागोऽर्थस्य पित्र्यस्य पुत्रैर्यत्र प्रकल्प्यते।**
**दायभाग इति प्रोक्तं तद्विवादपदं बुधैः॥२॥**

निरूपणे शिष्यावधानाय प्रतिजानीते अथेति उद्देशानन्तरमित्यर्थः निरूप्यते लक्षणादिप्रकारेण ज्ञाप्यते। तेन न उद्देशो लक्षणं परीक्षा चेति प्राप्तक्रमविरोधः। तत्र दायभागलक्षणप्रसङ्गे नारद इत्यस्यैकवचनान्तत्वेनाध्याहर्त्तव्यया चाहेति क्रियया अन्वयः। विभागोऽर्थस्येति। विभागः स्वत्वनिर्णयानुकूलो व्यापार इत्यग्रे वक्ष्यते तथाच पित्रास्यार्थस्य पुत्रैर्यो विभागः पुत्रकर्त्तृकी विभागः स दायभागः स यत्र धने प्रकर्षेण कल्प्यते विभागिभिरेकमत्या मध्यस्थाद्यवलम्बनेन वा तद्विवादपदमिति बुधैः प्रोक्तमित्यन्वयः। न चाष्टादशविवादपदगणनायां स्त्रीपुंधर्मी विभागयेत्यनेन मनुना विभागस्यैव विवादपदत्वेन गणितत्वात् दायस्य चागणितत्वात् कथं दायस्य विवादपदत्वमिति वाच्यं इदं हि विवादपदपदं न पारिभाषिकं किन्तु यौगिकं दायभागविषयकविवादविषयत्वस्य दायेऽप्यवश्यम्भावात् दायमविषयीकृत्य दायभागविषयकविवादासम्भवात्। नारदवचनानुरोधेन मनुकृतविवादपदगणनायां विभागपदस्य क्वदभिहितभावतया विभजनीयदायपरत्वे त्वनुपपत्तिलेशाभावाच्च। केचित्तु यत्रेति निमित्तसप्तमी यदर्थश्च विवादपदं तथाच यद्विवादपदनिमित्तं पित्रास्यार्थस्य पुत्रैर्विभागीऽक्षपातः प्रकल्प्यते तद्विवादपदं दायभाग इत्याहुः। य इत्यर्थे यत्रेति सुपांसुपा साध्वित्यन्वे। परे तु यत्त्विति पाठः तदर्थश्च विभागक्रियाविशेषणमित्यूचुः। केचन पित्र्यस्यार्थस्येति निर्द्धारणे षष्ठौं वर्णयन्ति द्वन्द्वः सामासिकस्य चेतिवत् तथाच पित्र्यस्यार्थस्य मध्ये यस्मिन्नर्थे पुत्रैर्विभागः क्रियते स दायभाग इति तेषां मते वचनार्थः। अत्रापि मते धनस्य विवादपदत्वं पूर्वोक्तरीत्या बोध्यमिति। यस्तु इत्येव पाठ इत्यपरे।।२।।

**पितृत आगतं पित्र्यं तच्च पितृमरणोपजातस्वत्वमुच्यते। पित्र्यस्येति पुत्रैरिति च इयमपि सम्बन्धिमात्रोपलक्षणं सम्बन्धिमात्रेण सम्बन्धिमात्रधनविभागेऽपि दायभागपदप्रयोगात्, अतएव दायभागं विवादपदमुपक्रम्य नारदोऽपि मात्रादिधनविभागमप्युपदर्शितवान्। तथा मनुरपि पित्रादिपदमदत्त्वैव एष स्त्रीपुंसयोरुक्तो धर्मो वो रतिसंहितः। आपद्यपत्यप्राप्तिश्च दायभागं निबोधत इत्युपक्रम्य यावत् सम्बन्धिधनविभागमुक्तवान्॥३॥**

ननु विभागात् प्रागेव पितुर्निधनादिना तदर्थेषु तत्स्वत्वापगमात् पित्र्यपदस्य पितुरिदमित्यर्थकल्पनायामयोग्यत्वमतो व्याचष्टे पितृत इति। ननु पितृत आगतमित्यस्य पितृस्वत्वनाशानन्तरमपरस्वत्ववदित्यर्थकत्वे पितृदत्तादेरप्येवं पित्र्यत्वापत्त्या दायत्वापत्तिः पित्र्यधनविभागस्यैव दायभागत्वेन पित्र्यधनस्यापि दायत्वस्याभ्युपेयत्वादत आह तच्चेति। पितृमरणेति। पितृमरणादुपजातं स्वत्वं यत्र पितृमरणाधीनस्वत्ववदित्यर्थः वस्तुतस्तु:पितृस्वत्वनाशकालेऽपि पितृस्वत्वोपलक्षितबोधकतया पित्र्यपदं योग्यमेव पाकरक्ते घटे श्याम इत्यादिप्रयोगवत् अतएव विभजेयुर्धनं पितुरित्यादिवचनान्यपि सङ्गच्छन्ते। मरणपदश्चात्र इतरस्वत्वाभिसन्धानापूर्वकस्वत्वापगमहेतुभूतव्यापारत्वरूपेण पातित्याश्रमान्तरप्रवेशादीनामप्युपलक्षणं पितृदत्तादौ तु स्वत्वं न पितुर्मरणाधीनं किन्तु सम्प्रदानस्वत्वाभिसन्धानपूर्वकत्यागादेव पितुरिति नातिप्रसङ्गः। केचित्तु पितृत आगतं पितृत्वसम्बन्धाल्लब्धं पितापुत्र-

भावसम्बन्धाधीनस्वत्ववदित्यर्थः। तच्चेत्यादि तु तत्परिचायकमित्याहुः। पौत्रादिभिः क्रियमाणस्य पितामहादिधनविभागस्य दायभागत्वोपपादनायाह पित्र्यस्येतीति। सम्बन्धिभावेति। तथाच पितृपदस्य पुत्रपदस्य च सम्बन्धिभावे लाक्षणिकतया पितामहादिधनस्यापि सम्बन्ध्युपरमजातस्वत्ववत्त्वात् तद्विभागस्य सम्बन्धिकृतत्वाच्च दायभागत्वमक्षुणमिति भावः। पुत्रैरिति बहुत्वं कर्तृत्वं चाविवक्षितं तेन द्वयोर्विभागे मध्यस्थक्रियमाणे गर्भस्थविभागे च नाव्याप्तिः। ननु पितामहादिधनविभागो न दायभागः प्रमाणाभावात् तदा कथं तत्संग्रहाय लक्षणेत्यतस्तत्र प्रमाणमाह सम्बन्धिमात्रेणेति। सम्बन्धिमात्रकृत सम्बन्धिमात्रधनविभागे दायभागपदप्रयोगस्य मुनिविरोधात् लक्षणानुपपत्तेराह अतएवेति। सम्बन्धिमात्र-धनविभागस्यापि दायभागत्वादेवेत्यर्थः अन्यथा पितृधनविभागस्यैव दायभागत्वे दायभागविवाद-पदोपक्रमे मात्रादिधनविभागकथनस्याप्रस्तुताभिधानत्वापत्तेरिति भावः। ननु नारदेन दायभागोपक्रमे पितृधनविभागः एवोक्तः मात्रादिधनविभागस्य च प्रासङ्गिकमेवाभिधानम् अन्यथा स्वोक्तविरोधः स्यादिति कथं मात्रादिधनविभागस्य दायभागत्वमित्यत आह तथा मनुरपीति। पित्रादिपदमदत्त्वैवेति। तथाच नारदेन पितृधनविभागस्य पृथगुक्तत्वात् मात्रादिधनविभागकथनस्य तत्प्रासङ्गिकत्वसम्भवेऽपि मनुना दायभागोपक्रमे पित्रादिपदानन्तर्भावेनैव यावत्सम्बन्धिधनविभागस्योक्तेः सम्बन्धिधनविभागस्यैव दायभागत्वमिति भावः। न च नारदानुरोधात् मनुस्मृतिः सङ्कोचोऽस्त्विति वाच्यं मनोर्बलवत्त्वात्। रतिसंहितः अन्योन्यानुरागयुक्तः, आपद्यपत्यप्राप्तिः क्षेत्रजादिपुत्रकरणम्।।३।।

**दीयत इति व्युत्पत्त्या दायशब्दो ददातिप्रयोगश्च गौणः मृतप्रव्रजितादिस्वत्वनिवृत्तिपूर्वक-परस्वत्वोत्पत्तिफलसाम्यात् न तु मृतादीनां तत्र त्यागोऽस्ति॥४॥**

ननु सम्बन्धिनविभागो दायभाग इत्युक्तं तच्च न सम्भवति भावकृदन्तदायशब्दस्य त्याग-मात्रबोधकतया सम्बन्धिधनाबोधकत्वादित्यत आह दीयत इति। तथाच दायशब्दस्य दीयते यत् स दाय इति कर्मव्युत्पन्नतया कर्मकृतैव धनबोध इति भावः ननु तथाप्यनुपपत्तिः कर्मकृता धात्वर्थस्य कर्मण एव बोधनात्, धात्वर्थश्च प्रकृते त्याग एव मृतप्रव्रजितादिपित्रादीनां तदानीं त्यागाभावेन त्यागकर्मत्वेन तद्धनबोधनासम्भवादत आह ददातिप्रयोगश्चेति, दाधातुप्रयोगश्चेत्यर्थः। चकारः पुनरर्थः। गौण इति। शक्यस्य सादृश्यात्मकः सम्बन्धी गुणः तदधीना या लक्षणा सा गौणी तद्योगात् गौण इत्यर्थः तथा च पूर्वस्वामिस्वत्वनिवृत्तिपरस्वामिस्वत्वोत्पत्तिफलकत्यागत्वेन रूपेण त्यागशक्तस्य दाधातोः पूर्वस्वामिस्वत्वनिवृत्तिपरस्वामिस्वत्वोत्पत्त्यनुकूलव्यापारत्वेन पित्रादिमरणप्रव्रज्यादिसाधारणेन रूपेण लक्षणा सम्बन्धिनिधनाद्यनन्तरं मरणादिरूपतादृशव्यापारजन्यं यत्पूर्वस्वामिस्वत्वनिवृत्तिपर-स्वामिस्वत्वोत्पत्तिरूपं फलद्वयं तच्छालित्वरूपं कर्मत्वमक्षतमेवेति नानुपपत्तिरिति भावः। एतेन मरणादेर्ददात्यर्थत्वे तत्र दाधातोर्गौणता, तत्र स्वत्वस्यानवच्छेदकतया च धनस्यापि न कर्मत्वं धात्वर्थतावच्छेदकफलशालिन एव कर्मत्वादिति धात्वर्थजन्यफलभागित्वमात्रेण प्रत्ययस्यापि गौणता चकारः समुच्चये इत्याचार्य्यचूडामणिमतं प्रत्युक्तं, धातोर्निरूक्तरूपेण लक्षणायां स्वत्वस्य धात्वर्थता-वच्छेदकत्वेन तच्छालित्वरूपकर्मत्वस्य धने निष्प्रत्यूहत्वादिति। गुणमाह मृतप्रव्रजितादीति। साम्यादिति शक्यलक्ष्ययोरुक्तरूपत्यागतथाविधव्यापारयोर्मध्ये लक्ष्ये शक्यस्य मृतप्रव्रजितादिस्वत्वनिवृत्तिपर-स्वत्वोत्पत्तिरूपोभयफलानुकूलव्यापारत्वरूपसादृश्यादित्यर्थः। लक्षणाहेतु मुख्यार्थबाधमाह न तु मृतादीनामिति, तत्र धने, सप्तम्यर्थो विषयत्वं तस्य त्यागेऽन्वयः त्यागो न ममेदममुकस्य भवत्वितीच्छारूपः।।४।।

**ततश्च पूर्वस्वामिसम्बन्धाधीनं तत्स्वाम्योपरमे यत्र द्रव्ये स्वत्वं तत्र निरुढो दायशब्दः॥५॥**

दायशब्दस्य पर्य्यवसितार्थमाह ततश्चेति। क्रीतादावतिव्याप्तिवारणायाधीनान्तम्। अत्र च पूर्वस्वामीत्यविवक्षितं सम्बन्धाधीनत्वस्यैव व्यावर्त्तकत्वात्। सम्बन्धश्च शास्त्रप्राप्तपुत्रत्वाद्यन्यतमः न तु क्रेतृत्वादिः क्रयस्य सम्बन्धाधीनस्वत्वं प्रत्यहेतुत्वात् किन्तु क्रयाधीनस्वत्वं प्रत्येव तस्य हेतुत्वमिति। विद्यमानपतिस्वत्वके दाम्पत्यसम्बन्धाधीनपत्नीस्वत्वाश्रयेऽतिव्याप्तिवारणाय तत्स्वाम्योपरम इति तथाच तावदन्यतमसम्बन्धाधीनं सत् यत् पूर्वस्वामिस्वत्वनाशजन्यस्वत्वं तद्वति धने निरूढ़ो दायशब्द इत्यर्थः। ननु स्वत्वनाशानन्तरं चेत् स्वत्वोत्पत्तिस्तदा तत्क्षणेऽस्वामिकतया निध्यादिवदुदासीनस्याप्युपादानात् स्वत्वापत्तिरिति चेन्न तत्र पुत्रादिसत्ताया एव विरोधित्वस्य पुत्राद्यधिकारबोधकशास्त्रसिद्धत्वात् न च पित्रा विक्रीतेऽपि पुत्रस्वत्वापत्तिः इतरस्वत्वाभिसन्धानापूर्वकपितृस्वत्वापगमहेतुव्यापारजन्यपितृस्वत्वनाशस्यैव सम्बन्धाधीनं विजातीयं पुत्रस्वत्वं प्रति हेतुत्वात् तादृशस्वत्वनाशस्य च स्वत्वेच्छानधीनपितृस्वत्वनाशत्वेन हेतुता न तु उक्तरूपेण गौरवात् पित्रा पुत्राय दत्तन्तु यद्धनं तत्र पुत्रव्य स्वत्वं न सम्बन्धाधीनं किन्तूदासीनस्येव दानाधीनं अतो न तत्र तादृशपितृस्वत्वनाशस्य व्यभिचारः अतएव तद्रूपं धनं न दाय इति। वस्तुतस्तु पितृस्वत्वमेव पुत्रस्वत्वोत्पत्तौ हेतुः न चैवं पितृस्वत्वे विद्यमानेऽपि तद्धने पुत्रस्वत्वापत्तिः तत्र पितृस्वत्वनाशकस्यापि सहकारित्वात्। स्वत्वनाशकञ्च मरणपातित्यादि तेषां स्वत्वनाशकत्वेन सातिप्रतिपादितानां मरणत्वपातित्यत्वादि विशेषरूपेणैवाव्यवहितोत्तरत्वान्तर्भाविण पुत्रस्वत्वोत्पत्तौ हेतुत्वं तेन न परस्परव्यभिचारः अतएव विनष्टे वाप्य शरण इत्यादिवचनैः पितुः पातित्याद्यनन्तरमेव पुत्रस्वत्वमिति प्रतिपादितम्। एतेन पितृस्वत्वनाशकानां मरणादीनां तेन तेन रूपेण हेतुत्वं, स्वत्वनाशकत्वेन, स्वत्वनाशसामग्रीत्वेन वा, नाद्यः अनेककार्य्यकारणभावकल्पने गौरवात्, न द्वितीयः जीवत्यपि पितरि पुत्रस्य स्वत्वं स्यात् स्वत्वनाशं प्रति स्वत्वस्यादृष्टस्य च हेतुत्वात् तदानीमपि स्वत्वादृष्टादीनां तन्नाशकानां सत्त्वात्, तृतीये चान्यं प्रति पूर्ववर्त्तित्वं गृहीत्वैव यस्य यं प्रति पूर्ववर्त्तित्वं गृह्यत इत्युक्तान्यथासिद्धेः सामग्रीभेदेन नानाकार्य्यकारणाभावकल्पने गौरवाच्च तदपेक्षया नाशरूपहेतुताया एव लघुतया युक्तत्वादित्यादिकं प्रत्युक्तम्। प्रव्रज्यामरणपातित्यानां त्रयाणां कार्य्यकारणभावत्रयकल्पनामपेक्ष्य अन्यदीयौपादानिकस्वत्वं प्रति क्लीवादिभेदकूटविशिष्टपुत्रसत्तायास्तथाविधपौत्रादिसत्तायाय प्रतिबन्धकत्वकल्पनायामेव गौरवात् न चावश्यकत्वात् मरणादीनामेव हेतुत्वमस्तु न तु पितृस्वत्वस्यापीति वाच्यं तथा सति सम्बन्धाधीनस्वत्वधारावारणाय तथाविधस्वत्वस्य स्वसमानजातीयस्वत्वं प्रति प्रतिबन्धकत्वकल्पनागौरवापत्तेः उत्पत्तिमत्त्वसम्बन्धेन मरणादेर्हेतुतया न धारापत्तिरिति चेन्न उत्पत्तेराद्यक्षणासम्बन्धरूपतयाऽननुगमेन कार्य्यकारणभावानन्त्यप्रसङ्गात् सम्बन्धाननुगमस्यादोषत्वसिद्धान्तस्य च मन्त्रपाठमात्रत्वात् प्रकारभेदेनेव सम्बन्धभेदेनापि व्यापकताभेदस्यावश्यकत्वात्। मन्मते तु सम्बन्धिस्वत्वस्य हेतुत्वात् तदभावादेव तद्धारापादनस्यासम्भव इति सुधीभिर्विभावनीयम्। स्वत्वञ्च यथेष्टविनियोगार्हत्वेन शास्त्रबोधितत्वमिति प्राञ्चः। अतिरिक्तः पदार्थ इति शिरोमणिः। स्वामित्वञ्च तन्निरूपकत्वं निरूपकतया तदेव च द्रव्यगतं गुणगतञ्च द्रव्यस्य दानादिश्रुतेः नीलं वा वृषमुत्सृजेदित्यादौ लौहित्यादि गुणविशिष्टपारिभाषिकनीलवृषोत्सर्गश्रुतेश्च वस्तुतस्तु आत्मसमवेतं स्वामित्वमतिरिक्तः पदार्थः विक्रयदानादीनां तन्नाशकत्वे क्रयप्रतिग्रहादीनाञ्च तद्धेतुत्वे सम्बन्धलाघवात् तदेव निरूपकतया स्वत्वव्यवहारहेतुः विषयतया च ज्ञाततावत् अतएव निबन्धादौ भाविन्यपि स्वत्वं अन्यथा प्रतिमासं प्रतिवर्ष वा देयत्वेन प्रतिश्रुतस्य धान्यादिरूपस्य तस्य भावित्वेन तत्र तदुत्पत्त्यनुपपत्तेरिति चूड़ामणिसम्मती लीलावतीरहस्यसिद्धः समीचीनः पन्थाः अत्र स्वत्वधारावारणाय सजातीयस्वत्वं प्रति सजातीयस्वत्वं विरोधि। सजातीयेति

करणात् पराजितनृपतिराज्यान्तर्वर्त्तितत्तत्पुरुषीयक्रमागतस्थावरादौ जयादिना जेतुर्नृपतेः करग्रहणोपयोगिस्वत्वोत्पादे तथा क्रीतप्रतिगृहीतराज्यान्तर्वर्त्तिनि तादृशस्थावरादौ क्रेतादेः क्रयाद्यधीनस्वत्वोत्पादेऽपि न व्यभिचार इति संक्षेपः।।५।।

**ननु किं दायस्य विभागो विभक्तावयवत्वं यद्वा दायेन सह विभागोऽसंयुक्तत्वं, तावत्पूर्वः दायविनाशापत्तेः नापि द्वितीयः संयुक्तेऽपि न ममेदं विभक्तं स्वं भ्रातुरिदमिति प्रयोगात्।।६।।**

**न च सम्बन्धाविशेषात् सर्वेषां सर्वधनोत्पन्नस्य स्वत्वस्य द्रव्यविशेषे व्यवस्थापनं विभाग इति वाच्यं सम्बन्ध्यन्तरसद्भावप्रतिपक्षस्य सम्बन्धस्यावयवेष्वेव विभाग व्यङ्ग्यस्वत्वापादकत्वात् कृत्स्नपितृधनगतस्वत्वोत्पादविनाशकल्पनागौरवात् यथेष्टविनियोगफलाभावेनानुपयोगाच्च।।७।।**

दायं निरूप्य भागं निरूपयितुं पृच्छति नन्विति। नारदेन विभागभागयोरेकत्वप्रतिपादनादाह विभाग इति। दायविनाशेति। आरम्भकसंयोगप्रतिद्वन्द्विनावयवद्वयविभागेनासमवायिकारणस्यारम्भकसंयोगस्य नाशात् द्रव्यनाशापत्तेरित्यर्थः इदमुपलक्षणम् अविभक्ते सखण्डेऽपि तत्सत्त्वात् अखण्डेऽपि विभक्ते तदसत्त्वाच्चेति द्रष्टव्यम्। संयुक्तेऽपीति। संयुक्तेऽपि वस्तुनि इदं वस्तु विभक्तं भ्रातुः स्वं न ममेति प्रयोगादित्यर्थः। यद्यपि इदं विभक्तमिति प्रयोगस्यैवापेक्षितत्वेन भ्रातुः स्वं न ममेति कथनमनुपयोगि तथापि वैशेषिकव्यवहारस्य विभागाधीनत्वात् तत्र विभक्तत्वस्यावश्यम्भावप्रतिपादनार्थं तत्कथनमिति। सम्बन्धाविशेषादिति। स्वत्वहेतोस्तत्पुत्रत्वादिसम्बन्धस्य सकलपुत्रादिसाधारण्यादित्यर्थः। सर्वधनोत्पन्नस्येति। सम्पन्नो व्रीहिरितिवत् सामान्याश्रयणादेकवचनं द्रव्यविशेषे एकैकस्मिन्नंशे व्यवस्थापनम् अंशान्तरव्यावृत्त्या व्यवस्थापनं एतेन स्वत्वं प्रतिपुरुषं भिन्नमिति प्रातिपादितं तेन साधारणे सर्वेषां स्वत्वमेकमेवेति भ्रमनिरासः सामुदायिकस्वत्वविनाशतत्तदंशीयवैशेषिकस्वत्वहेतुभूतव्यापार इति वार्थः तेन समवेतस्य स्वत्वस्य विद्यमानस्याश्रयत्यागरूपव्यावृत्त्यसम्भवेऽपि न क्षतिरिति। सम्बन्धन्तरेति। तुल्याधिकारिसम्बन्ध्यन्तरेत्यर्थः तेन मृतपितृकपौत्रादिसद्भावस्य संग्रहः जीवत्पितृकपौत्रादिसद्भावस्य चासंग्रहः सम्बन्ध्यन्तरसद्भावः प्रतिपक्षः स्वजन्यफलविरोधी यस्य तादृशस्य पुत्रत्वादिरूपसम्बन्धस्य अवयवेष्वेव एकैकस्मिन्नंश एव स्वत्वोत्पादकत्वादित्यर्थः। कस्य कुत्रांशे स्वत्वमित्यत्र निर्णायकमाह विभागव्यङ्ग्येति। तथाच यदंशे यस्य स्वत्वं तदंश एव तस्य गुटिकापात इति नियम इत्यभिप्रायः विभागस्य च व्यञ्जकत्वेन तदभावादेन न विभागात् पूर्वं स्वत्वस्य विशेषनिष्ठत्वेन तत्तत्पुरुषीयत्वप्रत्यय इति भावः। ननु सम्बन्ध्यन्तरसत्तायाः सामान्यत एव सम्बन्ध्यन्तरस्वत्वविरोधित्वे कुत्राप्यंशे कस्यापि स्वत्वं नोत्पद्येत विरोधिसत्त्वादिति चेदत्र ब्रूमः सम्बन्धाधीनस्वस्वत्वप्रागभाववत्त्वप्रत्यासत्त्या सम्बन्ध्यन्तरस्यैव सम्बन्ध्यन्तरीयसम्बन्धाधीनस्वत्वं प्रति विरोधित्वं विभागानन्तरं प्रादेशिकस्वत्वस्य भवतामप्यभ्युपेयत्वेन तत् प्रागभावस्य सत्त्वादिति नानुपपत्तिरिति। सम्बन्ध्यन्तरसत्तायाः प्रतिबन्धकत्वे प्रमाणमाह कृत्स्नेति। सकलपित्रादिधनगतसम्बन्धिसमसंख्यसामुदायिकस्वत्वानि तेषामुत्पादविनाशाय एतावदनन्तपदार्थकल्पनापेक्षया प्रतिबन्धकल्पनस्यैव लघुत्वादिति भावः। प्रमाणसत्त्वे गौरवमप्यकिञ्चित्करं कथमन्यथादृष्टकल्पनमतः प्रमाणाभावमाह यथेष्टेति। यथेष्टविनियोगरूपफलानुमेयमिह स्वत्वं समुदाये कस्यापि सम्बन्धिनस्तदभावेन कथं तत्कल्पनमिति भावः। ननु विभागानन्तरमविनियुक्तविनष्टधने स्वत्वमस्तीत्यत्र किं मानमिति चेन्न अविनियुक्ते विनष्टे ममेदं विनष्टमिति प्रतीतिबलादुन्नेयमिति, इदमुपलक्षणं विभागस्य स्वत्वहेतुत्वे स्वत्वनाशकत्वे च प्रमाणाभावात् एकपुत्रसत्त्वे व्यभिचाराच्च तत्रावश्यकल्पनीयकारणान्तरादेवान्यत्रापि निर्वाहेणान्यथासिद्धेश्च एवं विभागस्य स्वत्वनाशकत्वे चौरैर्विभज्य गृहीते धने धनिनः स्वत्वनाशा-

पत्तिरित्यपि बोध्यम्।।६-७।।

**उच्यते एकदेशोपात्तस्यैव भूहिरण्यादावुत्पन्नस्य स्वत्वस्य विनिगमनाप्रमाणाभावेन वैशेषिकव्यवहारानर्हतया अव्यवस्थितस्य गुटिकापातादिना व्यञ्जनं विभागः॥८॥**

**विशेषेण भजनं स्वत्वज्ञापनं वा विभागः॥९॥**

उच्यत इति। भूहिरण्यादावुत्पन्नस्य एकदेशोपात्तस्य तत्तदंशावच्छिन्नस्य विनिगमना इदममुकस्य नान्यस्येत्यवधारणरूपा तत्प्रमाणाभावेन वैशेषिकव्यवहारः परस्परनैरपेक्षेण दानविक्रयादिलक्षणः तदनर्हतया अव्यवस्थितस्य सतोऽप्यसत्कल्पस्य गुटिकापातादिना व्यञ्जनम् इदममुकस्येत्यवधारणं विभाग इत्यर्थः आदिना उभयसन्मतमध्यस्थवचनादिपरिग्रहः अत्रैकदेशोपात्तेत्यादिकं स्वरूपकथनमात्रं न तु विभागपदार्थकोटौ तत्तद्रूपेण तेषां निवेशः। विभागपदार्थस्तु पूर्वस्वामिस्वत्वनाशजन्यतत्सम्बन्धाधीनसमुत्पन्नस्वत्वावधारणमात्रमिति अतएव सम्भूय वणिजां समुदायधनविभागो न दायभागः तेषामर्जनाधीनस्वत्वस्यैव विभागेनावधारणादिति। अस्मिन्नर्थे च विभागपदस्य योगाभावात् रूढ़िरेवेति बोध्यम्। नन्वत्र रूढ़िकल्पने गौरवं एवं पितृकृतविभागेऽव्याप्तिश्च तत्र पुत्राणां प्रागुत्पन्नस्वत्वाभावेन निरुक्तविभागत्वासम्भवात् न च तत्र विभागपदं स्वत्वावधारणरूपगुणयोगाद्गौणमेवेति वाच्यं मुख्यत्वे सम्भवति गौणत्वस्यान्याय्यत्वादत आह विशेषेणेति। पुरुषविशेषनिरूपितांशविशेषनिष्ठत्वेनेत्यर्थः। स्वत्वज्ञापनमिति स्वत्वज्ञापनं स्वत्वज्ञानानुकूलव्यापारो गुटिकापातादिरित्यर्थः। दायभागपदे तु व्युपसर्गाभावेऽपि धातूनामनेकार्थत्वात् भजतिरेव केवलो विशिष्टार्थमभिधत्त इति। एवञ्च भजत्यर्थैकदेशे ज्ञाने व्युपसर्गार्थस्य प्रकारतयान्वयात् विशेषेण स्वत्वज्ञानानुकूलव्यापारलक्षणो विभागः शक्तिलभ्य एवेति न रूढ़िकल्पना नवा पितृकृतविभागेऽव्याप्तिरिति। अस्मिंश्च कल्पे सम्भूय वणिजां धनविभागेऽपि विभागत्वमस्त्येव किन्तु न स दायभागः तद्धनस्य दायत्वाभावादिति बोध्यम्।।८-९।।

**यत्रापि चैकं दासीगवादिकं बहुसाधारणं तत्रापि तत्तत्कालविशेष वहनदोहनफलेन स्वत्वं व्यज्यते। तदाह बृहस्पतिः।**

**एकां स्त्रीं कारयेत् कर्म यथांशेन गृहे गृहे।**
**उद्धृत्य कूपवाप्यम्भस्त्वनुसारेण गृह्यते॥**
**युक्त्या विभजनीयं तदन्यथानर्थकं भवेत्।**
**इदं श्लोकार्द्धत्रयं नानास्थानस्थं न तु क्रमिकम्॥१०॥**

ननु यत्रैकैव दासी गवादिव्यक्तिर्वा पितृसम्बन्धिनौ तस्यां परस्परविरोधेन कस्यापि स्वत्वं न स्यात् तथाच तद्विभागो न दायभागः स्यादत आह यत्रेति। कालेति। कालविशेषे व्यवस्थापितद्वित्रिदिनादौ वहनं दोहनं वा फलं यस्य तादृशेन प्रथमं दिनद्वयं त्र्यादिर्वा ज्येष्ठस्य तदनु तावद्दिनं तदनुजस्य एवञ्चापरापरमपरापरस्येति मध्यस्थवचनेन स्वत्वं ज्ञाप्यत इत्यर्थः तथाचैकस्यामेव व्यक्तौ कालिकाव्याप्यवृत्तीनि नानास्वत्वानि स्वामित्वलक्षणानि सर्वेषु पुत्रेषु प्रागुत्पन्नानि तेषाञ्चैकैकस्य मध्यस्थवचनेन कालविशेषे तत्तद्व्यक्तिनिष्ठत्वेनावधारणमिति तत्र तादृशमध्यस्थवचनमेव विभागोऽव्याहत इति भावः। कालभेदेन स्वत्वञ्चेत् प्रागुत्पन्नप्रमितं स्यात् तदा तत्प्रतिपादकमध्यस्थवचनमपि विभागः स्यादतः कालभेदेन तथाविधस्वत्वे प्रमाणमाह एकां स्त्रीमिति। यथांशेन भागिसमसङ्ख्यमासदिवसाद्यंशेन तथाच कालभेदेन कर्ममात्रविधानात् कालभेदेनैव तत्र सर्वेषां स्वत्वं प्रागुत्पन्नमिति प्रतिपादितं तच्चैकैकस्य एकैकमेवाव्याप्यवृत्ति न तु नाना अनन्तरस्वत्वतदुत्पत्तिविनाशकल्पनागौरवादिति। अनुसारेण स्वस्वप्रयोजनानुसारेण न तु परिमाणसाम्येन। ननु यथैकस्मिन् सुवर्णादावंशभेदेन स्वत्वमभ्युपेयते तथैकस्यामपि दासीगवादिव्यक्तौ अंशभेदेन स्वत्वमभ्युपेयतामत आह युक्तेति।

युक्तिश्च प्रयोजनसापेक्षतया वैशेषिकयथेष्टविनियोग एव विभाग प्रयोजनं, तच्चावयवविभागेऽसम्भवि अवयवानां स्वातन्त्र्येण यथेष्टविनियोगानर्हत्वात् निरर्थक एव विभागः स्यादित्याह अन्यथेति। इदमुपलक्षणं अवयविन निधित्वापत्तिः अयं न कस्यापीति व्यवहारापत्तिश्च द्रष्टव्या तथा चानायत्या कालभेदेनैव स्वत्वमिति सुवर्णादीनाञ्च स्वातन्त्र्येण विनियोगार्हत्वात् तत्र देशभेदेनैव स्वत्वमिति। ननु तत्कालस्वामिना विक्रीते वस्तुनि कालान्तरस्वामिनामनुमतिमन्तरेणापि तत्र क्रेतुः सार्वकालिकस्वत्वापत्तिरिति चेन्न विक्रेतुर्यादृशं स्वत्वं क्रेतुस्तादृशमेव स्वत्वं क्रयाज्जायते। एवञ्च क्रेतुर्विक्रेतुः स्थानीयतयान्यैः सह तद्वस्तुनः पर्य्यायेण विनियोग इति। अतएव राज्यान्तराधिकारिणः सकाशात् अन्यनृपतिना क्रीते राज्यान्तरादौ विक्रेतृस्वत्वसजातीयं करग्रहणोपयोगि स्वत्वमेव तत्र तस्य जायते न तु दायप्रतिगृहीतभूम्यादिवृत्तिस्वत्वसजातीयस्वत्वं तत्र भूम्यादौ तथाविधस्वत्वसत्त्वेन तद्विरोधात् तादृशस्वत्वान्तरोत्पत्त्यसम्भवात् समानजातीययोस्तयोर्विरोधादिति। एतत् श्लोकार्द्धत्रयस्य संहितायां क्रमेणदर्शनात् अमूलत्वशङ्कामपनेतुमाह इदमिति। यच्चात्र स्मार्त्तेन दूषणमभिहितं अविभक्तभ्रात्रोरेकेन भ्रात्रा साधारणाश्वयोरेकतरमादाय धनमर्जितं तत्रार्जितधनेऽर्जकस्य द्वावंशौ अपरस्यैकोऽंश इति सर्वसम्मतं तत्र यदि गुटिकापातादिना पश्चादर्जकेन सोऽश्वो लब्धस्तदा प्रादेशिकस्वत्ववादिमते प्रागप्यर्जकस्यैव सोऽश्व इति तेनार्जितधने कथं भ्रात्रन्तरस्य भागः यदि चानर्जकेन लब्धस्तदा समभागोयुक्तः एकस्य स्वायासेन अपरस्याश्वायासेनार्जितत्वादिति तदसत् प्रादेशिकस्वत्ववादिमतेऽविभक्तस्यैव साधारणपदार्थत्वादिति सामान्यस्वत्वानभ्युपगमेनान्यविधस्यासम्भवात् अतस्तदुक्तदोषासम्भवादिति सुधीभिर्भाव्यम्। अत्र हरिनाथमिताक्षरावाचस्पतिमिश्रानुयायिनः यत्र यस्य स्वत्वं तत्रैव तस्य गुटिकापात इत्यत्र प्रमाणाभावात् दुर्विभक्तत्वेन पुनर्गुटिकापातविसंवादाच्च, किञ्च एकक्षेत्रोत्पन्नशस्यानां यत्रांशक्रमेण ग्रहणं तत्र किमवच्छेदेन स्वत्वं जायते न शस्यावच्छेदेन शस्यानां तदानीमजातत्वात् किञ्च एकेन गवा कृष्टभूम्यादेर्यत्र शस्यविभागस्तत्रकिमवच्छेदेन गवि स्वत्वं शस्यावच्छेदेनेति चेन्न शस्यादेस्तदसम्बन्धात् नह्य सम्बन्धोऽप्यवच्छेदकः किञ्च सम्बन्धसाम्यात् सर्वेषां सर्वत्र स्वत्वोत्पत्तौ बाधकाभावात् प्रागभावादृष्टादीनां विशिष्य हेतुत्वाभावात् सम्बन्ध्यन्तरसत्तायाः प्रतिबन्धकत्वे गौरवात्, न च सामान्यस्वत्वोत्पत्तिविनाशकल्पनागौरवं प्रामाणिकत्वात् एकस्यां दास्यां दशानां स्वत्वे त्रिदिनात् परं स्वत्वनाशतदुत्पत्तिकल्पनायां विपरीतगौरवाच्च विभागस्य स्वत्वनाशकत्वं तद्धेतुत्वञ्च पितृकृतविभागे क्लृप्तमित्याहुः।।१०।।

**ननु पितर्य्यूर्ध्वं गते पुत्रा विभजेयुर्धनं पितुरिति नारदवचनात् पितुर्धनं विभजेयुरित्यन्वयात् विभागात् पूर्वं न तत्र पुत्राणां स्वत्वं न च विभागस्य स्वत्वकारणता असम्बन्धिधनेऽप्यतिप्रसङ्गात्।।११।।**

विभागः प्रागुत्पन्नस्वत्वज्ञापकः स्वत्वजनको वेति मतद्वयोपरि माध्यमिकः शङ्कते नन्विति। न तत्र पुत्राणामिति पितुर्धनमिति षष्ठ्याबोधितपितृस्वत्वस्य प्रतिबन्धकत्वात् तथाच प्रागुत्पन्नस्वत्वज्ञापको विभाग इति न सम्भवतीति भावः। द्वितीयमतमाशङ्क्य निषेधति न चेति। स्वत्वकारणतेत्युपलक्षणं पूर्वस्वत्वनाशकतेत्यपि बोध्यम्। असम्बन्धीति। उदासीनैरसम्बन्धिधने गुटिकापातादौ कृते तत्र स्वामिस्वत्वनाशोदासीनस्वत्वयोः प्रसङ्गादित्यर्थः, न च सम्बन्धिधनस्वत्वं प्रत्येवास्य कारणत्वमिति वाच्यं सुस्थस्य जीवतः पितुर्धने पुत्रैर्बलाद्विभागे तदापत्तेः।।११।।

**उच्यते पित्रादिनिधनानन्तरमेवास्मदीयं धनमिति प्रयोगात् एकपुत्रे च विभागं विनैव स्वत्वस्वीकाराच्च सम्बन्धिनिधनमेव स्वत्वकारणमतो नातिप्रसङ्गः।।१२।।**

**नन्वर्जयितृव्यापारोऽर्जनम् अर्जनाधीनस्वामिभावश्चार्जयिता तेन पुत्रव्यापारो जन्मैवार्जनं युक्तम् अतो जीवत्येव पितरि पुत्राणां तत्र स्वत्वं न तु तन्निधनात् अत एवोक्तं क्वचिज्जन्मैव यथा पित्र्ये धने॥१३॥**

**नैतत् मन्वादिविरोधात् यथा मनुः,**
**ऊर्ध्वं पितुश्च मातुश्च समेत्य भ्रातरः समम्।**
**भजेरन् पैतृकं रिक्थमनीशास्ते हि जीवतोः॥१४॥**

विभागात् पूर्वं पुत्राणां स्वत्वव्यवस्थापनेनैव स्वमतसिद्धविभागस्य निष्प्रत्यूहतेति तत् व्यवस्थापयति उच्यत इति। पितृनिधनानन्तरमित्यत्र निधनपदं इतरस्वत्वाभिसन्धानापूर्वकस्वस्वत्वापगमहेतुभूतव्यापारोपलक्षकम् एवमुत्तरत्रापि बोध्यम्। ननु विभाग एव सम्बन्धिना क्रियमाणः स्वत्वहेतुरतो नासम्बन्धिधनेऽतिप्रसङ्गः तस्य च सम्बन्धिनिधनपातित्याश्रमान्तरप्रवेशाद्यन्यतमकालस्य सहकारित्वात् न बलाद्विभागे तदापत्तिरतो विभागात् पूर्वमस्मदीयमिति प्रयोगो गौण एवेत्यत आह एकपुत्रे चेति। तथाच व्यभिचारात् विभागस्य सामान्यतः कारणत्वबाधेन तत्र क्लृप्त कारणादेव सम्बन्धिनिधनात् बहुपुत्रस्थलेऽपि तन्सम्भवे तदन्यथासिद्धेश्च सर्वत्र सम्बन्धिनिधनमेव स्वत्वहेतुरित्युत्पन्नस्वत्वघटितविभागलक्षणस्य नानुपपत्तिर्न वा पूर्वमस्मदीयमिति प्रयोगो गौणः किन्तु मुख्य एवेति पितुर्धनमिति तु भूतपूर्वस्वत्वात् उपपाद्यमिति भावः। अर्जयितृव्यापार इति। इदञ्च नार्जनार्जयित्रोर्लक्षणपरम् अन्योन्याश्रयप्रसङ्गात् किन्त्वर्जनस्वामित्वयोः सामानाधिकरण्येन कार्य्यकारणभावपरम् अर्जनलक्षणन्तु स्वामित्वहेतु भूतव्यापारत्वमेव तथाच व्याधिकरणस्य पितृनिधनादेर्न पुत्रस्वत्वोत्पत्तौ हेतुत्वमित्याशङ्कार्थः। तेन व्यधिकरणस्य हेतुत्वासम्भवेन। जन्मैवेति। न च पुत्रोत्पत्त्यनन्तरं पित्रर्जितद्रव्ये पुत्रस्वत्वानुपपत्तिराद्यलक्षणसम्बन्धरूपपुत्रजन्मनोऽतीतत्वादिति वाच्यं जन्मपदेनाद्यक्षयसम्बन्धध्वंसस्यैव लक्षणयोक्तत्वात् ननु स्वत्वं यथेष्टविनियोज्यत्वेन शास्त्रगम्यत्वलक्षणं तच्च पितुर्भाविद्रव्ये पुत्रस्याक्षतं पितुर्द्रव्यं पुत्रैर्यथेष्टविनियोज्यमिति शास्त्रेण पितृद्रव्यस्वत्वावच्छेदेनैव पुत्रविनियोज्यत्वस्य बोधनादिति चूड़ामणिमतमादरणीयमिति चेन्न तथा सति जन्मप्रागपि स्वत्वापत्त्या जन्मैवार्जनमित्यनुपपत्तेः किञ्च स्वं विनियुञ्जीतेति श्रुतिवाक्यादन्वयबोधे सति यथेष्टविनियोज्यत्वेन शास्त्रगम्यत्वरूपस्वत्वज्ञाने स्वपदात् तदुपस्थितिः तस्याञ्च सत्यां तदन्वयबोध इत्यत्योन्याश्रयात् तस्मात् स्वत्वं पदार्थान्तरमेव स्वत्वतञ्चाखण्डोपाधिविशेष इति। युक्तमिति। अर्जनस्वामित्वयोः सामानाधिकरण्यानुरोधादिति भावः। जीवत्येवेति। पातित्यादिकं विनेति शेषः। जन्मैवेति। अर्जनमिति शेषः। दूषयति नैतदिति। उर्ध्वं स्वत्वोपरमानन्तरम्।।१२-१४।।

**जीवतोरपि पित्रोः पुत्राणां कुतो न विभाग इत्याशङ्कायामिदमुत्तरं तदानीमस्वामित्वादिति॥१५॥**

**न च भार्य्या पुत्रश्चेत्यादिवत् अस्वातन्त्र्याभिप्रायमिति वाच्यं तदानीं स्वत्वे प्रमाणाभावात् भार्य्यादिषु तु यत्ते समधिगच्छन्ति अर्जयन्तीति स्वत्वे सिद्धे युक्तमस्वातन्त्र्यवर्णनम्॥१६॥**

**किञ्च स्वोपात्तेऽपि तेषामस्वामित्वे स्वधनसाध्यवैदिककर्मोच्छेदात् श्रुतिविरोधः स्यात्॥१७॥**

**देवलश्च पितृधने अस्वाम्यमेव स्पष्टयति-**
**तथा पितर्य्युपरते पुत्रा विभजेयुर्धनं पितुः।**
**अस्वाम्यं हि भवेदेषां निर्दोषे पितरि स्थिते॥१८॥**

भार्य्या पुत्रश्च दासश्च तत्र एवाधनाः स्मृताः। यत्ते समधिगच्छन्ति यस्यैते तस्य तद्धनमित्यत्र यथा अधना इत्यस्य अस्वतन्त्रा इत्यर्थः तथा अनीशा इत्यत्रापि अस्वतन्त्रा इत्यर्थो वाच्य इत्याशङ्कते न चेति। तदानीं पितृजीवनकाले। भार्य्यादिष्विति। अर्जयन्तीत्यनेन स्वत्वहेतुरूपार्जनबोधनात् स्वत्वप्राप्तौ तदन्यथाऽनुपपत्तया युक्तमस्वातन्त्र्यवर्णनमित्यर्थः। नन्वधिगमो नोपार्जनं किन्तु उपादानमेव वाच्यमत आह किञ्चेति। न च पत्यादिभिर्दत्तैः कर्मोपपत्तिरिति वाच्यं तर्हि पत्यादिकृतत्याग एव भार्य्यादीनां स्वत्वमुत्पादयेत् तथाचान्यतो लब्धे यथा लाभानन्तरमेव पत्यादेः स्वत्वं तथा पत्यादितो लब्धेऽपि स्यादिति कथं तेन कर्मोपपत्तिरिति तद्दोषतादवख्यात्। ननु अनीशा इत्यस्य अस्वतन्त्रा इत्येवार्थः अस्वाम्यार्थकत्वे जीवतोरिति द्विवचनबललभ्यस्य पितरि जीवति मातरि जीवन्त्याम् अनीशा इत्यस्य पित्रुपरमानन्तरं मातृसत्त्वविषये बाधापत्तेः तदानीं पुत्राणां स्वामित्वे सर्वेषामविवादादत आह देवलश्चेति। तथाचात्र मातुरश्रुतत्वात् अस्वाम्यपदं मुख्यमेव नत्वस्वातन्त्र्ये। लाक्षणिकमिति भावः।।१५-१८।।

**किञ्च जीवत्यपि पितरि पितृधने पुत्राणां स्वामित्वे पितुरनिच्छयापि विभागः स्यात् जन्मनैव स्वत्वमित्यत्र प्रमाणाभावाच्च अर्जनरूपतया जन्मनः स्मृतावनधिगमात्।।१९।।**

**क्वचिज्जन्मैवेति च जन्मनिबन्धनत्वात् पितापुत्रसम्बन्धस्य पितृमरणस्य च स्वत्वकारणत्वात् परम्परया वर्णनम्।।२०।।**

**अन्यव्यापारेणान्यस्य स्वत्वमविरुद्धं शास्त्रमूलत्वादस्य। दृष्टञ्च लोकेऽपि दाने हि चेतनोद्देशविशिष्टत्यागादेव दातृव्यापारात् सम्प्रदानस्य द्रव्ये स्वामित्वम्।।२१।।**

नन्वत्र नञर्थोऽप्राशस्त्यमेव अप्राशस्त्यं विरोधश्चेत्यादिना तस्यापि नञर्थतयोक्तेः स्वाम्यस्याप्राशस्त्यञ्च पितुरनुमतिनैरपेक्षेणैव विनियोगाप्रोजकत्वम् अभावार्थकत्वे भवत्यर्थोत्पत्त्यन्वयानुपपत्तेरत आह किञ्चेति। ननु पितुरनुमत्या दायभागः जीवति पितरि रिक्थविभागोऽनुमतेरित्यादिवचनात् विभागेऽप्यस्वातन्त्र्यमविशिष्टमत आह जन्मनैवेति। तथाचानुपपत्त्यभावादस्वाम्यमित्यत्र न लक्षणा भवतिश्चास्ति समानार्थकी न लाक्षणिक इति भावः। स्मृतिरेव प्रामाणमिति निराकरोति अर्जनरूपतयेति। ततश्च उत्पत्त्यैवार्थं स्वामित्वाल्लभेतेत्याचार्य्या मन्यन्ते इति मिताक्षराधृतगौतमवचनम् अमूलं समूलत्वे वा यस्मिन् गर्भस्थे पित्रादिर्भृतः तत्परम् अन्यथा पुत्रवतः पितुः स्वधनेऽप्यस्वातन्त्र्यापत्तेरित्याशयः। वस्तुतस्तु उत्पत्तयैवेति तृतीया प्रयोजनकतायां न तु जनकतायां तथाचोत्पत्तिसम्बन्धस्य सम्बन्धान्तरादधिकतया तत्प्रयुक्तो जनकधने तत्स्वत्वापगमानन्तरं पुत्रोऽधिकारीत्येतत् तात्पर्य्यमिति बोध्यम्। क्वचिदिति ग्रन्थान्तरे। जन्मैवेति लौकिकं प्रामाणिकवाक्यमित्यर्थः। जन्मनिबन्धनेति। तत्पितृमरणस्य कारणत्वे तज्जन्मनोऽपि तत्प्रयोजकत्वादित्यर्थः। ननु फलाधिकरणप्रत्यासन्नस्यैव फलजनकता तत्र च साक्षात्प्रत्यासत्तिसम्भवे परम्पराप्रत्यासत्तिर्नाश्रीयते गौरवात् तथाच पितृमरणादेर्व्यधिकरणतया जनकत्वाभावात् साक्षात्प्रत्यासत्तिशालिनी जन्मन एव कारणत्वं स्यादत आह अन्यव्यापारेणेति। शास्त्रमूलेति। तथाच शास्त्रबलेनैव व्यधिकरणस्यापि परम्परया कारणत्वमिति भावः। ननु शास्त्रम् अनीशास्ते हीत्यादिकं तच्चास्वातन्त्र्यपरमित्युक्तमेवेत्यत आह दृष्टञ्चेति। त्यागमात्रात्। वृषोत्सर्गादिरूपात् स्वामित्वाजननादाह चेतनोद्देशेति। उद्देशः स्वामित्वेन विषयता सा च त्यागात्मिकाया इच्छाया एवेत्यत आह विशिष्टत्यागादिति।।।१९-२१।।

**न च स्वीकरणात् स्वत्वं स्वीकर्त्तुरिव दातृत्वापत्तेः परस्वत्वापत्तिफलेन हि दानरूपता तच्च फलं सम्प्रदानाधीनं यथा देवतोद्देशन द्रव्यत्यागं कुर्वन्नपि यजमानो न होता किन्तु तस्यैव**

**त्यागस्य होमाभिधाननिमित्तं प्रक्षेपं कुर्वन् ऋत्विगेव होतेत्युच्यते तद्वदत्रापि स्यात्। किञ्च मनसा पात्रमुद्दिश्येत्यादिशास्त्रे स्वीकारात् प्रागेव दानपदं दृष्टम्।।२२।।**

**ननु ग्रहणं स्वीकारः अभूततद्भावे च्विप्रयोगात् अस्वं स्वं कुर्वन् व्यापारः स्वीकारो भवति कथं तत् प्रागेव स्वत्वम्।।२३।।**

**उच्यते, उत्पन्नमपि स्वत्वं सम्पदानव्यापारेण ममेदमिति ज्ञानेन यथेष्टव्यवहारार्हं क्रियत इति स्वीकारशब्दार्थः। याजनाध्यापनसाहचर्य्याच्च प्रतिग्रहस्य स्वत्वमजनयतोऽपि अर्जनरूपता न विरुद्धा याजनादौ दक्षिणादानादेव व स्वत्वात्।।२४।।**

ननु त्यागात् केवलं स्वत्वनाशः सम्प्रदानस्वत्वं ममेदमिति भाविस्वत्वावगाहितत्स्वीकारादेवेति मतं निराकरोति न चेति। स्वीकर्त्तुरिवेत्येवकारेण त्यक्तुर्व्यवच्छेदः। इदमुपपादयति परस्वत्वापत्तिफलेन हीति। अत्रायमाशयः धात्वर्थतावच्छेदकफलानुकूलव्यापारवत एव तृजन्ततद्धातुव्यपदेश्यत्वं यथा धात्वर्थतावच्छेदकोत्तरदेशसंयोगानुकूलव्यापारवति चैत्रे गन्तेति व्यवहारः। स्वीकारस्य स्वत्वहेतुत्वे धात्वर्थतावच्छेदकपरस्वत्वानुकूलस्वीकाररूपव्यापारवतः स्वीकर्त्तुरिवदातृपदव्यपदेश्यत्वापत्तिरिति पूर्व-स्वत्वध्वंसरूपफलस्य न तद्वयपदेशनियामकता तथात्वे उपेक्षितुरपि दातृपदव्यपदेश्यत्वापत्तिरिति। केचित्तु स्वीकारस्य स्वत्वहेतुत्वे परस्वत्वफलोपहितत्यागात्मकदाने सर्वांशे एकस्यापि कर्त्तृत्वासम्भवात् एकांशमादायैव दातृत्वव्यवहारे कर्त्तव्ये प्राधानीभूतफलांशानुकूलव्यापारवत्येव दातृव्यवहारः स्यादिति व्याचक्रुः। दृष्टान्तेनेदं द्रढयति यथा हीति। हीमाभिधाननिमित्तमिति। विशिष्टदेशावच्छिन्नप्रक्षेपोप-हितत्यागस्य होमत्वात् प्रक्षेपस्य तदभिधाननिमित्तत्वमित्यर्थः। तेन हुधात्वर्थतावच्छेदकप्रक्षेपानुकूल-व्यापारवति ऋत्विजि होतेति व्यपदेशो यथा तथेत्यर्थः। त्यागस्य स्वत्वहेतुत्वे स्फुटमेव शास्त्रं प्रमाणयति किञ्चेति। आदिना भूमौ तोयं विनिक्षिपेदित्युत्तरप्रतीकपरिग्रहः। शास्त्रे शास्त्रबोधितत्यागे। दानपदं दृष्टमिति। विद्यते सागरस्यान्तो दानस्यान्तो न विद्यते इति तद्वचनस्योत्तरार्द्धे दानपदं प्रयुक्तमित्यर्थः तथाच निरन्तरयोरेव स्वस्वत्वध्वंसपरस्वत्वोत्पत्तिफलयोर्ददाति धात्वर्थतावच्छेदक-त्वात् दानस्य परस्वत्वहेतुता शास्त्रसिद्धैवेति भावः। स्वीकारात् प्रागेव स्वत्वे ग्रहणस्य स्वीकार-पदार्थत्वासम्भवमाशङ्कते नन्विति। स्वीकारशब्दार्थ इति। तथाच स्वपदस्य यथेष्टविनियोगार्हत्वविशिष्टे लक्षणेति भावः। ननु याजनाध्यापनप्रतिग्रहैर्ब्राह्मणो धनमर्जयेदित्यत्र राजसूयेन यजेतेत्यादिवत् याजनाद्यात्मकैर्द्धनमर्जयेदित्यन्वयात् प्रतिग्रहस्यार्जनरूपता सिद्धा प्रतिग्रहस्य स्वत्वहेतुत्वे च तद्विरुद्धं स्वत्वहेतुव्यापारस्यैवार्जनत्वादत आह याजनेति। अर्जनरूपता अर्जनव्यपदेशः। अविरोधमुपपादयति याजनादाविति तथाच याजनादीनां स्वत्वाहेतुत्वेन तदन्वयानुरोधवत् अर्जयेदित्यत्रार्जनत्वं न स्वत्व-जनकत्वं किन्तु स्वत्वप्रयोजकत्वमेव तच्च प्रातिग्रहेऽप्यक्षतं दत्ते सत्ययं प्रतिगृह्णातीत्यवधारण एव तदुद्देशेन दातुस्त्यागात् तत्स्वत्वोदयात् प्रतिग्रहवैमुख्यज्ञाने तद्वयतिरेकाच्चेति भावः। ननु धात्वर्थ-गमनानुकूलकृतिमत्येव गन्त्रादिव्यपदेशो लाघवात् न तु धात्वर्थतावच्छेदकफलानुकूलव्यापारवति गौरवात् तथाच कथं प्रतिग्रहीतुर्दातृत्वापत्तिः तस्य दानानुकूलकृत्यभावात् अतएव ऋत्विगेव होतेत्युच्यते तस्यैव हवनानुकूलकृतिमत्त्वात् न यजमानस्य भवन्मते स्वीकारे स्वपदस्य यथेष्टविनियोगार्हत्वविशिष्टे लक्षणावच्च मन्मतेपि शास्त्रीयदानपदस्य स्वत्वाभिसन्धानपूर्वकत्यागे लक्षणा किञ्च याजनाध्यापनयोः पूर्ववर्त्तितया प्रयोजकत्वात् तत्समभिव्याहतप्रतिग्रहस्यापि तथात्वं युक्तं न तु प्रयोजकज्ञानविषय-तया।।२२-२४।।

**पितृनिधनकालीनं वा जीवनमेव पुत्रस्यार्जनं भविष्यति किञ्च भ्रात्रादिधने तन्मरणात् तन्मरणकालीनजीवनाद्वा भ्रात्रन्तरादेः स्वत्वमकामेनापि वाच्यम्।।२५।।**

**अत ऊर्ध्वं पितुश्चेत्यादि (मनु ९।१०४) तत्कालीनस्वत्वज्ञापनार्थं तदानीमेव चेच्छाप्राप्तं विभागमनुवदति प्राप्तत्वात् विधानानुपत्तेः।।२६।।**

**न च नियमः सम्भवति एवं सह वसेयुर्वा पृथग्वा धर्मकाम्ययेति (मनु ९।१११) मनुविरोधात् दृष्टार्थत्वाच्च विभागस्य न तन्नियमः कालनियमो वा सम्भवति।।२७।।**

अपिच त्यागमरणाद्योः स्वत्वहेतुत्वे तदानीं त्यक्तृमृतादीनामर्जयितृप्रतीतिव्यवहारापत्तिरतः समानाधिकरणव्यापार एव स्वत्वहेतुर्लाघवात् तत् कथं पितृनिधनादेः पुत्रस्वत्वहेतुत्वमत आह पितृनिधनकालीनं वेति। पुत्रजीवनमेव स्वत्वहेतुः तत्र पितृनिधनकालः सहकारीत्यर्थः एवं सति अस्वाम्यं हीत्यादिकमपि सङ्गच्छते जन्मनो हेतुत्वे तत्र लक्षणा स्यादिति भावः। विनिगमकान्तरमाह किञ्चेति। मरणस्य हेतुत्वे पूर्वोक्तदोषापत्तितस्तन्मरणकालीनजीवनद्वेति। अकामेनापीति। अन्यथा मातृपर्य्यन्तरहितभ्रातृधने तस्मिन्निर्दोषे जीवत्यपि भ्रात्रन्तरस्याद्यलक्षणसम्बन्धध्वंसरूपजन्मतः स्वत्वापत्तेस्तदनिच्छयाऽपि विभागप्रसङ्गात् भ्रातृस्वत्वस्य च भ्रात्रन्तरस्वत्वाविरोधात् सामुदायिकस्वत्वे तथा दर्शनात् एवं भ्रातुर्दारपरिग्रहे तदनन्तरं भ्रातुः स्वत्वनाशस्तद्धने तद्दारमरणे पुनः स्वत्वोत्पत्तिरिति कल्पनागौरवाच्च। अतोऽत्र क्लृप्तकारणादेव जीवनादन्यत्रापि निर्वाहे किं पुत्रस्वत्वं प्रति तज्जन्मनो हेतुत्वकल्पनयेति भावः। अत्र मनोः स्वरसं दर्शयति अत इति। यतो न जीवति स्वत्वमत इत्यर्थः। तत्कालीनं पितृमरणकालीनम्। यत उक्त न्यायात् उपरम एव स्वत्वं तत इच्छया विभागोऽपि तदा प्राप्त एवेति विभागविध्यनुपपत्तेराह तदानीमेवेति। पितुरुपरमकालमित्यर्थः। अनुवदतीति। तथाच तात्कालिकस्वत्वज्ञापनार्थं विभागानुवाद इति न तद्विधिरिति भावः। विधित्वे सम्भवत्यनुवादत्वमन्याय्यमतो नियमविधिरेव भविष्यतीत्याशङ्क्य निषेधति न चेति नियमः पितुरुर्ध्वं विभजेदेवेत्येवंरूपः दृष्टार्थत्वादिति। दृष्टमात्रार्थत्वात् अदृष्टाजनकत्वादिति यावत् तथा चादृष्टजनककर्मण्येव करणाकरणयोः शुभाशुभादृष्टमात्रार्थो नियमः यथा जलाशयोत् सर्गादौ गोरवतारणानुमन्त्रणयोर्यजमानकर्त्तृकमन्त्रपाठनियमः करणे शुभादृष्टार्थः पोष्यवर्गभरणादिनियमश्च अकरणदशभादृष्टार्थ इति करणाकरणाभ्यां तज्जनकस्त्वयं विभागो वचनशतेनापि नियन्तुमशक्य इति भावः। कालनियमो यदि विभजेत् तदा पितुरूर्ध्वमेव विभजेदित्येवंरूपः।।२५-२७।।

**किञ्च पितर्य्युपरत इत्यनन्तरकाल एव विभागः स्यात् न तु परस्तादपि जातेष्टिवत् जातप्राणवियोगापत्तिसमानस्यात्र विरोधस्याभावात् पित्रुपरमानन्तरस्य च यावज्जीवपर्य्यन्तस्य स्वेच्छात एव प्राप्तत्वात्।।२८।।**

**अतो जीवति पितरि सत्यपि पुत्राणां स्वाम्ये विभागनिषेधार्थं मनुवचनं वाच्यं तच्चान्याय्यम् अस्वार्थपरत्वापत्तेः।।२९।।**

अथास्त्वदृष्टार्थ एव कालनियम इत्यत आह किञ्चेति। पितुरुपरमानन्तरमित्यत्रानन्तरम् अव्यवहितानन्तरम् अनन्तरमात्रं वा आद्येऽनन्तरकाल एवेति पितुपरमाव्यवहितानन्तरकाल एवेत्यर्थः। विशेषणस्येतरव्यावृत्तिफलत्वादाह नन्विति। ननु यथा वैश्वानरं द्वादशकपालञ्चरुं निर्वपेत् पुत्रे जाते इत्यत्र जातेष्ट्यव्यवहितोत्तरकालस्य प्राप्तावपि बाधकबलादशौचान्ते क्रियते तथात्रापि समयान्तरे विभागो भविष्यतीत्यत आह जातेष्टीति। जातप्राणेति। तथाच नाड़ीच्छेदानन्तरमशौचोत्पादात् जातककर्मवदच्छिन्ननाड़ीदशायामेव इष्टिर्वाच्या स्तन्यपानञ्च कृन्तत नाभीमिति ब्रूयात् स्तनञ्च प्रतिधत्तेति गोभिलेन नाड़ीच्छेदात् परमभिहितं तावत् कालञ्च स्तन्यापाने शुष्ककण्ठतया बालवियोगापत्तिरिति तद्विरोधात् तत्र तथा इह तु न तद्विरोध इत्यर्थः। द्वितीये पितुरुपरमानन्तरस्येति। स्वेच्छात एवेति।

तथाच पित्रुपरमात् पूर्वं पुत्राणामस्वाम्यात् विभागाप्रसक्तेर्विभागे तदनन्तरकालस्यावश्यकतया विधिं विनापि सिद्धत्वेन अव्यावर्त्तकतया तथा नियमो व्यर्थ एवेति भावः। अदृष्टार्थकत्वकल्पना चादृष्टादिकल्पना गौरवपराहतैवेति हृदयम्। ननु तथापि परिसङ्ख्याविधिरास्तां जीवति पितरि पुत्रा न विभजेरन्निति नानुवाद इत्याशङ्क्य निराकरोति अत इति। भवन्मते स्वत्वस्य प्रागेव जातत्वात् अन्यथा प्रसक्त्यभावे निषेधानुपपत्तिरिति भावः। वाच्यं भवतेति शेषः। अस्वार्थेति ऊर्द्ध्वं भजेरन्नित्यस्य जीवति न भजेरन्नित्यस्वार्थपरत्वापत्तेरित्यर्थः। इदमुपलक्षणं स्वार्थहानिरपि बोध्या। प्राप्तबाधस्त्वत्र नास्ति जीवति पितरि विभागस्याप्राप्तेरिति बोध्यम्। एतेन स्वार्थ-हानिप्राप्तबाधावपि बोध्याविति चूड़ामण्युक्तं न युक्तम्।।२८-२९।।

**अतो जीवतोः पित्रोर्धने पुत्राणां स्वाम्यं नास्ति किन्तूपरतयोरिति ज्ञापनार्थं मन्वादिवचनम् एकः शाब्दोऽपरश्चार्थः।।३०।।**

**न चोपरममात्रमेव विवक्षितं किन्तु पतितप्रव्रजितत्वाद्युपलक्षयति स्वत्वविनाशहेतुता-साम्यात्।।३१।।**

**तदाह नारदः।**

**मातुर्निवृत्ते रजसि दत्तासु भगिनीषु च।**
**विनष्टे वाप्यशरणे पितर्य्युपरतस्पृहे।।३२।। (नारद १३।३)**

**विनष्टे पतिते अशरणे गृहस्थाश्रमरहिते। यदा निवृत्ते वापि मरणादिति पाठः तदा मरणान्निवृत्ते जीवति निस्पृह इति। पाठान्तरमनाकरम्।।३३।।**

सप्रयोजनतयाऽनुवादो न दोषायेति स्वमतमुपहसंहरति अत इति। एको जीवति स्वाम्याभावः शाब्दः अनीशा इतिशब्दबोधितः। अपर उपरमे स्वाम्यरूपः आर्थो विभागोन्नेयः। उपरमपदस्य यथाश्रुतार्थपरत्वे पतितादौ जीवति पितरि तद्धनविभागाभावप्रसङ्ग इत्यत आह न चेति। नहीत्यर्थः। आदिना वानप्रस्थत्वोपरतस्पृहत्वपरिग्रहः। लक्ष्यतावच्छेदकमाह स्वत्वविनाशेति। तथाच स्वत्व-प्रतिसन्धानापूर्वकस्वत्वापगमहेतुव्यापारत्वेन लक्षणेत्यर्थः। तेन पितृदत्तादौ न विभागप्रसङ्गः दानादेः स्वत्वप्रतिसन्धानपूर्वकत्वादिति। पातित्यादेः स्वत्वनाशकत्वे प्रमाणमाह तदाहेति। अत्र पुत्रा विभजेयु-रित्युपक्रमलब्धत्वेन विभागनुषङ्गात् पितृस्वत्वापगमपुत्रस्वत्वयोरवगसादिति भावः। निर्दोषे पितरि स्थिते इति देवलवचनेन सदोषे पितरि स्थिते तत्स्वाम्यनाशपुत्रस्वाम्यावगमात्तदेकवाक्यत्वाच्च। विनष्टे पतिते इति। विनाशार्थकत्वे पितर्य्यूर्ध्वं गते पुत्रा इति नारदवचनान्तरेण सह पौनरुक्त्यापत्तेरिति भावः। अत्र पतितस्यापि सर्वस्वदानादिप्रायश्चित्तश्रवणात् प्रायश्चित्तपराङ्मुखेति विशेषणं देयं तेन प्रायश्चित्तप्रागभावाभावसहकृतं पातित्यं स्वत्वनाशहेतुरिति बोध्यम्। गृहस्थाश्रमरहित इति। गृहस्थाश्रमो गार्हस्थ्यं तद्रहिते आश्रमान्तरगते इत्यर्थः। गृहस्थाश्रमाशरणे इति पाठेऽपि शरणं गृहरक्षित्रोरित्य-मरकोषात् तदरक्षितरीति स एवार्थः। उपरतस्पृहे स्वत्वसमानकालीनेच्छाप्रागभावासमानकालीनेच्छा-ध्वंसवति। यदेति। विनष्टे वापीति तृतीयचरणे निवृत्ते वापीति यदा पाठ इत्यर्थः तदा अस्य निस्पृहत्वविशेषणमाह तदेति। यदा तदेति अस्वरससूचनाय, तद्वीजञ्च विशेषणवैयर्थ्यमेवेति। पाठान्तरमिति। निवृत्ते वापि रमणादिति प्रकाशादिधृतपाठान्तरमनाकरमित्यर्थः बहुषु ग्रन्थेष्वदर्शनात् तथाविधे पितरि विषयान्तर स्पृहावत्यतिप्रसङ्गाच्चेति भावः।।३०-३३।।

**अत्राप्युपरतस्पृहत्वादिना पुत्राणां स्वत्वं पितृधने भवतीति ज्ञापनादयमेकः कालो विभाग-स्येच्छाप्राप्तोऽनुद्यते प्राप्त्यनुसारित्वाच्चानुवादस्य स्वामित्वाच्च प्राप्तेः।।३४।।**

**एकस्यापि स्वधने स्वाभ्यादेकेच्छयापि विभागप्राप्तेः समेत्येति (मनु ९।१०४) सहितत्वं पक्षप्राप्तमनूद्यते। अन्यथा साहित्यवत् बहुत्वस्थाप्यवगतेर्द्वयोर्विभागो न स्यादेव द्वयोर्विभाग-प्रतिपादक शास्त्राभावात्।।३५।।**

ज्ञापनादिति। ज्ञापनायेत्यर्थः। समेत्येति। मिलित्वेत्यर्थः। मिलनञ्च सर्वेषामुद्यमसत्त्वे एव तत्कि-मेकेच्छया न विभाग इत्यत्राह एकस्यापीति। तथाच स्वामित्वेन स्वातत्त्यादेकेच्छया विभागो नैयायिक एवेति भावः। पक्षेति। कदाचित् सर्वेच्छया विभागः कदाचिदेकेच्छया यदा सर्वेच्छया तत्पक्षप्राप्त इत्यर्थः। अन्यथा न्यायप्राप्तानुवादकता। विहाय वचनबलादेव तस्य विवक्षिततत्वे, साहित्यवदिति। साहित्यं मिलनमात्रं न तु परस्परसापेक्षाणां तुल्यरूपाणाम् एकक्रियान्वयित्वरूपसाहित्यं विभागक्रियाया वैशेषिकस्वत्वावधारणरूपाया अक्षपातादिरूपतदनुकूलव्यापाररूपाया वा सर्वानन्वयात्। वचनान्तरात् द्वयोर्विभागो भविष्यतीत्याशङ्कामपनयति द्वयोरिति। किञ्चैवम् एकस्य विदेशस्थत्वे बाल्यादिनाऽज्ञानित्वे वा मिलनाभावात् विभागाभावे अप्राप्तव्यवहाराणां धनं व्ययविवर्जितम्। न्यसेयुर्बन्धुवर्गेषु प्रोषितानां तथैव चेति वक्ष्यमाणवचनविरोधः स्यादिति।।३४-३५।।

**ननु उपरते पितरि ज्येष्ठ एव धनाधिकारी नेतरे। यथा मनुः।**

**ज्येष्ठ एव तु गृह्णीयात् पित्र्यं धनमशेषतः।**
**शेषास्तमुपजीवेयुर्यथैव पितरं तथा।। (मनु ९।१०५)**

**ज्योष्ठोऽत्र पुन्नामनरकव्यावर्त्तकोऽभिप्रेतो न तु जीवदपेक्षः। यथा मनुः।**

**ज्येष्ठेन जातमात्रेण पुत्री भवति मानवः।**
**पितृणामनृणश्चैव स तस्माल्लब्धु मर्हति।।**
**यस्मिन्नृणं सन्नयति येन चानन्त्यमश्नुते।**
**स एव धर्मजः पुत्रः कामजानितरान् विदुः।।३६।।**

**(मनु ९।१०६।१०७)**

**नैतत् सर्वेच्छाधीनज्येष्ठाधिकारश्रुतेः। यथा नारदः।**

**विभृयाद्वेच्छतः सर्वान् ज्येष्ठो भ्राता यथा पिता।**
**भ्राता शक्तः कनिष्ठो वा शक्त्यपेक्षा कुले स्थितिः।।**
**सर्वेच्छया कनिष्ठोऽपि शक्तः सन् विभृयादिति।।**

**(नारद १३।५)**

**ज्येष्ठता चातन्त्रं यथा मनुः।**

**एवं सह वसेयुर्वा पृथग्वा धर्मकाम्यया।**
**पृथग्विवर्द्धते धर्मस्तस्माद्धर्म्या पृथक्क्रिया।।**

**(मनु ९।१११)**

**सह पृथग्वेति पदाभ्यां काम्ययेति चेच्छाया विकल्पकत्वं दर्शयति।।३७।।**

पितृवज्येष्ठ एव पितुरनन्तरं धनाधिकारी तेन सह विभाग एवेतरेषां नास्तीत्याशङ्कते नन्विति। पुत्री भवतीति। पुन्नामनरकत्राणकर्त्तृपुत्रवान् भवतीत्यर्थः। स तस्मादिति तथाच ज्येष्ठस्य धनलाभे पुन्नामनरकत्राणकर्त्तृत्वरूपपुत्रत्वस्य हेतुत्वेनोपादानात् तद्रूपज्येष्ठस्यैव धनाधिकारः नातद्रूपस्य जीव-दपेक्षज्येष्ठस्येति भावः। एतच्च सजातीयस्त्रीजातेषु, विजातीयस्त्रीजातेषु तु उत्कृष्टाजातस्यैव ज्येष्ठत्वम्। सदृशस्त्रीषु जातानां पुत्राणामविशेषतः। न मातृतो ज्यैष्ठ्यमस्ति जन्मतो ज्यैष्ठ्यमुच्यते

इति मनुवचनात्। धर्मजः न तु रागजः। अपुत्राः सन्त्यदिन इति निन्दार्थवादादिति भावः। अदिनोऽदनशीला राक्षसा इति मिश्राः। तथाच विभागवचनं मृतज्येष्ठकनिष्ठभ्रातृगणविषयमिति पूर्वपक्षयितुरभिप्रायः। ज्येष्ठता चातन्त्रमिति। ज्येष्ठ एवेत्यवधारणं ज्येष्ठस्य सति भरणसामर्थ्ये ज्ञेयम्। पृथग्विवर्द्धते इति। यद्यप्यविभक्तानामप्येकेनैव कर्मणा सर्वेषां धर्मोदयात् पृथग्भावे धर्मवृद्धिरनुपन्ना तथापि पार्थक्ये स्वस्वाधारणद्रव्येण कृतकर्मणोऽतिशयितधर्मोत्पत्तेस्तथोक्तमिति।।३६-३७।।

**तदेवं पितृस्वत्वापगम एकः कालोऽपरश्चानपगत एव पितुः स्वाम्ये पितुरिच्छयेति कालद्वयम्।।३८।।**

**न पुनः पितर्य्युपरत इत्येकः कालः, पितर्य्युपरतस्पृहे मातुश्च निवृत्ते रजसीत्यपरः, अनिवृत्तेऽपि मातृरजसि पितरि सस्पृहे तदिच्छयेति कालत्रयमादरणीयम्। मातृरजोनिवृत्तेः पित्रुपरतस्पृहत्वविशेषणत्वे, त्रिंशद्वर्षो वहेत् कन्यां हृद्यां द्वादशवार्षिकीम्। त्र्यष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वर इति (मनु ९।९४) मनुना विवाहकालविधानात्, वनं पञ्चाशतो व्रजेदित्याश्रमान्तरगमनकालविधानात् तदा च रजोनिवृत्तेर्मातुरसम्भवे पितरि चोपरतस्पृहे वानप्रस्थे तत्पुत्राणामिच्छतामप्यविभागप्रसङ्गात्।।३९।।**

**निर्विशेषणमुपरतस्पृहत्वमेव पितृधनविभागकाल इति चेन्न,अनुपरतस्पृहे पितरि पतितेऽप्यविभागप्रसङ्गात्।।४०।।**

**अयमप्यपरः काल इत्यभिधाने कालचतुष्टयापत्तिः पितुरुपरमः, पतितत्वं, निस्पृहत्वं, इच्छा चेति।।४१।।**

अनपगत एवेति। यद्यपि पितुरिच्छया विभागेऽप्युपेक्षया पितुः स्वत्वनाशोऽप्यवश्याभ्युपेयः अन्यथा स्वोक्तविभागस्यैवानुपपत्तेः तथापि विभागेच्छाधीनतदनधीनस्वत्वापगमाभ्यां कालद्वयमुक्तम्। वस्तुतो लाघवादितरस्वत्वाभिसन्धानापूर्वकपितृस्वत्वापगमकाल एक एव दायस्य विभागे निमित्तं न तु कालद्वयं गौरवादिति बोध्यम्। चूड़ामणिसम्मतोऽप्ययं पक्ष इति। यत्र तु पुत्राणां सम्भाव्यमानानुभाविकलहनिराकरणार्थं पिता तत्तदंशानवधार्य्य पुनस्तेषु स्वयमधिकरोति न तत्र विभागः पितुरुपेक्षाविरहेण तत्स्वत्वस्यैव विद्यमानत्वात् तेन तत्र विभागप्रयोगो भाक्त एवेति। मिताक्षराकृन्मतं निरस्यति न पुनरिति। वहेत् उद्वहेत् सत्वर इत्यनेन उक्तकालादल्पकालपरिगृहीतदारः। तदा चेति। द्वात्रिंशच्चतुस्त्रिंशद्वर्षमध्य इत्यर्थः त्रिंशद्वर्षेणोद्वाहिताया द्वादशवर्षीयायाः स्त्रियाः पत्युः पञ्चाशद्वर्षसमये द्वात्रिंशद्वर्षवयस्कत्वात् एवं चतुर्विंशतिवर्षेणोढ़ायाः स्त्रिया अष्टवर्षीयायाः पत्युः पञ्चाशद्वर्षे चतुस्त्रिंशद्वर्षीयत्वात्। अविभागप्रसङ्गादिति। इदन्तु न सम्यक् इदानीमविभागस्येष्टत्वात् अन्यथा पुत्रेषु दारान्निक्षिप्य वनं गच्छेत् सहैव वा इति रागनिवृत्त्यनिवृत्तिभ्यां प्रकारद्वयविधानेन रागानिवृत्तौ सहवनगमनपक्षे वानप्रस्थाश्रमोत्पन्नपुत्राणां वृत्तिलोपापत्तेः। गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः। अपत्यपुत्रतत्पुत्रां स्तदारण्यं समाविशेत् इत्युक्तकालान्तरे चारण्यगमने विभागस्य नानुपपत्तेः इदानीं मातृरजो निवृत्तेरपि सत्त्वादिति बोध्यम्। केचित्तु अविभागप्रसङ्गादिति। न चेष्टापत्तिः व्यवहारविरोधात् वानप्रस्थस्य पत्नीसहितवनगमनपक्षेऽप्यूर्ध्वरेतस्त्वात् अपत्यसम्भावनानिवृत्तेः स्वतःसिद्धत्वेन तत्परत्वासम्भवात् अदृष्टार्थकल्पनागौरवाच्चेत्याहुः। तदसत् न हि वनगमनमेव पुरुषस्य ऊर्ध्वरेतस्त्वं जनयति येन तदनन्तरपत्यसम्भावनानिवृत्तिः स्यादिति। निवृत्ते रजसीत्यस्य तु विषयः स्वयमेव परतो वक्ष्यते। कालचतुष्टयं दर्शयति पितुरुपरम इत्यादिना।।३८-४१।।

**यच्च कार्य्याक्षमे पितरि पुत्राणां विभागे स्वातन्त्र्यमुक्तं तद्वचनानभिज्ञत्वेन। तथा च हारीतः।**

**जीवति पितरि पुत्राणामर्थादानविसर्गाक्षेपेषु न स्वातन्त्र्यं कामं दीने प्रोषिते आर्त्ति गते वा ज्येष्ठोऽर्थांश्चिन्तयेत्। सुव्यक्त माहतुः शङ्खलिखितौ। पितर्य्यशक्ते व्यवहारान् ज्येष्ठः प्रति-कुर्य्यात् अनन्तरो वा कार्य्यज्ञस्तदनुमतो नत्वकामे पितरि रिक्थविभागो वृद्धे विपरीतचेतसि दीर्घरोगिणि वा ज्येष्ठ एव पितृवदर्थान् पालयेदितरेषां ऋक्थमूलं हि कुटुम्बमस्वतन्त्राः पितृमन्तो मातुरप्येवमवस्थितायाः॥४२॥**

**एतद्वचनद्वयं कार्य्याक्षमे दीर्घरोगिणि च पितरि विभागं निषिध्य ज्येष्ठ एव गृहं चिन्तयेत् तदनुजो वा कार्य्यज्ञ इत्याह। अतो नत्वकामे पितरीत्येतदेव कार्य्याक्षमे पितरि रिक्थविभाग इति भ्रान्तलिखितम्॥४३॥**

कार्य्याक्षम इति। अतिवृद्धत्वादिनेति शेषः। आदानं ग्रहणं, विसर्गस्त्यागः, आक्षेपो न्यासकरणम्। न स्वातन्त्र्यं न तदनुमतिं विनाऽधिकारः। दीनेऽतिवृद्धत्वादिना दुःखिते। आर्त्ति गते अत्यन्तशोक-रोगादिभिः पीड़िते। एतद्वचने स्वयं वक्ष्यमाणः कार्य्याक्षमादौ पितरि विभागनिषेधेन ज्येष्ठस्य गृह-योगक्षेमाचरणरूपोऽर्थो न व्यक्तः न स्वातन्त्र्यमित्यस्य पितुः स्वास्थ्यदशायामेव सम्भवात् चिन्तये-दित्यस्य तु विभागार्थं चिन्तयेदित्यर्थसम्भवादत आह सुव्यक्तमिति। वृद्धे सर्वकर्माक्षमे। विपरीतचेतसि उन्मादेन। दीर्घरोगिणि चिरतरकालं महारोगिणि। पितृवदिति। पिता यथा सर्वेषां पालनपुरःसरमर्थान् पालयेत् तथेतरेषां कनिष्ठानां पालनपुरःसरमर्थान् पालयेदित्यर्थः तेन तथाभूते पितरि ज्येष्ठस्य कनिष्ठपालनपुरःसरमर्थपालकता प्रतिपादिता। अर्थपालने हेतुमाह ऋक्थमूलं हीति। कुटुम्बं कुटुम्बभरणं गार्हस्थ्यं वा। अस्वतन्त्राः यथेष्टविनियोगानधिकारिणः, अनेन पितृसत्त्वे पुत्राणामस्वातन्त्र्यं विभागादौ स्फुटमेवाभिहितमिति। एवं मातरि जीवन्त्यामस्वतन्त्राः। अत उक्तवचनानभिज्ञत्वात्। एतदेवेति। सुपांसुपेति सप्तम्यर्थे प्रथमा, एतत्पाठस्थल एवेत्यर्थः। कार्य्याक्षमे पितरि रिक्थविभाग इति यल्लिखितं तद्भ्रान्तलिखितमित्यर्थः।।४२-४३।।

**तस्मात् पतितत्वनिस्पृहत्वोपरमैः स्वत्वापगम इत्येकः कालोऽपरश्च सति स्वत्वे तदिच्छात इति कालद्वयमेव युक्तम्॥४४॥**

**मातुर्निवृत्ते रजसीति (नारद १३।३) तु पितामहादिधनाभिप्रायं निवृत्ते रजसि पुत्रान्तर-सम्भावनाभावात् तदानीमपि पितुरिच्छयैव पुत्राणां विभागः अनिवृत्ते रजसि क्रमागतधनविभागे पश्चाज्जातानां वृत्तिलोपापत्तेः न चासौ युक्तः।**

**ये जाता येऽप्यजाता वा ये च गर्भे व्यवस्थिताः।**
**वृत्तिं तेऽपि हि काङ्क्षन्ति वृत्तिलोपो विगर्हितः॥**

**इति मनुवचनात्॥४५॥**

**यत एव पितृधने कालद्वयं अत एव मनुगौतमादिभिर्मृतपदं परित्यज्य उर्ध्वमित्युक्तम् ऊर्ध्वं पितुरिति (मनु ९।१०४।गौतम २८।१) पितुस्तदा स्वत्वापगमात् तदर्थमेवोर्ध्वमित्युक्तम् अतोऽयमेको विभागकालः। ऊर्ध्वं विभागाज्जातस्त्वित्यनेन (मनु ९।१६। नारद १३।४३) च सस्पृहे पितरि तदिच्छया विभागकालोऽपरो दर्शितः॥४६॥**

**दत्तासु भगिनीषु चेति (नारद १३।३) न कालार्थं किन्तु तासामवश्यं दानार्थम्।**

**तथा यच्छिष्टं पितृदायेभ्यो दत्त्वर्णं पैतृकं ततः।**
**भ्रातृभिस्तद्विभक्तव्यमृणी न स्याद्यथा पिता॥**

**(नारद ३।३२)**

**इदं नारदवचनं पित्रर्णशोधनावश्यम्भावार्थं न विभागकालार्थम्॥४७॥**

**अस्माच्च नारदवचनादयमर्थः सिध्यति यद्विभागकर्तृभिरुत्तमर्णानुमत्यैव पित्रादि ऋणं विभजनीयं परिशोध्यं वा शोधनावशिष्टधनविभागप्रतिपादनस्यैतत्प्रयोजनत्वात्। अत एव मातृधनस्यापि ऋणावशिष्टस्य विभागमाह याज्ञवल्क्यः। मातुर्दुहितरः शेषमृणाात् ताभ्य ऋतेऽन्वयः। (याज्ञवल्क्य २।११८) एतच्च विस्तरेण ऋणादाने वक्ष्यते॥४८॥**

**यद्वा दत्तासु भगिनीषु मातृधनं पुत्रैरेव विभजनीयम् अदत्तासु ताभिः सह साधारणम्, एतच्चावसरे वाच्यम्॥४९॥**

**एवं तावत् पितृधनविभागस्य कालद्वयमप्युक्तम्॥५०॥**

कार्य्याक्षमत्वसमयरूपविभागकालान्तरं निरस्य स्वोक्तदार्ढ्याय पुनरुपसंहरति तस्मादिति। ननु तर्हि मातुर्निवृत्ते रजसीत्यस्य को विषय इत्यत आह मातुरिति। पुत्रान्तरसम्भावनाभावादिति। तेन मातृपदं पितृपत्न्युपलक्षणम्। तदानीमपि पितृपत्नीरजोनिवृत्त्युत्तरकालेऽपि।पितृरिच्छयैवेति। अत्र प्रमाणं वक्ष्यते। ननु पुत्रान्तरसम्भावनासत्त्वे पितामहधनविभागे का क्षतिरित्यत आह अनिवृत्त इति। वृत्तिलोपः पितामहधने निरंशित्वम्। अयुक्तत्वे हेतुमाह। ये जाता इति। जाता उत्पन्ना, अजाता भविष्यद्गर्भसम्बन्धाः। ऊर्ध्वं स्वत्वापगमात्। रजोनिवृत्तिरूपस्वतन्त्रकालनिरासेन पुनरुपसंहरति अत इति। अयं स्वत्वापगमकालः। प्रमाणदर्शनपूर्वकं कालान्तरमाह ऊर्ध्वमिति। अपरः पितृस्वत्वापगमादन्यः पितुरिच्छासमयरूपः। यच्छिष्टं यदवशिष्टम्। यथेदं नारदवचनं न विभागकालान्तरप्रदर्शनार्थं किन्तु ऋणपरिशोधनावश्यम्भावार्थं अन्यथा ऋणी न स्यादिति वैयर्थ्यापत्तेः तथा दत्तास्विति भगिनीदानावश्यम्भवार्थमित्यर्थः। एतत् प्रयोजनत्वात् ऋणपरिशोधनावश्यम्भावप्रतिपत्तिमात्रप्रयोजनत्वात्। अतएव ऋणपरिशोधनस्यावश्यकत्वादेव। ताभ्य ऋते दुहितृभ्यो विना। ननु अन्वयो दुहितुर्मातुर्वा तत्राह एतच्चेति। वक्ष्यते मातुरन्वय इति व्यवस्थापयिष्यते। पक्षान्तरमाह यद्वेति। मातृधनमयौतकं यौतके सर्वा दुहित्रभाव एव पुत्राधिकारस्य वक्ष्यमाणत्वात् तथाच दत्तासु भगिनीषु चेति मातुरयौतकधनविषयमिति भावः। अवसरे प्रकृतसमाप्तौ स्त्रीधनविभागप्रकरणे। उक्तं व्यवस्थापितं न्यायवचनाभ्यामिति शेषः।।४४-५०।।



# द्वितीयाध्यायः

**सम्प्रति पितामहधनविभागकालोऽभिधीयते।**

**तत्र बृहस्पतिः।**

**पित्रोरभावे भ्रातॄणां विभागः सम्प्रदर्शितः।**
**मातुर्निवृत्ते रजसि जीवतोरपि शस्यते॥१॥**

**नास्य वचनस्य पितृधनगोचरत्वं ऊर्ध्वं विभागाज्जातस्त्वित्यस्य (मनु ९।२१६। नारद १३।४४) निर्विषयत्वापत्तेः निवृत्ते रजसि पुत्रोत्पत्तेरभावात्, मातृधनविषयत्वञ्चास्य नाशङ्कनीयम् एवं मातुरेव निर्द्धनत्वापत्तेः अतो निवृत्ते रजसीति पितामहादिधनविषयम्॥२॥**

**न चेच्छामनपेक्ष्य रजोनिवृत्तेर्विभागनिमित्तत्वं सम्भवति अनिच्छया विभागाभावात्॥३॥**

**सत्यामिच्छायां कस्येच्छयेत्यपेक्षायाम् ऊर्ध्वं पितुः पुत्रारिक्थं विभजेयुः निवृत्ते रजसि मातुर्जीवति चेच्छतीति (गौतम २८।१-२) गौतमवचनात् पितुरेवेच्छात इति निर्णीयते॥४॥**

**अत: पित्रोरभाव इत्येक: काल:। पित्रोरिति द्विवचन निर्देशात् सोदरभ्रातृणां पितृधनविभागोऽपि मातुरभाव एव कार्य्य:॥५॥**

**न तु मातृधनविभागार्थं मातुरभावस्योपादानं जीवतोरपीत्यस्य मातृधनगोचरत्वानुपपत्तेः अन्यधनगोचरत्वमवश्यं वाच्यं तेन यत्रैव विभागे पित्रोरभावो निमित्तं तत्रैव जीवतोरपीत्यपिशब्देन जीवनस्यापि शस्तत्वकीर्त्तनात् न मातुरभावो मातृधने व्याख्येय:। एतच्च विस्तरेण वाच्यम्॥६॥**

पितृधनविभागकाले कथिते पितामहधनविभागकालस्य आकाङ्क्षितत्वात् तं वक्तुं प्रतिजानिते सम्प्रतीति। निर्विषयत्वे हेतुमाह निवृत्ते रजसीति। न च पित्रोरभाव इति वचनं पितृधनविषयं ऊर्ध्वं विभागज्जातस्त्विवति पैतामहधनविषयमिति वैपरीत्यमेव कुतो न स्यात्। पितामहधने पितु: पुत्रेभ्य: स्वेच्छाकृतन्यूनाधिकदानस्यापि निषेधेन उत्पत्स्यमानपुत्रनिरंशताया: सर्वथैव निषिद्धत्वात् तत्रैव मातृरजोनिवृत्तेः सहकारित्वौचित्यात्। न च पित्रा स्वयं गृहीते द्व्यंशे तदनन्तरं तस्यैवाधिकारात् न निरंशतेति वाच्यं तस्य पित्रुपभोगोपक्षीणत्वे निरंशताया दुर्वारत्वात् पैतृके तु तस्य स्वेच्छा स्वयमुपात्तेऽर्थे इति विष्णुवचनेन इच्छाया, नियामकत्वाभिधानात् इच्छयोत्पत्स्यमाननिरंशतायामप्यविरोधात् न तत्रास्य सहकारितेति, अतएव वृत्तिलोपो विगर्हित इति प्रागुक्तवचने वृत्तिपदं पितामहधनपरमिति सुधीभिर्भाव्यम्। निर्द्धनत्वापत्तेरिति। रजोनिवृत्तिमात्रेण तस्या: स्वत्वनाशे पुत्राणां तद्धनविभाग इत्यर्थ:। उपसंहरति अत इति। यतो न पितृधनगोचरत्वं नापि मातृधनगोचरत्वमत इत्यर्थ:। ननु निरपेक्षश्रुतिबलात् पितुरनिच्छयापि मातृरजोनिवृत्तौ पुत्राणां विभाग: स्यादत आह न चेच्छामिति। विभागनिमित्तत्वं विभागोपधायकत्वम्। अनिच्छयेति स्वारसिकेच्छां विनेत्यर्थ:। विभागाभावादिति। विभागस्य दृष्टार्थकतया स्वारसिकेच्छाधीनत्वनियमादित्यर्थ:। सत्यामपेक्षितायामिच्छायां कस्य पितु: पुत्रस्य वा पितुरेवेच्छात इति। जीवति चेच्छतीत्यनयोरिच्छाजीवनयो: सामानाधिकरण्यानुरोधादिति भाव:। तेन तदानीमपि विभागे पितुरेव स्वामित्वात् स्वातन्त्र्यं न पुत्रेच्छया विभागोऽस्वामित्वेनास्वातन्त्र्यादित्यभिहितम्। यथाश्रुतन्तु न सङ्गच्छते इच्छाया: सामानाधिकरण्यकृतिद्वारा विभागप्रयोजकत्वस्य विद्धत्वेन तत्र कस्येत्याकाङ्क्षानुदयात् तत्प्रतिपादनस्य प्रकृतानुपयोगित्वाच्चेति द्रष्टव्यम्। अत इति। यतो बृहस्पतिवचनस्य न पितृधनविषयत्वमत इत्यर्थ:। एक: काल: पितामहधनविभाग इति शेष:। अथवा यतोऽपत्यसम्भावनाभाव: पितुरिच्छासहकृत एव विभागनिमित्तं न तु स्वातन्त्र्येण अत इत्यर्थ:। एक: काल इति पितुरिच्छासहकृतमातृरजोनिवृत्तिकालादतिरिक्तकाल इत्यर्थ:, अन्यथा मरणादावपि अपत्यसम्भावनाविरहस्याप्यविशिष्टत्वेन पित्रोरभाव इति पृथक्कालो नाभिहित: स्यादिति भाव:। अतोऽस्य नोपसंहारार्थत्वं तेन वक्ष्यमाणतस्मादित्युपसंहारेण सह न पौनरुक्त्यमिति द्रष्टव्यम्। एतेनास्याप्युपसंहारार्थत्वादित्यभिप्रायेण लिखिष्यमाणतस्मादित्युपसंहारे पुनरुपसंहरतीति चूडामणिलिखनमपर्य्यालोचनविजृम्भितमिति बोध्यम्। ननु पित्रोरिति साहित्यमविवक्षितमेव अन्यथा जीवति पितरि मातुरभावेऽपि साहित्यावच्छिन्नाभावसत्त्वात् विभागप्रसङ्गात् तथाच द्विवचनस्यावैयर्थ्याय पितुरभावो मातुरभावश्चेति द्वयं विभागनिमित्तं स्यात् न तु पितुरुपरममात्रम्, अत्रेष्टापत्तिमाह पित्रोरितीति। विमातुर्मातृत्वाभावात् तत्सत्त्वे सपत्नीपुत्राणां विभागे बाधकाभाव इत्यर्थ बललभ्यमाह सोदरभ्रातृणामिति। कार्य्य इति प्रशस्त इत्यर्थ:, अतएव वक्ष्यति सोऽपि च मातरि जीवन्त्यां न धर्म्य इति तथाच मातुरभावो विभागप्राशस्त्यमात्रनिमित्तं न तु विभागे, पित्रुपरमानन्तरमेव पुत्राणां धनस्वामित्वेन विभागे स्वातन्त्र्यात् अदृष्टार्थत्वकल्पनायाश्च अन्याय्यत्वादिति भाव:। अस्य उक्तवचनस्य। मातृधन-

गोचरत्वानुपपत्तेरिति। मातुर्निर्द्धनत्वापत्तेरिति शेषः। अन्यधनगोचरत्वं, मातृधनातिरिक्तधनगोचरत्वम्। तत्रैवेति। सन्निहिते बुद्धिरन्तरङ्गा इति न्यायात् उपस्थितविभाग एव न त्वनुपस्थिते विभागान्तर इति भावः। ननु तर्हि मातृधनविभागे किं निमित्तमत्राह एतच्चेति। वाच्यं मातृधनविभागावसरे इति शेषः।।१-६।।

**तस्मात् पितामहादिधनस्यापि पित्रोरभाव इत्येकोविभागकालः तथा मातुर्निवृत्ते रजसि पितुरिच्छात इत्यपरः।।७।।**

**न तु पितुरिच्छामन्तरेण तस्य विभागः अनीशास्ते हि जीवतोः (मनु ९।१०४) तथा अस्वाम्यं हि भवेदेषां निर्दोषे पितरि स्थिते (नारद-देवलौ) तथा जीवति चेच्छतीति (गौतम २८।२) तथा पितुरनुमत्या दायविभागः (बौधायनः) तथा जीवति पितरि रिक्थविभागोऽनुमतेः (शङ्खलिखितौ) तदेवमादिमनुनारदगोतमबौधायनशङ्खलिखितादिभिरविशेषेण जीवति पितरि पुत्राणां यावद्धनगोचरास्वामित्वस्य पितुरिच्छाधीनविभागस्य च प्रतिपादनात् पैतामहधनविभाग-कालस्य च पृथगेभिरनभिधानात् पैतामहधनगोचरत्वमप्यनीशत्वपित्रनुमतिवचनानाम्।।८।।**

उपसंहरति। तस्मादिति। विशेषाभिधानाय पुनराह न त्विति। उक्तवचनानां पितृधनविभाग-प्रकरणनियन्त्रितत्वात् तद्विषयकत्वशङ्कामपनेतुमाह पैतामहेति। तथाच प्रकरणमपि साधारणमिति भावः।।७-८।।

**यत्तु याज्ञवल्क्यवचनम्।**

**भूर्या पितामहोपात्ता निबन्धो द्रव्यमेव वा।**
**तत्र स्यात् सदृशं स्वाम्यं पितुः पुत्रस्य चोभयोः।।**

**(याज्ञवल्क्य २।१२२)**

**तस्य निरवद्यविद्योद्योतेन द्योतितस्तत्त्वतोऽयमर्थः। यत्र द्वयोर्भ्रात्रोर्जीवत्पितृकयोर-प्राप्तभागयोरेकः पुत्रमुत्पाद्य विनष्टोऽन्यो जीवति अनन्तरं पिता मृतः तत्र पुत्र एव तद्धनं प्राप्नोत्वतिसन्निकर्षात् तदर्थं सदृशं स्वाम्यमिति वचनम्। यथा पैतामहधने पितुः स्वाम्यं तथैव तस्मिन्मृते तत्पुत्राणामपि न तत्र सन्निकर्षविप्रकर्षाभ्यां कोऽपि विशेषः पार्वणविधिना पिण्ड-दानेन द्वयोरपि तदुपकारकत्वाविशेषादित्यभिप्रायः।।९।।**

**अत एव मृतपितृपितामहकः प्रपौत्रोऽपि पुत्रपौत्राभ्यां सह तुल्याधिकारी भवती पिण्ड-दत्वाविशेषात्।।१०।।**

**जीवति तु पितरि पुत्राणां पितामहधनस्वामित्वे स पुत्रापुत्रभ्रातृद्वयविभागे तत्पुत्राणामपि भागः स्यात् स्वामित्वाविशेषात्।।११।।**

**तथाचाप्रक्रान्तत्वेनातदर्थत्वं वचनस्य अनेकपितृकाणामेव प्रक्रमात्।।१२।।**

**निबन्धः कार्त्तिक्यां कार्त्तिक्यामिदं दास्यामीति यन्निबद्धम्।।१३।।**

**द्रव्यं भूसाहचर्य्यात् द्विपदमभिहितम्।।१४।।**

पैतामहे पितुरेव स्वामित्वे याज्ञवल्क्यवचनविरोधमपनेतुमाह यत्त्विति। सदृशं स्वाम्यमिति। यथाश्रुतार्थमादाय विरोधो बोध्यः। तस्य उक्तवचनस्य। निरवद्येति। निरवद्या उत्कृष्टा या विद्या सैव दिवाकरः तस्योद्योतेनोदयेन द्योतितः प्रकाशित इत्यर्थः। गुणसिन्धुरित्यादौ सिन्धुपदार्थसामर्थ्यात् यथा गुणे जलत्वं व्यङ्ग्यं तथा उद्योतपदार्थसामर्थ्यात् विद्यायां दिवाकरत्वं व्यङ्ग्यमिति। पुत्र एवेति, न तु मृतपितृकपौत्रश्च। तदर्थं मृतपितृकपौत्रस्य प्राप्त्यर्थं, तथैवेति। एतेन मृतपितृकपौत्राणां बहूनामपि

मिलित्वैकोभागः पितृव्यस्य चापरो भागो न तु तेषां प्रत्येकं पितृव्येण सह तुल्यांशतेति प्रातिपादितम्। अतएव उपकारकत्वाविशेषादेव। पिण्डदत्वाविशेषादिति। तेन पुत्रपदं पार्वणाधिकारिसगोत्रोपलक्षणं पितामहपदञ्च पार्वणोद्देश्यपितृपूर्वपुरुषपरं पितृपदम् अंशिपूर्वपुरुषधन्यपत्यपरमिति बोध्यम्। नन्वेवं मृतपितृकप्रपौत्रस्य प्रपितामहधने पितामहेन सह तुल्याधिकारः स्यादुपकाराविशेषादिति चेन्न तस्य प्रपितामहपार्वणानियमात् पितामहे जीवति तु पितर्य्येव समापयेदित्याद्युक्तेः। अतो नियततत्पार्वणकर्त्तुः पितामहस्य तदपेक्षयोपकारविशेषस्य स्फुटत्वादिति। निरवद्यवचनस्य सङ्कोचेन सामान्यत एव पौत्राणां पित्रा सह पितामहधने तुल्यस्वामित्वे बाधकमाह जीवति त्विति। स्वामित्वाविशेषादिति भवन्मत इति शेषः तथाच व्यवहारविरोध इति भावः इदमुपलक्षणम्। एवञ्चेत् पुत्रेच्छयापि विभागे प्राप्ते मातुर्निवृत्ते रजसि जीवति चेच्छतीति पितुरिच्छाधीनविभागप्रतिपादकप्रागुक्तशास्त्रविरोधो द्रष्टव्यः। अतदर्थत्वं पितृद्रव्ये मृतपितृकभ्रातृपुत्रेण सह पितृव्यस्य तुल्यस्वामित्वविषयकत्वम्। प्रक्रमादिति। अनेकपितृकाणान्तु पितृतोभागकल्पनेत्यनेन अनेकपितृकाणामेव प्रक्रान्तत्वादित्यर्थः। अत्रानेकपितृकाणाम् एकपितृकभिन्नानां विभिन्नपितृकाणामित्यर्थः। निबन्धः प्रतिवर्षं प्रतिमासादि वा दातव्यत्वेन प्रतिश्रुतवस्तुरूप इति व्याचष्टे निबन्ध इति। साहचर्य्यादिति। स्थावरं द्विपदञ्चैव यद्यपि स्वयमर्जितमित्यादि वक्ष्यमाणे भूद्विपदयोरेकक्रियान्वयादित्यर्थः।।७-१४।।

**अयं वा धारेश्वरपुरस्कृतो वचनार्थः। इच्छया विभागदानप्रवृत्तस्य पितुः पैतामहधने सदृशं स्वाम्यं पुत्रैः सह न तत्र स्वोपार्जितधन इव न्यूनाधिकविभागमिच्छातः कर्त्तुमर्हतीति।।१५।।**

**यथा विष्णुः। पिता चेत् पुत्रान् विभजेत्तस्य स्वेच्छा स्वयमुपात्तेऽर्थे पैतामहे तु पितापुत्रयोस्तुल्यं स्वामित्वम्।।१६।। (विष्णु १७।१-२)**

**इदं सुव्यक्तं यदि पिता पुत्रान् विभजति तदा स्वोपात्तेऽर्थे न्यूनाधिकविभागं स्वेच्छया पुत्रेभ्यो दद्यात् पैतामहे तु नैतत् यस्मात् तत्र तुल्यं स्वामित्वं न पुनः पितुः स्वच्छन्दवृत्तिता।।१७।।**

**अतः पितापुत्रयोः पैतामहधने समविभागार्थं सदृशं स्वाम्यमिति वचनं, पुत्राणां वा विभागस्वातन्त्र्यार्थमिति मतद्वयमपि हेयम्।।१८।।**

**एवमेवापरमपि वचनं व्याख्येयम्।।१९।।**

नन्वेवं द्रव्यपदस्य द्विपदपरत्वे पैतामहमणिमुक्तादिद्रव्यं पितृव्यस्यैव स्यात् न तथाविधपौत्रादीनां द्रव्यसामान्यपरत्वे च भूम्यादीनां पृथगुपादानं व्यर्थं अथ गोवृषन्यायात् भूमिनिबन्धयोः प्राशस्त्यार्थमेव पृथगुपादानं साहचर्य्यन्तु न्यायपर्य्यवसायितया शास्त्रतो दुर्बलत्वादकिञ्चित्करमिति चेत्तथापि उपकारित्वाविशेषात् प्रतिपौत्रं पितृव्येण सह तुल्यांशित्वापत्तौ शिष्टाचारविरोध इति विभाव्याह अयं वेति। अयं वक्ष्यमाणः। तमेवाह इच्छयेति। उक्तार्थे मुनिस्वरसमाह यथेति। स्वरसं प्रकाशयति इदमिति। अत्रायं भावः यदि विष्णुवचने स्वेच्छैव विभागप्रयोजिका इत्यर्थकल्पनया स्वार्जिते पुत्रेच्छा व्यावर्त्त्यते तदा पैतामहे पुत्रेच्छयाऽपि विभागः प्रसज्येत तच्च न सम्भवति स्वार्जिते पुत्राणां स्वामित्वाभावेन तेषामिच्छया विभागाप्रसक्तेः वचनवैफल्यात् जीवति चेच्छतीति प्रागुक्तेन विरोधश्च स्यात् अतः स्वोपात्तेऽर्थे स्वेच्छा न्यूनाधिकविभागप्रयोजिकेत्येवार्थः। एवञ्च सति व्यवच्छेदबोधकतुशब्दबलात् स्वेच्छायाः पैतामहे न्यूनाधिकविभागप्रयोजकत्वव्यवच्छेद एव लभ्यते इत्येतदेवाह यदीति। नैतत् न स्वेच्छया न्यूनाधिकविभागदानम्। न पुनरिति। स्वच्छन्दवृत्तिता न्यूनाधिकविभागदानाधिकारिता। तथा चोक्तार्थे तुल्यं स्वामित्वमिति लाक्षणिकः प्रयोगः लक्षणा चेयम् उक्तयुक्तिप्राप्ता न दूषणावहेति

भावः। अत इति। यत उक्तार्थपरतयोपपत्तिरत इत्यर्थः। मतद्वयमिति। मिताक्षराकृत्प्रभृतीनामिति शेषः। हेयमिति समविभागः पश्चान्निरसनीयः पुत्रेच्छया विभागस्तु निरस्त एवेति भावः। एवमेव पितामहधने पौत्राणां पितृकृतविषमविभागनिषेधपरतयैव। भागद्वयमिति जीवद्विभागे तु पिता गृह्णीतांशद्वयं स्वयमित्यादिवचने भागद्वयस्य वक्ष्यमाणत्वात् सिद्धवन्निर्देशः।।१५-१९।।

**अतः पैतामहादिधने पितुर्भागद्वयं पितुरिच्छात एव विभागो न पुत्रेच्छयेति सिद्धम्।।२०।।**

**यच्च मनुविष्णू।**

**पैतृकन्तु पिता द्रव्यमनवाप्तं यदाप्नुयात्।**
**न तत् पुत्रैर्भजेत् सार्द्धमकामः स्वयमर्जितम्।।**

**(मनु ९।२०९)**

**स्वार्जितत्वेन हेतुना नाकामो विभजेदिति वदन्तौ स्वयमनर्जिते पैतामहधने पितुरनिच्छयापि पुत्राणां विभागं दर्शयतस्तत्रापि विभागदानप्रवृत्तः पिता पितामहधनं स्वार्जितं नाकामो विभजेत् अन्यत् पुनरकामोऽपि विभजेदित्यस्वेच्छात एवेत्यर्थः। न पुनः पुत्रेच्छया विभागं ज्ञापयतः।।२१।।**

**मणिमुक्तादौ तु पुनः पैतामहे पित्रनर्जितेऽपि स्वार्जित इव पितुरेव स्वाम्यं न्यूनाधिकविभागदानार्हत्वम्। तथा याज्ञवल्क्यः।**

**मणिमुक्ताप्रवालानां सर्वस्यैव पिता प्रभुः।**
**स्थावरस्य तु सर्वस्य न पिता न पितामहः।।२२।।**

**पितामहश्रुतेस्तद्धनविषयकं वचनम्। मणिमुक्ताद्युपादाय पुनः सर्वस्येत्युपादानात् सर्वेषां भूम्यादिव्यतिरिक्तानां दानादिषु पितुः प्रभुत्वं न स्थावरनिबन्धद्रव्याणाम्। तत्रापि सर्वस्येत्युपादानात् सर्वस्य कुटुम्बवर्त्तनहेतोर्दानादिनिषेधः कुटुम्बस्यावश्यं भरणीयत्वात्। यथा मनुः।**

**भरणं पोष्यवर्गस्य प्रशस्तं स्वर्गसाधनम्।**
**नरकं पीडने चास्य तस्माद्यत्नेन तं भरेत्।।२३।।**

**अल्पस्य तु कुटुम्बवर्त्तनाविरोधिनो न दानादिनिषेधः सर्वस्येत्यानर्थक्यापत्तेः।।२४।।**

**स्थावरग्रहणात् निबन्धद्विपदयोर्दण्डापूपन्यायात् दानादिनिषेधसिद्धिः।।२५।।**

**यदि पुनः सर्वस्थावरादिविक्रयमन्तरेण कुटुम्बवर्त्तनमेव न भवति तदा सर्वस्यापि विक्रयणादिकमर्थात् सिद्ध्यति। सर्वत एवात्मानं गोपायीतेति वचनात्।।२६।।**

पितुरिच्छात इति। जीवति चेच्छतीति प्रागुक्तेरिति भावः। न पुत्रेच्छयेत्यत्र वचनान्तरविरोधमपनेतुमाशङ्कते यच्चेति। पैतृकम् अन्यैरपहृतम् अनवाप्तम् अंश्यन्तरैरनुद्धृतम् अवाप्नुयात् स्वयमेवाहरेदिति वदन्तौ मनुविष्णू इत्यन्वयः। ननु कामनां विना कथं विभागः विभागकृतेः कामनासाध्यत्वादत आह अस्वेच्छात इति। अस्वारसिकेच्छातः प्रत्यवायभयमात्रजनितेच्छात एवेत्यर्थः। एवञ्च प्रकारान्तरेण जीवनक्षमेषु स्वोद्धृतभूम्याद्यंशादाने न प्रत्यवायः अनुद्धृते न्यूनाधिकदानस्यैव निषिद्धत्वादिति बोध्यम्। ज्ञापयत इति, जीवति चेच्छतीति प्रागुक्तविरोधादिति भावः। पित्रनर्जिते पित्रनुद्धृते। स्वाम्यं स्वातन्त्र्यम्। तदेव विवृणोति न्यूनाधिकेति। पितामहश्रुतेरिति। पितृस्थावरादौ पितामहप्रभुत्वस्याप्रसक्तेरिति भावः। पुनः सर्वस्येति। विभक्तिवचनभेदात् मण्यादीनां विशेषणत्वासम्भवेन पृथगुपादानस्य सुवर्णादिद्रव्यान्तरप्राप्त्यर्थत्वादिति भावः। न चैवं सर्वस्येत्यनेनैव सिद्धौ मण्यादीनां पृथगुपादानवैयर्थ्यं एतस्योपलक्षणत्वात् सुवर्णादिषु कस्य प्रभुत्वमिति जिज्ञासाया अपि

निवर्त्त्यत्वात् गोवृषन्यायाद्वा पृथगुक्तिरिति। पोष्यवर्गस्येति। स च पिता माता गुरुर्भार्य्या प्रजा दीनाः समाश्रिताः। अभ्यागतोऽतिथिश्चैव पोष्यवर्ग उदाहृत इति मनुनैवोक्तः। आनर्थक्यापत्तेरिति। अल्पस्यापि दाननिषेधे सर्वस्येत्यस्य वैयर्थ्यापत्तेरित्यर्थः। स्थावरग्रहणादिति। त्रयाणां युगनद्धवाहित्वादिति भावः। ननु निबन्धद्विपदयोः कथं स्थावरग्रहणात् सिद्धिः तयोः स्थावरपदार्थत्वाभावात् अत आह दण्डेति। तथाचापदार्थत्वेऽपि न्यायादेव तत्सिद्धिरित्यर्थः। स च न्यायो यथा दण्डविद्धापूपानां दण्डानयनादवश्यमानयनं तथा युगनद्धवाहित्वात् एकस्य ग्रहणादपरयोरपि सिद्धिरिति केचिदाहुः। वस्तुतस्तु एकत्र स्थापितयोर्दण्डापूपयोर्यदा पूपो नास्ति दण्डस्तु मूषिकैर्भक्षितो वर्त्तते तत्र यथा मूषिकस्य दुष्करदण्डभक्षणसिद्धौ तत्सहचरितापूपभक्षणमपि सिद्धयति तथैकस्याप्रभुत्वे सिद्धे युगनद्धवाहित्वादपरयोरप्यप्रभुत्वं सिद्धयतीति समुदायर्थः। न्यायमूलकत्वात् प्रायिकत्वेनान्यथाप्याह यदि पुनरिति। कुटुम्बवर्त्तनरूपस्य हेतोरविशेषादित्याशयः। अर्थात् कुटुम्बस्यावश्यं भर्त्तव्यत्वरूपात्। एवञ्च यत्र भूम्यादिकं नास्ति मण्यादिरेवास्ति तत्र न सर्वव्यये प्रभुत्वं हेतोरविशेषात् तत् प्रभुत्ववचनन्तूभयसद्भावविषयमिति द्रष्टव्यम्। सर्वत इति। तथाच पोष्यवर्गस्येवात्मनोऽपि रक्षार्थं कृतः सर्वविक्रयः कुटुम्बविरोधेऽपि सिद्धयतीति द्रष्टव्यम्।।२०-२६।।

**न च स्थावरस्य समस्तस्य गोत्रसाधारणस्य च।**
**नैकः कुर्य्यात् क्रयं दानं परस्परमतं विना।।**
**विभक्ता अविभक्ता वा सपिण्डाः स्थावरे समाः।**
**एको ह्यनीशः सर्वत्र दानाधमनविक्रये।।**

**एतद्व्यासवचनद्वयेन एकस्य विक्रयाद्यनधिकार इति वाच्यं यथेष्टवियोगार्हत्वलक्षणस्य स्वत्वस्य द्रव्यान्तर इवात्राप्यविशेषात्।।२७।।**

**व्यासवचनन्तु स्वामित्वेन दुर्वृत्तपुरुषगोचरविक्रयदानादिना कुटुम्बविरोधात् अधर्मभागिताज्ञापनार्थं निषेधरूपं न तु विक्रयाद्यनिष्पत्त्यर्थम्।।२८।।**

**एवञ्च**

**स्थावरं द्विपदञ्चैव यद्यपि स्वयमर्जितम्।**
**असम्भूय सुतान् सर्वान् न दानं न च विक्रयः।।**
**इत्येवमादिकं तदप्येवमेव वर्णनीयम्।**
**तथाहि कर्त्तव्यपदमवश्यमत्राध्याहार्य्यम्।।२९।।**

**तेन दानविक्रयकर्त्तव्यतानिषेधात् तत्करणात् विध्यतिक्रमो भवति न तु दानाद्यनिष्पत्तिः वचनशतेनापि वस्तुनोऽन्यथाकरणाशक्तेः।।३०।।**

**अतएव नारदः।**

**यद्येकजाता बहवः पृथग्धर्माः पृथक्क्रियाः।**
**पृथक्कर्मगुणोपेता न चेत् कार्य्येषु सम्मताः।।**
**स्वभागान् यदि दद्युस्ते विक्रीणीयुरथापि वा।**
**कुर्य्युर्यथेष्टं तत्सर्वमीशास्ते स्वधनस्य वै।।३१।।**

**(नारद १३।४२-४३)**

अत्र दायादानुमतिं विना न दानसिद्धिः कृतमपि दानं दानाभासतया निवर्त्तनीयमिति चण्डेश्वरमतमपाकर्त्तुं शङ्कते न चेति। क्रयं विक्रयम्। विभक्ता अविभक्ता वेति। तथाच स्थावरस्येति वचन-

स्याविभक्तस्थावरमात्रविषयकत्वं न सम्भवतीति भावः। न च विभक्तपदं द्रव्यान्तरविभक्तपरं स्थावरपदञ्चाविभक्तस्थावरपरम् अतो नानुपपत्तिरिति वाचम्। तथा सति एकस्यास्वाम्यादनधिकारस्य द्रव्यान्तरेऽप्यविशिष्टत्वात् स्थावरोपादानवैयर्थ्यापत्तेरतो विभक्तस्थावरे वाचनिकोऽयं निषेधो न यौक्तिक इति। अविभक्तावेति वा शब्द इवार्थे वास्याद्विकल्पोपमयोरेवार्थे च समुच्चये इति विश्वोक्तेः। अत्र स्थावरे तथाच विभक्तस्येवाविभक्तस्थावरस्यापि स्वामिकृतदानादि सिद्ध्यत्येव अक्षपातादिना पश्चाद्दंशपरिचयसम्भवादिति भावः। यद्यपि स्वयमर्जितमिति। स्वयमर्जितं द्विविधं पैतामहमन्येन हृतं पश्चात्तदुद्धृतं स्वयं वाऽर्जितम् अविशेषात्तदुभयमपीत्यर्थः। निषेधरूपत्वे हेतुमाह तथा हीति। अवश्यमिति। न च सिद्ध्यति सम्भवतीत्येवं कुतो नाध्याह्रियते तथात्वे क्वान्तेन सह समानकर्तृकत्वानुपपत्तिरिति भावः। अथाऽयं दानविक्रयनिषेधो नादृष्टार्थकः किन्तु स्वत्वध्वंसानुत्पत्तिरूपदृष्टप्रयोजनकः दृष्टार्थत्वसम्भवेऽदृष्टार्थत्वकल्पनाया अन्याय्यत्वात् इत्थञ्च विशिष्य स्थावरदानादौ दायादानुमतेरपि सहकारिता कल्प्यत इति। मैवं क्लृप्तकारणादेव स्वाम्यात् दानादिनिर्वाहेऽतिरिक्तकारणकल्पने गौरवात् अतएवादृष्टकल्पनाऽपि न दूषणावहा प्रमाणिकत्वादिति। अतएवेति। यतो दानादिनिष्पत्तिरत एवेत्यर्थः। एकजाता इति। धर्मोऽशौचं दशद्वादशरात्रादि। क्रिया याजनपालनादि। कर्म तपःशौर्य्यादि। गुणो मृदुत्वचण्डत्वादिः। तथाच विभिन्नजातीयमातृका इत्यर्थः। कार्य्येषु एकैकक्रियमाणदानादिषु न सम्मताः। यदि दद्युरिति। सदवृत्तगोचरदानादिविषयोऽयं निषेधस्तु दुर्वृत्तगोचर इति विभाव्यम्। कुर्य्युरिति। तथाचासम्मत्यापि दानादि सिद्ध्यतीति स्फुटमुक्तमिति। इत्थञ्च स्थावरादावनापदि सर्वदानविक्रयनिषेधोऽयं मण्याद्यपेक्षया विशेषो बोध्यः। एतस्य स्वार्जितविषयत्वे तु वचनवैयर्थ्यापातादिति।।२७-३१।।

**प्रकृतमनुसरामः। तदेवमुक्तप्रबन्धेन पितामहादिधने पितापुत्रयोः समभागविधानानुपपत्तेः पुत्राणां विभागस्वातन्त्र्यप्रतिपत्तिपरत्वाभावाच्च जनकेच्छाधीनन्यूनाधिकविभागनिराकरणार्थं मृतपितृकस्य भ्रातुः पुत्रस्य पितृव्येण सह तुल्याधिकारार्थं वा वचनम्।।३२।।**

**एवञ्च पितामहधनस्यापि पितुरिच्छयैव विभागः कार्य्यः किन्तु मातुर्निवृत्ते रजसीति विशेषः, स्वोपात्ते तु रजोनिवृत्तिमन्तरेणापि पितुरुर्ध्वमिति तु उभयत्राप्यविशिष्टम्।।३३।।**

**तेन पैतामहधनेऽपि कालद्वयम्।।३४।।**

**तत्र यदा पितैवेच्छातः पुत्रान् विभजति तदा पैतामहधनात् भागद्वयं स्वयं गृह्णीयात्। जीवद्विभागे तु पितागृह्णीतांशद्वयं स्वगमिति बृहस्पतिना द्वावंशौ प्रतिपद्येत विभजन्नात्मनः पितेति (नारद १३।१२) नारदेन चाविशेषेण प्रतिपादनात्।।३५।।**

प्रकृतमिति। न पितामहधने पित्रा सह तुल्यांशित्वं न वा पौत्रेच्छया विभाग इति प्रकृतमित्यर्थः। एतदेव विशिष्य व्यवस्थापनेनानुसराम इत्यर्थः। व्यवस्थापितवचनार्थमुपसंहरति तदेवमिति। समविभागनुपपत्तेर्वक्ष्यमाणहेतोः पुत्राणाञ्चेत्याद्युक्तहेतोरुक्तप्रबन्धेन जनकेच्छाधीनेत्याद्यर्थवचनेनेत्यर्थः। मृतपितृकस्येति। वाकारोऽनास्थायाम् अन्यथा भूमिनिबन्धनादावेव पितृव्येण सह तुल्याशिता स्यात् मणिमुक्तादिद्रव्यान्तरञ्च सर्वं पितृव्यस्यैव स्यादिति, तस्मान्न्यूनाधिकविभागनिराकरणार्थमिति पूर्वकल्प एव साधीयानिति। एवञ्च पुत्राणां विभागस्वातन्त्र्याभावाच्च। पितामहधनविभागकालमुपसंहरति तेनेति। कालद्वयमिति। मरणादिना पितृस्वत्वापगमः, निवृत्ते मातृरजसि पितुरिच्छेति कालद्वयमित्यर्थः। वस्तुतस्तु पैतामहे स्वार्जिते वा पितृस्वत्वापगमकाल एक एव विभागस्य, विशेषस्तु पितामहधनविभागे मातृरजोनिवृत्तिकालस्य सहकारित्वमिति बोध्यम्। पितृकृतविभागेऽपि तस्योपेक्षया पुत्राणां स्वांशे

स्वत्वावगमात् अन्यथा पितृस्वत्वे विद्यमाने पुत्राणां प्रागुत्पन्नस्वत्त्वाभावात् तद्धने दायत्वस्य विभागस्य चानुपपत्तिरिति भाव्यम्। ननु वचने पितामहपदाश्रवणात् कथं तद्धनविषयत्वसत आह अविशेषेणेति। स्वार्जितधनं पितामहधनं वा विशेषतोऽनुपादायेत्यर्थः तथाच स्वार्जितधनविषयत्वे विष्णुवचनविरोधात् पितामहधनविषयत्वमेवास्य वचनस्येति भावः। ननु भूर्य्येत्यादिवचनविरोधात् पितृधनविषयत्वमेव कुतो न स्यात् तथाच सति पितामहधने पितापुत्रयोस्तुल्यांशितैव युक्तेति चेन्न विष्णुवचनविरोधस्य जागरूकत्वात्।।३२-३५।।

**किञ्च इतोऽपि पितामहधनात् पितुर्भागद्वयम्।।३६।।**

**ज्येष्ठस्य विंश उद्धारः सर्वद्रव्याच्च यद्वरम्।**
**ततोऽर्द्धं मध्यमस्य स्यात्तुरीयन्तु यवीयसः।।**

**(मनु ९।११२)**

**तथा एवं समुद्धृतोद्धारे समानंशान् प्रकल्पयेत्।**
**उद्धारेऽनुद्धृते त्वेषामियं स्यादंशकल्पना।।**
**एकाधिकं हरेज्ज्येष्ठः पुत्रोऽध्यर्द्धं ततोऽनुजः।**
**अंशमंशं यवीयांस इति धर्मो व्यवस्थितः।।**

**(मनु ९।११६-११७)**

**एतैर्मनुवचनैः सर्वद्रव्यवरसहितविंशत्तदर्द्धतत्तुरीयोद्धारा दर्शिताः तथा एकांशाधिकार्द्धांशाधिकचतुर्थभागाधिकभागाः प्रतिपादिताः। गौतमेनापि विंशतिभागो ज्येष्ठस्य मिथुनमुभयतो ददुयुक्तो रथो गोवृषः। (गौतम २८।५) मिथुनमजादीनां उभयतोदत् अश्वादि तदुयुक्तो रथः, गोयुक्तो वृषः, एतत्सर्वं ज्येष्ठस्य। तथा काणखोरकूटवण्डा मध्यमस्यानेकाश्चेत् (गौतम २८।६) खोरो वृद्धः, कूटो वामनाकृतिः, वण्डो विकृतलाङ्गूलः, एते मध्यमस्य यदि बहवो भवन्ति पशवः तथा अविर्द्धान्यायसी गृहमनोयुक्तं चतुष्पदाञ्चैकैकं यवीयसः सममितरत् सर्वम्। (गौतम २८।७-८) अविप्रभृतयः कनीयसः अवशिष्टं सर्वं समं विभजेरन्निति प्रतिपाद्य, द्व्यंशीवा पूर्वजः स्यादेकैकमितरेषामिति (गौतम २८।९-१०) सूत्रेणांशद्वयं ज्येष्ठस्योक्तम्।।३७।।**

वचनमुक्त्वा युक्तिमप्याह किञ्चेति। अथवा ननु तस्य स्वेच्छा स्वयमुपात्तेऽर्थे इति विष्णुवचनस्य पुत्रेभ्यो न्यूनाधिकभागदाने स्वेच्छा इत्येवार्थः। विभागे तु तस्य स्वोपात्ते तु द्व्यंशित्वम् उक्तवचनाभ्यां पैतामहे तु भूर्य्येत्यादिवचनस्य यथाश्रुतार्थानुरोधात् तुल्यांशितैव न्यूनाधिकविभागनिषेधपरत्वे लक्षणापत्तिरतोयुक्तिं प्रमाणयति किञ्चेति। इत इति, वक्ष्यमाणप्रबन्धयुक्तेरित्यर्थः। विंशः विंशतेः पूरणः उद्ध्रियते साधारणधनात् वहिर्भाव्यते इत्युद्धारः। वरं श्रेष्ठं यत्किञ्चित् भूरत्रादिकम्। एवञ्च ज्येष्ठस्य दशमं भागं न्यायवृत्तस्य दापयेदिति देवलवचनं विंशोद्धारार्हापेक्षया ज्येष्ठस्यातिशयगुणवत्त्वे बोध्यम्। मध्यमशब्दोऽत्र ज्येष्ठानन्तरजपरः तदनुजाश्च सर्वे यवीयः पदार्थाः उत्तरवचनेऽध्यर्द्धं ततोऽनुज इत्यभिधानात् अंशमंशं यवीयांस इति वीप्साबलाच्चेति बोध्यम्। उद्धारेऽनुद्धृते इति। सोदरमात्रक्रियमाणविभाग इत्यर्थः। सोदरासोदरविभागे तु विंशोद्धारादिकमेव। एतच्च सोदरासोदराभिप्रायकं कल्पद्वयं विद्यादिगुणवतां ज्येष्ठादीनामिति वक्ष्यते। एकाधिकमिति। एकमधिकभागं तेन भागद्वयमित्यर्थः। अध्यर्द्धमिति। अधिकम् अर्द्धं तेनार्द्धाधिकमेकभागं अंशमंशमित्यत्रापि अधिकपदार्थान्वयः तेन पादं पादमधिकं तथाच सपादैकभागमित्यर्थः। मिथुनं स्त्रीपुंसौ, तौ च पशुप्रस्तावात् पशूनामेव तत्र गोः पृथगुपादानादाह अजादीनामिति। आदिना मेषादिसंग्रहः। ननु गोवृष इत्यत्र न

द्वन्द्वसम्भवः समाहारपक्षे पुंलिङ्गानुपपत्तेः इतरेतरपक्षे एकवचनानुपपत्तेश्चेत्यत आह गोयुक्त इति। तथाच मध्यपदलोपिसमासाश्रयणेन तत्पदं साधु नात्र द्वन्द्व इति भावः। अनेकाश्चेदित्यनेन तेषामेकत्वे ज्येष्ठप्राप्योद्धारानुरूपमेव कल्प्यम्। अत्र ज्येष्ठस्यापि मनूक्तविंशोद्धारतैव गौतमेन मनुवचनादधिकमुक्तं तदत्यन्तगुणवत्त्वे बोध्यम्। एकैकमितरेषामित्यपि तेषां निर्गुणत्वे बोध्यम्। गृहमिति। पित्रवस्थानातिरिक्तगृहमित्यर्थः गृहं यवीयसोऽन्यत्र पितुरवस्थानादिति शङ्खवचनात्।।३६-३७।।

**न चोपार्जकत्वेन ज्येष्ठस्यांशद्वयमिति वाच्यम् उद्धारेऽनुद्धृते भागद्वयस्य विधानात् अर्जकत्वे चोद्धारस्यासम्भवात् मध्यमकनीयसोश्चोपार्जकतया ज्येष्ठेनाप्यविशेषात् तयोरध्यर्द्धादिविधानानुपपत्तेः ज्येष्ठादिपदानर्थक्याच्च।।३८।।**

**अतएव पुत्रिकौरसयोः पितृधनविभागे मनुरपि।**
**पुत्रिकायां कृतायान्तु यदि पुत्रोऽनु जायते।**
**समस्तत्र विभागः स्याज्ज्येष्ठता नास्ति हि स्त्रिया।।**

**इति। (मनु ९।१३४) स्त्रीत्वेन ज्येष्ठत्वाभावात् समभागतां प्रतिपादयन् पुरुषस्य भागद्वयं प्रतिपादयति।।३९।।**

पूर्वजस्य द्व्यंशित्वाभिधानं न ज्येष्ठताप्रयुक्तं किन्त्वर्जकत्वप्रयुक्तमेवेत्याशङ्कते न चेति। उद्धारस्यासम्भवादिति। अत्रायं भावः उद्धारेऽनुद्धृत इत्यनेन यत्र विषये उद्धारप्रसक्तिस्तत्रैव विषये भागद्वयविधानम् उद्धारश्च ज्येष्ठत्वपुरस्कारेणैव श्रुती न त्वर्जकत्वेनेति। यद्यपि उद्धारः सोदरासोदरविषयः द्व्यंशादिकन्तु सोदरमात्रविषयमित्यस्ति विषयभेदः तथापि ज्येष्ठत्वपुरस्कारेणैव उद्धारविधानात् सोदरमात्रविभागेऽपि ज्येष्ठस्य तत्प्रसक्तिरस्तीत्याशयः। ननूद्धारेऽनुद्धृते इत्यनेन उद्धारार्हविषये द्व्यंशित्वं न विधीयते उद्धारद्व्यंशित्वयोरसोदरसोदरविषयत्वेन भिन्नविषयत्वात् किन्तु भक्त्यतिशयाभावेनोद्धाराभावेन समभागबोधकशास्त्रान्तरसंवादितया समभगमर्थतः सूचयित्वार्जकत्वेनैव द्व्यंशित्वमभिधीयते तथाविधविषयत्वे द्व्यंशित्वस्यात्यन्तासम्भवयुक्तिकत्वादत आह मध्यमकनीयसोरिति। अध्यर्द्धादीति। अधिकार्द्धाधिकपादविधानेत्यर्थः। तयोरध्यर्द्धादिभागस्य वाचनिकत्वे त्वदृष्टकल्पनागौरवमिति भावः। ननु सर्वत्रार्जकत्वेनैव द्व्यंशित्वं मध्यमकनीयसोरध्यर्द्धादिविधानन्तु अर्जनस्याल्पाल्पतरत्वादिनाऽप्युपपन्नं न बाधकमत आह ज्येष्ठादिपदेति। अर्जकत्वेनैव द्व्यंशित्वे मध्यमादीनामपि तदविशिष्टतायाः सर्वसिद्धत्वात् ज्येष्ठपदस्यानर्थक्यादिति भावः। अतएवेति। यत एव ज्येष्ठत्वेनैव द्व्यंशित्वमत एवेत्यर्थः। भागद्वयमिति। ननु ज्येष्ठस्य विषमभागमेव ज्ञापयति मनुः वैषम्यस्य च सोद्धारभागेऽपि सम्भवात् कथं भागद्वयज्ञापनमिति चेन्न उद्धारस्य भागवैषम्याप्रयोजकत्वात् एवं समुद्धृतोद्धारे समानंशान् प्रकल्पयेदिति वचनात्। न चैवं स्त्रिया अपि विंश उद्धारः स्यात् तावतापि समभागसम्भवादिति वाच्यम् उद्धारस्य ज्येष्ठत्वपुरस्कारेणैव श्रुतेः स्त्रियाश्च तदभावात् तदिदमुक्तं ज्येष्ठता नास्तीति।।३८-३९।।

**यदुक्तं होलाकाधिकरणे प्राच्यकर्त्तृकहोलाकानुष्ठानोपपत्तये होलाका कर्त्तव्येति श्रुतिः कल्पिता तावतैव ददुपपत्तेः न तु प्राच्यादिपदवती कल्पनागौरवात् तद्वदत्राप्यर्जकोऽशंद्वयं गृह्णीयादिति श्रुतिः कल्पनीया न पुनः पित्रादिपदवतीति तदयुक्तं तत्र प्राच्यकर्त्तृकहोलाकानुष्ठानस्यावश्यककल्पनीयसामान्यश्रुत्यैवोपपत्तेः न चाप्राच्यानामननुष्ठानार्थं प्राच्यपदवती कल्पयतामिति वाच्यं तेषामननुष्ठानस्यानाचाररूपस्य श्रुतिकल्पनानिमित्तत्वानुपपत्तेः इह तु मन्वादीनां ज्येष्ठपदप्रयोगात् तदुपयत्तये ज्येष्ठपदवत्या एव श्रुतेः कल्पनार्हत्वात् अर्जकपद-**

**वत्या एव अवश्यकल्पनीयत्वाभावात् ज्येष्ठपदवत्या अर्जकपदवत्याश्च कल्पनायां विशेषप्रमाणाभावात्, न चान्यत्रार्जकस्य भागद्वयार्थं श्रुतेरवश्यं कल्पनीयत्वादत्रापि सैव मूलमस्तु लाघवात् ज्येष्ठपदञ्चार्जकपरमस्त्विति वाच्यं वैपरीत्यस्यापि सम्भवात् अत्रैव ज्येष्ठपदयुक्तश्रुतिकल्पनायामर्जकपदस्यापि ज्येष्ठपरत्वकल्पनासम्भवात् विनिगमनाप्रमाणाभावात्। किञ्चैवं लाघवादिना यत्किञ्चित् त्रिचतुरादिपदवतीमेकां श्रुतिमनुमाय सकलस्मृतिपदानां गौण्या लक्षण्या वा वृत्त्या तत्परत्वमपि वाच्यमित्यतीवात्मनः स्मृतिनिपुणता निरूपिता। तस्माद्यस्मादेवाचारात् स्मृतिवाक्याद्वा या श्रुतिरवश्यं कल्पनीया तयैव तद्गतस्याचारांशस्य स्मृतिपदस्य च उपपत्तेर्न तत्राधिककल्पनेति होलाकाधिकरणस्यार्थः।।४०।।**

यदुक्तमिति। होलाका वसन्तोत्सवविशेषः प्राच्यैः क्रियते, प्राच्यादीत्यादिपदात् दाक्षिणात्यक्रियमाणकरञ्जार्कपूजारूपोत्सवाचारोपपत्तये कल्पनीयश्रुतौ दाक्षिणात्यपदपरिग्रहः। न पित्रादीति। तथाच पितुरपि अर्जकत्वेनैव भागद्वयं नान्यथा तेन तस्यापि स्वार्जितधन एव द्व्यंशित्वं नान्यत्रेति मतं तस्य। सामान्यश्रुत्यैवेति। प्राच्यादिपदाघटितश्रुत्यैवेत्यर्थः। श्रुतिकल्पना निमित्तत्वेति। आचारश्चैव साधूनामित्यनेनाचारस्यैव वेदमूलकत्वाभिधानात् न त्वनाचारस्येति भावः। न च श्रुतौ प्राच्यपदाप्रवेशेऽप्राच्यानामपि तत्प्राप्तेस्तेषां तदकरणात् प्रत्यवायापत्तिरिति वाच्यम् आचारस्य नित्यत्वे प्रमाणाभावात्। तदुपपत्तये ज्येष्ठपदसार्थक्याय। ज्येष्ठपदवत्या इति स्मृतेः स्वसमानार्थकश्रुतिमूलत्वादिति भावः। तथाचाचारे पदविरहात् पदवैयर्थ्यापत्तिरूप-बाधकविरहेण सामान्यश्रुतिरेव तत्र कल्प्यते स्मृतौ तु ज्येष्ठपदवैय्यर्थ्यापत्तिरूपबाधकसत्त्वात् न सामान्यश्रुतेः कल्पनम् अपि तु ज्येष्ठपदवत्या एवेति भावः। अवश्येति। यथा ज्येष्ठपदवत्या अवश्यकल्पना न तथा अर्जकपदवत्या अवश्यकल्पना, द्व्यंशी वा पूर्वजः स्यादित्यादावर्जकपदाश्रवणात् अर्जको द्व्यंशमर्हतीत्यस्य तु निरपेक्षार्जकत्वपुरस्कारेणैव श्रुतिकल्पकत्वं तत्र ज्येष्ठपदाश्रवणादिति भावः। ननु ज्येष्ठार्जकपदवतीभ्यां स्मृतिभ्यामेकमूलत्वकल्पनालाघवेन ज्येष्ठार्जको द्व्यंशं गृह्णीयात् इत्येकैव श्रुतिः कल्प्यते तावतापि ज्येष्ठस्यार्जकत्वपुरस्कारेणैव द्व्यंशित्वमिति सिद्धमेवेत्यत आह ज्येष्ठपदवत्या इति। प्रमाणाभावादिति। निरपेक्षप्रवृत्तायामेकैकस्मृतौ पदद्वयाश्रवणादिति भावः। तथात्वे कनिष्ठार्जकानामद्व्यंशित्वे सर्वतन्त्रविरोधोऽपि द्रष्टव्यः। अन्यत्र कनिष्ठार्जितधने। श्रुतेः अर्जकीद्व्यंशं गृह्णीयादिति श्रुतेः। वैपरीत्यं विवृणोति अत्रैवेति। विनिगमनेति। लक्षणाया उभयत्राप्यविशिष्टतया तस्यावश्यकल्पनम् अस्य वेत्येकतरग्राहकप्रमाणाभावादित्यर्थः। अथ पितृव्यादीनामपि साधारणधनेनार्जकत्वे द्व्यंशित्वम् उभयवादिसिद्धमित्येतदेव विनिगमकमस्तीत्यत आह किञ्चेति। लाघवादित्यादिना एकत्र विप्रतिपत्तिः अन्यत्र उभयवादिसिद्धत्वरूपविनिगमनासंग्रहः। स्मृतिनिपुणतेति। तस्मान्मुख्यार्थस्य प्रथमोपस्थितत्वात् लक्षणायां गौरवात् तत्कल्पनाभावाच्च शब्दानां मुख्यार्थबोधकत्वस्थितौ कथं ज्येष्ठादिपदानामर्जके लाक्षणिकत्वसम्भव इति भावः। तर्हि क्वास्य न्यायस्य विषय इत्यत्राह तस्मादिति। अवश्यं कल्पनीयेति। प्राच्यादिपदवतीकल्पनेऽपि होलाका कर्त्तव्येति भागस्यावश्यकत्वादिति भावः। आचारांशस्य आचारविषयस्य स्मृतिपदस्य स्मृतिविषयस्य।।४०।।

**अतएव वशिष्ठेन ज्येष्ठस्यांशद्वयमभिधाय उपार्जकस्याप्यंशद्वयं पृथगभिहितम्। यथा। अथ भ्रातृणां दायविभागो (वशिष्ठ १७।३६) द्व्यंशं ज्येष्ठो हरेत् (वशिष्ठ १७।३७) ततोऽनतिदूरे पुनराह। येन चैषां समुत्पादितं स्यात् सोऽपि द्व्यंशमेव हरेत् (वशिष्ठ १७।४२) अनेनार्जकतया भागद्वये दर्शिते ज्येष्ठस्यांशद्वयाभिधानमनर्थकं स्यात्।।४१।।**

**द्व्यंशहरत्वमपि न ज्येष्ठतामात्रेण। यदाह बृहस्पतिः।**

**जन्मविद्या गुणज्येष्ठो द्व्यंशं दायादवाप्नुयात्।**
**समांशभागिनस्त्वन्ये तेषां पितृसमस्तु सः।।**

**उपार्जकत्वेन भागद्वये जन्मविद्यादिकीर्त्तनमनुपयोगि।।४२।।**

**एतच्च भागद्वयं सोदरमात्रभ्रातृविभागविषयम्। सोदरासोदरविभागगोचरश्च ज्येष्ठस्य विंश उद्धारः। यदाह बृहस्पतिः।**

**समवर्णासु ये जाताः सर्वे पुत्रा द्विजन्मनाम्।**
**उद्धारं ज्यायसे दत्त्वा भजेरन्नितरे समम्।।४३।।**

**सवर्णासु बह्वीषु स्त्रीषु जातानाम् उद्धारपूर्वकविभागश्रुतेर्भागद्वयं सोदरमात्रगोचरमेव सिद्ध्यति। युक्तञ्चैतत् सोदरतयाधिकगौरवात्।।४४।।**

**उद्धारोऽपि दशसु गवादिषु न कार्य्यः। तथा मनुः।**

**उद्धारो न दशस्वस्ति सम्पन्नानां स्वकर्मसु।**
**यत्किञ्चिदेव देयं स्याज्ज्यायसे मानवर्द्धनम्।।४५।।**

**(मनु ९।११५)**

अत एवेति। यत एव ज्येष्ठत्वमर्जकत्वञ्च परस्परनैरपेक्ष्येण द्व्यंशित्वप्रयोजकम् अत एवेत्यर्थः। पृथगभिहितमिति। तथाचैकमुनिवचनयोरेकवचनवैयर्थ्यापत्त्या एकवाक्यत्वासम्भवान्न तथात्वमिति भावः। पृथगभिधायकतद्वचनमाह यथेति। येनेति। एषां भागिनां मध्ये येनार्जितं सोऽर्जितधनात् द्व्यंशं हरेदित्यर्थः। ज्येष्ठता, आदिगर्भप्रभवता। जन्मविद्येति। तथा चैतद्वचनानुरोधाज्ज्येष्ठपदस्य जन्मविद्यादिज्येष्ठपरत्वावश्यकत्वे कथमर्जकपरत्वसम्भव इति भावः। अनुपयोगीति। तत्रार्जनस्यैवोपयोगित्वादिति भावः। सोदरासोदरेति। उपलक्षणमेतत्। असोदरमात्रविषयोऽपीति भाव्यम्। उद्धार इति। द्व्यंशस्थानेऽधिकांशो न उद्धारः, अविभक्तद्रव्यात् तस्य पृथगक्रियमाणत्वादिति भावः। समवर्णास्विति। विषमवर्णासु जातानाञ्च ब्राह्मणादिपुत्राणां क्रमेण चतुस्त्रिद्व्येकभागित्वमिति वक्ष्यते, द्विजन्मनाभित्यनेन शूद्रस्य विंशोद्धारनिवृत्तिः तन्निवृत्त्या च दण्डापूपन्यायात् द्व्यंशस्यापि निवृत्तिः अतएव मनुरपि शूद्रस्य तु सवर्णैव नान्या भार्य्योपदिश्यते। तस्यां जाताः समांशाः स्युर्यदि पुत्रशतं भवेत् इत्यनेन शूद्रस्य समांशमेव विदधाति। न च द्विजन्मनामित्युपादानात् समवर्णास्वित्यत्र बहुवचनोदानाच्च सोदरासोदराणां द्विजन्मनामेवोद्धारविधिः, द्व्यंशविधिस्तु तदन्येषां सोदरमात्राणां द्विजन्मनां सामान्यतः शूद्रभ्रातृणाञ्चेत्येव किं नस्यादिति वाच्यं पूर्वोक्तमनुवचनैरुद्धारद्व्यंशयोः समानविषयत्वावगमात् उद्धाराविषये शूद्रे द्व्यंशित्वाप्रसक्तेः। वस्तुतस्तु ज्येष्ठशूद्रस्याप्युद्धारौ युक्तः तस्यापि पुन्नामनरकनिवर्त्तकत्वेन अधिकोपकारकत्वात् अधिकधनसम्बन्धस्य अधिकोपकारनिबन्धनत्वात् बृहस्पतिवचने समवर्णास्विति विषमवर्णाजातानां विषमविभागसूचनार्थम् अतएव शूद्रस्य विषमवर्णाजाताभावेन सूचनीयस्य विषमभागस्य तत्रासम्भवात्तद्व्यावृत्त्यर्थं द्विजन्मनामिति कृतं न तु शूद्रस्योद्धारनिवृत्त्यर्थं युक्तिविरोधात्। न च मनुना समानांशाभिधानात् तद्विरोधः उद्धारस्य भागवैषम्याप्रयोजकत्वात्। यथोक्तम् उद्धारं ज्यायसे दत्त्वा भजेरन्नितरे सममिति भाव्यम्। इतरे सममिति। ज्येष्ठस्य सगुणत्वे इतरेषां निर्गुणत्वे इदं तेन नाध्यर्द्धादिभागविधिविरोधः। न च द्व्यंशविधिर्जन्मविद्यादिज्येष्ठविषयोऽस्तु उद्धारविधिस्तु तदितरविषय इति निर्गुणस्यापि उद्धार इति तेन सोदरासोदरसाधारणी व्यवस्थास्त्विति वाच्यं समवर्णास्विति बहुवचनानुपपत्तेः भवन्मते एकस्यां जातानामपि तथात्वस्य सिद्धेः। दशस्विति। तत्पर्य्यन्तेषु इत्यर्थः। स्वकर्मसु सम्पन्नानामित्यनेन सर्वेषां तुल्यगुणवत्त्व एव तत्, अधिकगुणवत्त्वे तु ज्येष्ठस्य तत्रापि विंश उद्धार इति चूड़ामणिः।।४१-४३।।

**तदेवमुक्तप्रबन्धेन यत्र ज्येष्ठभ्रातुरेव पितृधने भागद्वयं कथं तत्र जनकस्य दानविक्रय-परित्यागक्षमस्य पितामहधनसम्बन्धमूलस्यातिंगुरोः पितुरेव स्वपितृधने भागद्वयं न सम्भवति ''जन्मविद्यागुणज्येष्ठइति'' वाक्येन च पितृसमत्वेन भागद्वयं ज्येष्ठस्यातिदिशन् पितुर्भागद्वयं ज्ञापयति बृहस्पतिः। जीवद्विभागे तु पिता गृह्णीतांशद्वयं स्वयमिति सामान्येनांशद्वयाभिधानोपदेशो बृहस्पतिना दर्शितः। तथा नारदः।**

**द्वावंशौ प्रतिपद्येत विभजन्नात्मनः पिता।**
**समांशहारिणी माता पुत्राणां स्यान्मृते पतौ।।४६।।**

**(नारद १३।१२)**

**द्रव्यं विभजन् पिता द्वावंशावात्मनो गृह्णीयात् न पुनरात्मनो द्रव्यं विभजन्निति सम्बन्धः पूर्वोक्तविरोधात्।।४७।।**

**किञ्च पैतामहधने पितापुत्रयोः समभागित्वे यावद्धनं पितुस्तावदेव पुत्रस्यापीति वाच्यं न तु यावदेव यदेवं धनं, तावदेव तदेव पुत्रस्यापीति, मध्यगत्वापत्तेः जायापत्योरिव विभागा-भावप्रसङ्गात्।।४८।।**

बृहस्पतिवचनमपि पितुर्द्व्यंशित्वे प्रमाणयति जन्मेति। अतिदिशन्निति। तैषां पितृसमस्तु स इत्यतिदेशेन यथा पुत्रादिभिः सह स्वपितृधनविभागे क्रियमाणे पितुर्द्व्यशित्वं, तथा ज्येष्ठस्यापि भ्रातृविभागे स्वपितृधनद्व्यंशित्वमित्यवगमादिति भावः। सामान्येन, स्वार्जितपितृधनाद्यनुल्लेखेनांश-द्वयाभिधानरूप उपदेशः पितृधनविषयतया बृहस्पतिना दर्शितोऽतिदेशेनेति शेषः। नारदवचनादात्मधन एव, पितुरंशद्वयमिति शङ्कामपनेतुं स्वमतसाधकतया तदवतारयति तथेति। पूर्वोक्तेति। तस्य स्वेच्छा स्वयमुपात्तेऽर्थे इति पूर्वोक्तविष्णुवचनस्य स्वल्पेन वा विभज्य भूयिष्ठमादाय वसेदिति हारीतोक्तस्य च विरोधादित्यर्थः। केचित्तु इतोऽपीत्यादि पितामहधनगोचरभागद्वययुक्तिविरोधादित्याहुः तदसत् पितामहधनद्व्यंशित्वयुक्तेः पितृधनद्व्यंशित्वविरोधाप्रसक्तेः। पितामहधने पितापुत्रयोस्तुल्यांशित्वे बाधकमप्याह किञ्चेति। मध्यगत्वापत्तेरिति। मध्यगत्वञ्च, उभयनिरूपितस्वत्वद्वयवदेकद्रव्यम्। अथैवं पितरि मृते सत्यां मातरि विमातरि वा पुत्राणां स्वत्वानुदयः स्यात् मात्रादिस्वत्वस्य विरोधिनः सत्त्वात्। न च पितृमरणादेव तासां स्वत्वनाशोऽन्यमरणस्यान्यस्वत्वनाशकत्वे प्रमाणाभावात्। न च उभयनिरूपितं व्यासज्यवृत्ति एकमेव स्वत्वं प्रतियोगिनाशादेव नश्यति इति वाच्यम, तथा सति पत्न्यां मृतायां तद्धने पत्युः स्वत्वनाशप्रसङ्गात् मातृधनान्तर इव तत्पुत्रकन्यादीनामधिकारप्रसङ्गात्। किञ्च पत्न्यां जीवन्त्यां स्वधनस्य परस्वत्वेन निर्णीतस्य विनियोगे प्रतिक्षणं पत्युश्चौर्य्यं स्यादिति चेन्मैवं, पितृमरणानन्तरं पुत्राधिकारप्रतिपादकशास्त्रस्यैव पतिमरणात् पत्नीस्वत्वनाशे प्रमाणत्वात्। अतएव पुण्यापुण्यफले समे इत्यपि सङ्गच्छते। अन्यथा पत्न्याः पतिधने स्वत्वाभावे तदनुपपत्तेरित्यादि सुधीभिर्भाव्यम्। विभागाभावेति। यत्रैव पितुः स्वत्वं तत्रैव पुत्रस्यापीत्यभ्युपगमे विभागानन्तरमपि तदवधारणात् वैशेषिकव्यवहारानर्हतायास्तादवस्थ्यादिति भावः।।४६-४८।।

**एवञ्च सति भ्रातॄणां विभागे यदा ज्येष्ठस्य ज्येष्ठतया भागद्वयकल्पनं तदा तत्पुत्रस्यापि भागद्वयकल्पने पुत्रेण सह ज्येष्ठस्य चत्वारोऽंशाः भ्रात्रन्तरस्यैकोऽंशः स्यात् बहुपुत्रत्वे च ज्येष्ठस्य तत्पुत्राणां पितृसमभागकल्पने कनिष्ठभ्रातुर्यत्किञ्चिदेव स्यादिति महाजन-विरोधः।।४९।।**

**यच्च बृहस्पतिवचनम्।**

**द्रव्ये पितामहोपात्ते स्थावरे जङ्गमे तथा।**
**सममंशित्वमाख्यातं पितुः पुत्रस्य चैव हि॥**

**अंशित्वं समं समानं न च स्वेच्छया स्वोपात्तधनवत् न्यूनाधिकविभागं दातुमर्हति न पुनरंशः सम इति तस्यार्थः॥५०॥**

**द्विपितृकपित्रभिप्रायं वा समभागवचनम्॥५१॥**

**तत्र स्यात् सदृशं स्वाम्यमिति वचनन्तु प्रागेव व्याख्यातम्॥५२॥**

बहुपुत्रत्वे चेति। पूर्वं सपुत्रापुत्रभ्रातृद्वयविभागे तत्पुत्रस्यापि भाग इत्येतावन्मात्रमुक्तम् इह तु कनिष्ठस्याल्पप्राप्तिरिति विशेषात् न पुनरुक्तिः। यच्चेति। जङ्गमो द्विपद एव स्थावरसाहचर्य्यात्। समानमिति, समानमेवेत्यर्थः। लक्षणाफलमाह न चेति। गत्यन्तरसम्भवे लक्षणाश्रयणमन्याय्यमित्यभिप्रायेणाह द्विपितृकेति। स यद्येकपुत्रः स्यादिति वक्ष्यमाणशङ्खवचनानुरोधादिति भावः। चूड़ामणिस्तु तस्यार्थ इत्यन्तं भूर्य्या पितामहोपात्ता इत्यनेनैकवाक्यत्वादिति सहेतुकं व्याख्याय ननु अंशित्वस्य अंशानतिरिक्ततया कथमंशित्वसाम्येऽशवैषम्यं तथाच स्थावरजङ्गमपदस्योपलक्षणतया द्रव्यसामान्यग्रहणात् कुतो भूर्य्येत्यादिनैकवाक्यत्वसम्भव इत्यत आह द्विपितृकेतीत्याह। तदयुक्तं, वक्ष्यमाणसिद्धान्ते भूर्य्येत्यादिना तस्य वचनस्य तुल्यविषयताया वक्ष्यमाणत्वात् उक्तव्याख्ययैव सामञ्जस्याच्च।।४९-५२।।

**किञ्च यद्यसौ पिता स्वपितुः पुन्नामनरकनिवर्त्तको ज्येष्ठस्तदा तस्य स्वभ्रातृनेवापेक्ष्य यत्र पितृसमत्वेन भागद्वयं सुतरां तस्य पुत्रापेक्षया भागद्वयं युक्तं पुत्राणां क्रमागतधनसम्बन्धस्य पित्रधीनत्वात्, अथ यः पितुर्न ज्येष्ठः पुत्रस्तस्य स्वपुत्रैः सह समांशतोच्यते॥५३॥**

**तत्र, मध्यमादिपुत्राणामप्यध्यर्द्धादिविधानात् पितृतया भागद्वयस्यैव सुतरां युक्तत्वात्। सामान्येन च पितापुत्रयोः समांशाभिधानस्य भवतो मुनीनां चानुचितत्वात्॥५४॥**

**किञ्च पितुरंशद्वयाभिधानं स्वोपात्तद्रव्यगोचरमित्यप्यनुपपन्नं तदिच्छानुरोधित्वात् विभागस्य, इच्छातश्च भागद्वयत्रयन्यूनाधिकानामपि प्राप्तेर्विफलो विधिः नियमार्थत्वञ्च वचनस्य न वर्णनीयं, विष्णुविरोधात् तदाह। पिता चेत् पुत्रान् विभजेत् तस्य स्वेच्छा स्वयमुपात्तेऽर्थे पैतामहे तु पितापुत्रयोस्तुल्यं स्वाम्यम् (विष्णु १७।१-२)॥५५॥**

**अस्यार्थः। स्वोपात्ते यावदेव ग्रहीतुमिच्छति अर्द्धं भागद्वयं त्रयं वा तत् सर्वं तस्य शास्त्रानुमतं न तु पैतामहेऽपि॥५६॥**

**तथाच हारीतः।**

**जीवन्नेव वा पुत्रान् प्रविभज्य वनमाश्रयेत्।**

**वृद्धाश्रमं वा गच्छेत् स्वल्पेन वा विभज्य भूयिष्ठमादाय वसेत् यद्युपदश्येत् पुनस्तेभ्यो गृह्णीयात्॥५७॥**

**अनेन स्वल्पस्य विभागो भूयिष्ठद्रव्यस्य ग्रहणञ्च पितुरभिहितम्। वृद्धाश्रमः प्रव्रज्या॥५८॥**

पितामहधने पितुर्द्व्यंशित्वे प्रकृते युक्त्यन्तरमाह किञ्चेति। ननु उक्तयुक्त्या नरकनिस्तारकर्त्तुर्ज्येष्ठपुत्रस्य पितुः पैतामहधने द्व्यंशित्वं तदकर्त्तुश्च कनिष्ठपुत्रस्य पितुस्तद्धने पुत्रैः सह समांशितास्तु वचनानां सामञ्जस्यादित्याशङ्कते अथेति। मध्यमेति। मध्यमादिपुत्राणामेव सार्द्धांशादिहारकत्वं यत्र तत्र तो न्यूनस्य एकांशमात्रस्य पितुः पितृत्वेनानौचित्यात् भागद्वयमेव युक्तमिति भावः। ननु पैतामहे

पितापुत्रयोस्तुल्याधिकारित्वमेवोच्यते तथाच प्राथम्यात् ज्येष्ठेनैव पितुः समानाधिकारिता भविष्यति न मध्यमेन कनिष्ठैर्वा तत् कथं न्यूनत्वमत आह सामान्येनेति। सामान्येन सममंशित्वमित्यादौ अविशेषेणेत्यर्थः। अनुचितत्वादिति। तथाचैकपुत्रस्य पितुर्द्व्यंशित्वं द्विपितृकस्य तु क्षेत्रजादेः पितुश्च समांशित्वमित्येवोचितमिति भावः। पितुरंशद्वयविधानस्य स्वोपात्तविषयत्वासम्भवात् पितामहधन-विषयत्वमेवेत्याह किञ्चेति। उपदश्येत् भुक्तसर्वधनः स्यात्।।५३-५८।।

**यच्च शङ्खलिखितवचनम्। स यद्येकपुत्रः स्यात् द्वौ भागावात्मनः कुर्य्यात्। अस्यायमर्थः। एकस्य पुत्रःएक पुत्रः न पुनरेक एव पुत्रो यस्येति बहुब्रीहिः तस्यान्यपदार्थप्रधानत्वेन षष्ठीतत्पुरुषाद्दुर्बलत्वात् एकपुत्रश्चौरसः तथाविधस्य पितुर्भागद्वयं न तु क्षेत्रजस्य पितृत्वेऽपि। तत्र स्यात् सदृशं स्वाम्यमिति वचनं क्षेत्रजपित्रभिप्रायमेव वर्णनीयम्।।५९।।**

**क्षेत्रजो हि द्विपितृकः। तदाह बौधायनः।**

**मृतस्य च प्रसूतो यः क्लीवस्य व्याधितस्य वा।**
**अन्येनानुमतो वा स्यात् स्वे क्षेत्रे क्षेत्रजः स्मृतः।।**

**स एव द्विपितृको द्विगोत्रश्च द्वयोरपि स्वधाकरो रिक्थभाग्भवति।।६०।।**

**अस्यार्थः। क्लीवादेः स्वे क्षेत्रे तदनुमतोऽन्येन प्रसूतः क्षेत्रजः।।६१।।**

**तथा नारदः।**

**क्षेत्रिकानुमते क्षेत्रे बीजं यस्य प्रकीर्य्यते।**
**तदपत्यं द्वयोरेव बीजिक्षेत्रिकयोर्मतम्।।६२।।**

**(नारद १२।५७)**

भागद्वयवचनं स यद्येकपुत्रः स्यादित्यनेनैकमूलतया एकपुत्रकपितृविषयमिति मतमपाकर्त्तुं तद्व-चनमन्यथा व्याख्यातुमुत्थापयति यच्चेति। दुर्बलत्वादिति एकदेशलक्षणापेक्षया समुदाये लक्षणाया गौरवग्रस्तत्वादिति केचित्। तदसत् समुदाये शक्त्यभावेन लक्षणाया अप्रसक्तेः। वस्तुतस्तु तत्पुरुषे उत्तरपदं मुख्यमेव पूर्वपदन्तु सम्बन्धिनि लाक्षणिकं बहुव्रीहौ द्वयोरेव पदयोर्मुख्यार्थत्यागात् तदपेक्षया दुर्बलत्वमिति। औरसस्यापि पितुर्भागद्वये क्षेत्रजस्य पुत्रेण सह तुल्यांशित्वस्थितौ तद्विषयतया सदृशं स्वाम्यमिति वचनस्य मुख्यत्वसम्भवे न्यूनाधिकविभागनिषेधेन लक्षणा अन्याय्येत्यभिप्रेत्याह तत्र स्यादिति। द्विपितृकमाह, क्षेत्रजो हीति। मृतस्य चेति। स्वे क्षेत्रेऽन्येन प्रसूत उत्पादितः क्लीवादेः क्षेत्रे वा तदनुमतोऽन्येनोत्पादित इत्यर्थः।।५९-६२।।

**अतश्चैकपुत्र आत्मनो भागद्वयं कुर्य्यादिति विधौ एकपुत्रत्वस्य कर्त्तुविशेषणतया विवक्षा-र्हत्वात् उद्देश्यविशेषणत्वेनाविवक्षितत्वमित्यपि परास्तं भवति।।६३।।**

**किञ्च परमप्रेक्षावन्मनुगौतमदक्षादिप्रयुक्तपदानां प्रतिक्षणमविवक्षामाचक्षाणः स्वस्यैव साक्षादविवक्षितत्वं ख्यापयति।।६४।।**

**तथा पुत्रार्जितेऽपि धने पितुरंशद्वयं द्वावंशाविति (नारद १३।१२) गृह्णीतांशद्वयमिति चाविशेषश्रुतेः। सुव्यक्तमाह कात्यायनः।**

**द्व्यंशहरोऽर्द्धहरो वा पुत्रवित्तार्जनात् पिता।**
**मातापि पितरि प्रेते पुत्रतुल्यांशभागिनी।।६५।।**

**पुत्रस्य वित्तार्जनात् पितुर्द्व्यंशहरत्वम् अर्द्धहरत्वं वेत्यस्यार्थः।।६६।।**

**न च पुत्रश्च वित्तञ्चेति पुत्रवित्ते तयोरर्जनात् पिता द्व्यंशहरः पुत्रानर्जनात्तु सर्वहर इति**

**वाच्यम् अनर्जितपुत्रस्यापि भ्रातृभिर्विभागे वित्तार्जकतया अंशद्वयस्येष्टत्वात् कथं सर्वहरत्वम् अतो विभागार्हसम्बन्धिनि विद्यमाने अर्जकस्य द्व्यंशित्वम् असति तु सर्वहरत्वं वाच्यं तथात्र पितापुत्रयोः प्रमत्तगीतता स्यात्। किञ्चार्जनं स्वत्वहेतुभूतव्यापारः अर्जनं स्वत्वं नापादयतीति विप्रतिषिद्धमित्यभिधानात् न च पुत्रेषु स्वत्वमस्तीति सर्वस्वदाने प्रदर्शितम् अतस्तत्र गौणमर्जनपदं वित्ते च मुख्यं न चैतत् सकृच्छ्रुतस्य सम्भवति॥६७॥**

**न च पुत्रेणार्जितत्वात् पुत्रस्य द्व्यंशप्राप्तेः पितुश्च भागद्वयस्यास्माद्वचनादृतेऽपि प्राप्तेः समभागत्वापातात् विधानमर्थकमिति वाच्यम् एतद्वचनमन्तरेण पुत्रधने पितुर्भागद्वयस्याप्राप्तेर्वचनस्यार्थवत्त्वात्॥६८॥**

अथैकपुत्रोद्देशेन भागद्वयविधानात् हविरुभयत्ववत् ग्रहैकत्ववच्च उद्देश्यविशेषणतया एकपुत्रत्वविशेषणमविवक्षितं किन्तु पक्षप्राप्तानुवादमात्रम् अतः सर्वेषामेव भागद्वयमित्याशङ्क्याह अतश्चेति। कर्त्तृविशेषणयेति। एकपुत्रकर्त्तृकात्मसम्बन्धिभागद्वयस्य विधेयतया एकपुत्रत्वं विधेयविशेषणमेव न तूद्देश्यविशेषणं येनाविवक्षितं स्यादिति भावः। केचित्तु कर्त्तुराख्यातवाच्यत्वेन विधेयतया तद्विशेषणस्यैकपुत्रत्वस्य द्विपितृकव्यावर्त्तकत्वेन सप्रयोजनकतया विवक्षितत्वमित्याहुः। स्वधनातिरिक्तधने पितुर्भागद्वययुक्तिदार्ढ्यार्थमाह तथेति। पुत्रवित्तार्जनादिति। द्व्यंशहरत्वाद्यन्वयानुरोधात् कृद्विहितो भावो द्रव्यवत् प्रकाशते इति व्युत्पत्तेः पुत्रार्जितवित्तादित्यर्थः। न चेति। तथाच पुत्रार्जितवित्ते न पितुर्द्व्यंशित्वं येन दृष्टान्तबलात् प्रकृतदार्ढ्यं स्यादिति भावः। पितापुत्रयोः पितापुत्रपदयोः। ननु विभागोऽर्थस्य पित्र्यस्य इतिवत् पितापुत्रपदं सम्बन्धिमात्रोपलक्षणं सामान्यकल्पनायां लाघवस्य मूलत्वादत आह किञ्चेति। विप्रतिषिद्धं विरुद्धं तथा चार्जनं स्वत्वमापादयत्येवेत्यर्थः। अभिधानात् प्राज्ञैरिति शेषः। दर्शितमिति। तत्र पुत्रदाननिषेधस्य स्वत्वाभावेन न्यायमूलत्वादिति भावः। सम्भवतीति। सकृदुच्चरितः शब्दः सकृदेवार्थं गमयतीति न्यायात् युगपदवृत्तिद्वयविरोधाच्चेति शेषः। तेन न द्वन्द्वगर्भतत्पुरुषः सम्भवतीति भावः। द्व्यंशप्राप्तेरिति। अर्जको द्व्यंशमाहरेदिति वचनात् पितुर्भागद्वयं गृह्णीतांशद्वयं स्वयमिति सामान्याभिधानादिति भावः। अनर्थकमिति अर्द्धहरत्वाभिधानमनर्थकमित्यर्थः इदमुपलक्षणम्। प्राङ्निर्दिष्टद्व्यंशहरत्वमादाय विरुद्धार्थकत्वमपि बोध्यम्। भागद्वयस्याप्राप्तेरिति। द्व्यंशार्द्धरूपद्विविधभागस्याप्राप्तेर्नियमेनाप्राप्तेरित्यर्थः। तथाच भृत्यार्जितवत् सर्वत्रैव स्वाम्यात् भूयिष्ठग्रहणस्यापि प्राप्तेर्नियमार्थं पक्षद्वयमुक्तमिति भावः। विरुद्धार्थकत्वञ्चैतयोर्विषयभेदस्य वक्ष्यमाणतया निरसनीयमिति।।६३-६८।।

**किञ्च पुत्रवित्तार्जनादित्यस्य पितृधनविषयत्वे पितुरिच्छातो द्व्यंशहरत्वमर्द्धहरत्वं वेत्यनुपपन्नम् इच्छानुरोधित्वात् ग्रहणस्य इच्छायाश्चानियतत्वात् सार्द्धसपादपादोनांशग्रहणस्यापि सम्भवात् कथं पक्षद्वयमात्रकीर्त्तनं नियमार्थत्वञ्च पितृधनगोचरं न सम्भवतीत्युक्तं प्राक्। अत्र च पुत्रार्जितवित्तस्य यथा द्व्यंशहरत्वं तथा तस्यैव वित्तस्यार्द्धहरत्वमिति युक्तम्॥६९॥**

**न पुनर्द्व्यंशस्यार्द्धमेकोऽशस्तद्ग्रहणार्थं वचनम् अर्द्धस्य द्व्यंशस्य चैकदेशत्वेन एकदेशिन आकाङ्क्षितत्वात् पुरुषविशेषणतया हरणकर्मत्वेन च द्वयोः समत्वात् परस्परसम्बन्धानुपपत्तेः। वित्तार्जनादिति पञ्चम्यन्तेन द्व्यंशरूपैकदेशान्वयार्थोपादानस्याविवादात् अर्द्धपदेनापि तस्यान्वयो युक्तः वित्तार्जनार्द्धपदयोश्चाव्यवधानात् वित्तस्यैवार्द्धं प्रतीयते न पुनर्द्व्यंशस्यार्द्धमेकोऽशः प्रतीयते स्वायत्ते चैकांशपदे प्रयोक्तव्येऽवाचक पदप्रयोगस्यान्याय्यत्वात् वित्तस्यैवार्द्धं युक्तम्॥७०॥**

**तत्र पितृद्रव्योपघातेन पुत्रार्जितवित्तस्यार्द्धं पितुः अर्जकस्य पुत्रस्यांशद्वयम् इतरेषामेकैकांशिता अनुपघाते तु पितुरंशद्वयम् अर्जकस्यापि तावदेव इतरेषामनंशित्वम्।।७१।।**

ननु पुत्रे स्वत्वमस्त्येव अन्यथा विक्रयञ्चैव दानञ्च न नेयाः स्युरनिच्छवः। दारान् पुत्रांश्च सर्वस्वमात्मन्येव नियोजयेत्। आपत्काले च कर्त्तव्यं दानं विक्रय एव च। अन्यथा न प्रवर्त्तेत इति शास्त्रार्थनिश्चय इति कात्यायनेन विरोधः स्यात् अतएव मातापितृदत्तविक्रीतौ पुत्रौ दत्रिमक्रीतौ मनुराह स्म। यत्तु पुत्रदारोपक्रमे नारदेनोक्तम्। आपत्स्वपि च कष्टासु वर्त्तमानेन देहिना। अदेयान्याहुराचार्य्या यच्चान्यस्मै प्रतिश्रुतमिति तत् पुत्रादीनामनिच्छाविषयमिति न विरोधः। न च मन्वादिभिरर्जनगणनमध्ये अपत्योत्पादनस्यागणनात् कुतः पुत्रे स्वत्वं कात्यायनादिवचनस्यैव तस्य स्वत्वहेतुत्वे प्रमाणत्वात् सर्वस्वदाने तु वचनबलादेव पुत्रस्यादानम् अतएव स्वं कुटुम्बाविरोधेन देयं दारमुतादृते इत्युपपद्यते अन्यथा स्वत्वाभावादेव तदप्राप्तेस्तदनर्थकं स्यात् अत आह किञ्चेति। नियमार्थत्वं पक्षद्वयनियमार्थत्वम्। उक्तं तस्य स्वेच्छेति स्वल्पेन वा विभज्य भूयिष्ठमादाय वसेदित्याभ्यामिति शेषः। तथा चानायत्त्या पुत्रार्जितविषयत्वं वचनस्येति भावः। एकदेशत्वेन स्वसम्बन्धिकत्वेन एकदेशिनः सम्बन्धिलक्षणस्य। ननु तयोः सम्बन्धसाकाङ्क्षत्वेऽपि द्वयंशस्य पुत्रवित्तरूपसम्बन्धिना अर्द्धस्य तु द्व्यंशरूपसम्बन्धिना अन्वयोऽस्त्वित्यत आह पुरुषेति। तथाच गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात् स्यादिति जैमिन्युक्तन्यायेन द्वयोर्विशेषणयोः परस्परं नान्वयसम्भव इति भावः। वित्तार्जनादिति पञ्चम्यन्तेन द्व्यंशरूपैकदेशस्य योऽन्वयः तदर्थोपादानस्य तदर्थद्व्यंशोपादानस्य अविवादात भवतोऽपि सम्मतत्वात् अर्द्धपदेनापि तदन्वयो युक्त इत्यर्थः द्व्यंशस्य तु पञ्चम्यन्तानुपस्थित्या तदन्वयो न युक्त इति शेषः। पञ्चम्यन्तत्वेनेति पाठे वित्तार्जनादित्यनन्तरम् इति षष्ठ्यन्तः तत्परामर्षणीयस्य उपादानेनान्वयः। आमत्तिबलात् पञ्चम्यन्तेन सह प्रथमम् अर्द्धस्यैवान्वयो न तु द्व्यंशस्य आसत्तिविलम्बादित्याह वित्तार्जनेति। अत्र चानन्वयिव्यवधानाभावस्यैव आसत्तिघटकतया हरपुत्रवित्तपदैर्व्यवहधानेऽपि नासत्त्यनुपपत्तिरिति ध्येयम्। न पुनरिति। तस्यानन्वयिना हर इत्यनेन व्यवधानात् पञ्चम्यश्रवणाच्चेति भावः। द्व्यंशेनान्वये तात्पर्य्याभावमाह स्वायत्त इति। अवाचकपदेति। एकांशत्वेनावाचकार्द्धपदेत्यर्थः। अन्याय्यत्वादिति। तथा च न तदन्वये तात्पर्य्यमिति भावः। द्व्यंशार्द्धयोर्विषमशिष्टतया विषयैक्ये विरोधात् व्यवस्थितविकल्पमाह तत्रेति।।६९-७१।।

**यद्वा विद्यादिगुणसम्पन्नस्य पितुरर्द्धहरत्वं विद्यादिनाऽपि ज्येष्ठस्यैवाधिकांशदर्शनात् विद्यादिशून्यस्य जनकतामात्रेण द्व्यंशित्वम्।।७२।।**

**तेन क्रमागतधनाद्वा पुत्रार्जितधनाद्वा भागद्वयं पिता स्वयं गृह्णीयात् अतोऽधिकमिच्छन्नपि नार्हतीति वचनार्थः। स्वार्जितधनात्तु यावदेव ग्रहीतुमिच्छति तावदेव गृह्णीयात्।।७३।।**

**पुत्राणान्तु पितामहधनात् विंशोद्धारं दत्त्वाऽदत्त्वैव वा विभजेत् स्वोपार्जितधनात् पुनर्गुणवत्त्वेन सम्मानार्थं, बहुकुटुम्बत्वेन वा भरणार्थम्, अयोग्यत्वेन वा कृपया, भक्तत्वेन वा प्रसन्नतया, अधिकदानेच्छुर्न्यूनाधिकविभागं कुर्वन् धर्मकारी पिता।।७४।।**

**तदाह याज्ञवल्क्यः।**

**न्यूनाधिकविभक्तानां धर्म्यः पितृकृतः स्मृतः। (याज्ञवल्क्य २।११७)**

**तथा बृहस्पतिः।**

**समन्यूनाधिका भागाः पित्रा येषां प्रकल्पिताः।**
**तथैव ते पालनीया विनेयास्ते स्युरन्यथा।।**

नारदश्च।

पित्रैव तु विभक्ता ये समन्यूनाधिकैर्धनैः।
तेषां स एव धर्म्यः स्यात् सर्वस्य हि पिता प्रभुः।।७५।।

(नारद १३।१५)

**सर्वधनप्रभुत्वस्य हेतुत्वात् पैतामहे च तदसम्भवात् न्यूनाधिकविभागः पितृकृतः पितृधन-विषय एवायं धर्म्यः। तथाच विष्णुः। पिता चेत् पुत्रान् विभजेत् तस्य स्वेच्छा स्वयमुपात्तेऽर्थे पैतामहे तु पितापुत्रयोस्तुल्यं स्वामित्वम्।।७६।।**

(विष्णु १७।१-२)

नन्वत्राप्यर्द्धपर्य्यवसाने द्व्यंशाभिधानमनर्थकमत आह यद्वेति। इदञ्च पितुर्गुणवत्त्वनिर्गुणत्वाभ्याम् अर्द्धहरत्वद्व्यंशहरत्वाभिधानम् अंशिन्यनेकस्मिन् पुत्रे वेदितव्यम् एकस्मिंस्त्वर्जकपुत्रे अंशिनि गुणवति पितरि द्व्यंशित्वं निर्गुणेऽर्द्धमिति वैपरीत्यं नैयायिकं सुधीभिर्भाव्यम्। दत्त्वादत्त्वैव वेति। ज्येष्ठं वा. श्रेष्ठभागेन सर्वे वा स्युः समांशिन इति वक्ष्यमाणवचनादित्याशयः। पितामहधने पितुरिच्छया न्यूनाधिकदाने निरस्ते पितुः स्वार्जितमात्रपर्य्यवसायिवक्ष्यमाणन्यूनाधिकविभागकारणमाह स्वोपार्जित-धनादिति। धर्मकारीति। तथाच उक्तान्यतमकारणं विना स्वार्जितधने पुत्राणां विषमभागे न धर्म्य इति भावः। विनेया दण्ड्याः पितृधनविषय एवेति। स्वार्जितधनविषय एव इत्यर्थः। पैतामह इति। यद्यपि पितामहसर्वधनप्रभुत्वमपि पितुरक्षतमेव तथापि प्रभुत्वमिह न स्वामित्वं किन्तु यथेष्टविनियोग्यत्वं, सर्वस्मिन् पैतामहे पितुर्न तथात्वमिति भावः।।७४-७६।।

**ननु विभागश्चेत् पिता कुर्य्यादिच्छया विभजेत् सुतात्। ज्येष्ठं वा श्रेष्ठभागेन सर्वे वा स्युः समांशिन इति (याज्ञवल्क्य २।११५) याज्ञवल्क्यवचनात् उद्धाररूपश्रेष्ठभागावगतेः कथं ततो न्यूनाधिकत्वमभिधीयते। उच्यते। उपरते पितरि भ्रातृभिरपि विभागे क्रियमाणे विंशोद्धार-रूपश्रेष्ठांशस्य सिद्धत्वाद्वचनानर्थक्यात् न तदर्थत्वम्।।७७।।**

**अथ विनाप्युद्धारं समांशतायाः पितृकृताया धर्म्यत्वार्थं वचनमुच्यते तन्न न्यूनत्वमेव तर्हि पितृकृतं धर्म्यं स्यादित्यधिकपदमनर्थकं स्यात्।।७८।।**

**किञ्च उद्धाराभिप्रायेण समन्यूनाधिकत्ववर्णने इच्छया विभजेदित्यनर्थकं पदम् एतदित-रपदत्रयेणैव वक्तव्यस्याभिहितत्वात् अस्मन्मते तु इच्छया विभजेदिति स्वोपात्तधनविषयं श्रेष्ठां-शतासमानांशतयोस्तु पैतामहधनगोचरत्वमिति न किमप्यनर्थकम्।।७९।।**

याज्ञवल्क्यीयं न्यूनाधिकविभागवचनं विभागश्चेत् पिता कुर्य्यादिति वचनञ्च स्वार्जिते पितामहधने वा सामान्यत एव सोद्धाररूपश्रेष्ठसमभागतेश्च। कथमिति। तदीयैतद्वचनेनैव तस्य प्राप्तत्वात् विधाना-नुपपत्तिरिति भावः। यत एव वैयर्थ्यं स्यादत एव न तदर्थत्वमित्याह उच्यत इति। वचनानर्थक्यादिति। भ्रातृकृतविभागापेक्षया पितृकृतविशेषाभावेन न्यूनाधिकविभक्तानामिति वचनानर्थक्यादिति। तथाच तद्वचनं न सोद्धारानुद्धाररूपन्यूनाधिकभागबोधकं किन्तु पितुरिच्छाकृतस्यैवान्यस्य न्यूनाधिकविभागस्यैव बोधकमिति भावः। प्रयोजनान्तरप्रदर्शनेन वचनस्यार्थवत्त्वमाशङ्कते अथेति। धर्म्यत्वार्थमिति। तद्वचने धर्म्य इत्यनेन धर्म्यत्वप्रतिपादनादिति भावः। न्यूनत्वमेवेति। भ्रातृकृतसोद्धारापेक्षया पितृकृत-समभागस्यैव न्यूनत्वादिति भावः। अधिकपदमिति। सोद्धाररूपाधिकभागस्य भ्रातृकृतस्यापि धर्म्यत्वेन पितृकृतविषयेऽधिकपदोपादानवैयर्थ्यादिति भावः। चूड़ामणिस्तु अधिकपदमिति ज्येष्ठस्य विंश उद्धार इत्यनेन सामान्यत एव प्राप्तेरनर्थकमित्यर्थ इत्याह। अथ पितृकृतसमभाग एव सोद्धारभागापेक्षया

न्यून: कनिष्ठानामर्थादधिको भवतीति स एवैको भागो न्यूनाधिकपदाभ्यामुच्यते न पृथगिति नाधिकपद-वैयर्थ्यमित्यत आह किञ्चेति केचित्। वस्तुतो ननु समभागमात्राभिधाने पितृकृतत्वनिमित्तविशेषाभिधानेन सामान्यप्राप्ताधिकांशबाधापत्तिरतोऽधिकपदं सोद्धारभागप्रापकतया सार्थकं वाच्यं तथा सति ज्येष्ठं वा श्रेष्ठभागेनेत्युक्तयाज्ञवल्क्यवचनान्तरं व्यर्थं न्यूनाधिकवचनेनैव तदुक्तद्विविधभागावगतेरतो वचनमेतत् विषयान्तराभिप्रायकतया सार्थकयति किञ्चेति। अनर्थकमिति। भागद्वैविध्यमात्राभिधानेन तत्रेच्छाया अप्रयोजकत्वादिति भाव:। पदं वचनचतुर्थांश:। एतदितरपरपदत्रयेणैवेति। विभागश्चेत् पिता कुर्य्यादिति ज्येष्ठं वा श्रेष्ठभागेनेत्यादि पादत्रयेण वक्तव्यस्य भागद्वयरूपस्य। कथं तर्हि वचनस्यार्थवत्त्वम् अत आह अस्मदिति। स्वोपात्तविषयमिति। पितामहधनपरत्वे वैयर्थ्यापातादिति भाव:। न किमपीति न्यूनाधिकवचनस्य स्वोपात्तविषयतया, विभागश्चेदित्यस्य च पितामहधनगोचरतया वचनयोरर्थवत्त्वा-दिति भाव:। इदञ्च न समीचीनमुक्तम् इच्छया विभजेदित्यस्य स्वार्जितविषयत्वेनैव तत्र न्यूनाधिकविभागे सिद्धे न्यूनाधिकवचनवैयर्थ्यतादवस्थ्यात् धर्म्यत्वार्थं तत्सार्थक्यन्तु पितामहादिधनसामान्यविषयत्व-पक्षेऽपि समानमिति भाव्यम्।।७८-७९।।

**किञ्च। पितर्य्युपरतेऽपि द्विप्रकारो विभागो बृहस्पतिनोक्तः। यथा।**

**द्विप्रकारो विभागस्तु दायादानां प्रकीर्तितः।**
**वयोज्येष्ठक्रमेणैकः समापरांशकल्पना।।**

**ज्येष्ठक्रमेणेत्युद्धारं दर्शयति तथा समांशता परेति भ्रातॄणामपि परस्परविभागस्य द्विप्राक-रत्वात् पितृकृतस्य विशेषो न स्यात्।।८०।।**

**तथा नारदः।**

**पितैव वा स्वयं पुत्रान् विभजेद्वयसि स्थितः।**
**ज्येष्ठं वा श्रेष्ठभागेन यथा वास्य मतिर्भवेत्।।८१।।**

**(नारद १३।४)**

**ज्येष्ठस्य श्रेष्ठभागमभिधाय पुनर्यथा वास्य मतिर्भवेदित्यनेन यादृशे न्यूनाधिकविभागे पितुः पूर्वोक्तकारणात् कर्त्तव्यतामतिर्भवेदिति पृथगभिधानात् श्रेष्ठभागादन्य एवायं न्यूनाधिक-विभागः प्रतीयते।।८२।।**

नन्विच्छया विभजेदिति स्वग्राह्यांशविषयकमेव वाच्यं स्वल्पेन वा विभज्य भूयिष्ठमादाय वसे-दित्येकमूलकत्वात् तत्कथमनर्थकमत आह किञ्चेति। विशेषो न स्यादिति। तथाच वचनवैयर्थ्य-तादवस्थ्यात् न तथार्थसम्भव इति भाव:। यद्यप्ययं दोष उच्यत इत्यादिना प्रागेवोक्तस्तथापि तस्य दार्ढ्यप्रतिपादनार्थं पुनरभिधानमिति बोध्यम्। ननु न्यूनाधिकवचनस्य सोद्धारानुद्धारभागद्वयनियामकत्वे पित्रा येषामिति प्रतीकं व्यर्थं स्यात् भ्रातृविभागेऽपि द्वैविध्यसत्त्वात् अतो न्यूनाधिकविभाग: सोद्धारानु-द्धाराभ्यामन्य एवेत्यत्र प्रमाणान्तरमाह तथेति। यादृश इति। एतस्य समांशमात्राभिधायकत्वे विभजे-द्वयसि स्थित इति पूर्वप्रतीकेनैव समं स्यादश्रुतत्वात् विशेषस्येति न्यायात् समांशप्राप्त्या वैयर्थ्यं स्यादिति भाव:।।८०-८२।।

**यत् पुनर्नारदवचनम्।**

**व्याधितः कुपितश्चैव विषयासक्तचेतनः।**
**अयथाशास्त्रकारी च न विभागे पिता प्रभुः।।**

**इति (नारद १३।१६) तद्व्याधिना आकुलचित्ततया कस्मिंश्चित् पुत्रे क्रोधाद्वा सुभगा**

**पुत्रस्नेहाद्वा अयथाशास्त्रं विभजति तद्विषयं पूर्वोक्तकारणात्तु शास्त्रीय एव विषमविभागः।।८३।।**

**यथा कात्यायनः।**

**जीवद्विभागे तु पिता नैकं पुत्रं विशेषयेत्।**
**निर्भाजयेन्न चैवेकमकस्मात् कारणं विना।।८४।।**

**नैकमधिकदानेन विशेषयेत् न च निर्भाजयेत् ना उद्धारादिविशेषो हि बहूनामेव नैकस्य एकस्यापि च पुत्रस्य कारणं विना विशेषो न कार्य्यः कारणवशात्तु कार्य्य एव एकस्यापीत्यवगतेर्नोद्धारापेक्षो विशेषः किन्तु पितुरिच्छाकृत एवेति यथोक्त एवार्थः।।८५।।**

**यदि पुनः पितरि जीवति पुत्रा एव विभगमर्थयन्ते तदा विषमविभागः पित्रा न दातव्यः। तदाह मनुः।**

**भ्रातृणामविभक्तानां यद्युत्थानं भवेत् सह।**
**न तत्र भागं विषमं पिता दद्यात् कथञ्चन्।।८६।।**

**(मनु ९।२१५)**

**उद्धारस्तु तदा पित्रा दातव्य एव तस्य विषमविभागरूपत्वाभावात् न्यूनाधिकविभागस्यैव निषेधात्।।८७।।**

**इति पितृकृतो विभागः।।८८।।**

आकुलचित्ततया कर्त्तव्याकर्त्तव्यविवेचनशून्यतया। पूर्वोक्तकारणात् भक्तत्वबहुपोष्यत्वादेः। कारणादिति यदुक्तं तत्र प्रमाणमाह यथेति। कारणं विना पूर्वोक्तकारणं विना अन्यस्यासम्भवात् नैकं पुत्रं विशेषयेदित्यन्वयः। निर्भाजयेदित्यत्र कारणं विना पातित्यादिकं विना इत्यर्थः। ननु कारणं विना इत्यस्य गुणं विनेत्येवार्थः तथाच कारणं गुणं विना न विशेषयेत् नोद्धारादिना विशेषयेदिति वचनार्थः तत् कथं पूर्वोक्तकारणात् विशेषं ब्रूषे इत्यत आह उद्धारादिविशेषो हीति। बहूनामेवेति। विंश तदर्द्धतत्तुरीयभागरूपाणामुद्धाराणां बहुष्वेव उद्दिष्टत्वादिति भावः। नैकस्येति। तथाच एकस्य विशेषो नतु गुणकृतोद्धाररूपः उद्धारस्य सर्वपुत्रसाधारणतया एकपुत्रस्य विशेषत्वासम्भवात् किन्तु कारणान्तरकृतस्ततोऽन्य एवेति भावः। यद्यपि ज्येष्ठस्य सगुणत्वे इतरेषाञ्च निर्गुणत्वे एकस्याप्युद्धार-कृतविशेषः सम्भवत्येव तथापि स विशेषो न वचनार्थः पित्रुपादानवैयर्थ्यात् भ्रातृविभागेऽपि तथाविध-विशेषसम्भवादिति बोध्यम्। ननु एकग्रहणात् कारणं विना बहूनां विशेषः स्यादित्याशङ्क्याह एकस्यापीति। न्यायादपिरध्याहर्त्तव्य इति भावः। इच्छाकृत एवेति। स्वार्जितमात्रे पूर्वोक्तकारणसहकारेण इच्छाकृत एवेत्यर्थः। उत्थानं विभागोद्यमः। उत्थानमर्जितं सह युगपत् तथा च सर्वेषामर्जिते न विषमविभाग इति कुल्लूकभट्टव्याख्यानं तदसत्। तत्र विषमविभागाभावस्य समविभागस्य च न्यायत एव प्राप्तेर्वचनानर्थक्यात्। विषमविभागरूपत्वाभावादिति। एवं समुद्धृतोद्धारे समानंशान् प्रकल्प-येदित्यादिना अविभक्तद्रव्यात् पृथक्कृतस्यैवोद्धारतया तस्य भागाभावादिति भावः। इति पितृ-कृतविभागः।।८३-८८।।



# तृतीयाध्यायः

## प्रथम परिच्छेदः

**इदानीमुपरते पितरि भ्रातृणां विभागः कथ्यते। सोऽपि च मातरि जीवन्त्यां सत्यपि पित्रुपरमाद्धनस्वामित्वे धर्म्यो न विभागः सोदराणां भवतीति कथ्यते ऊर्द्धं पितुश्च मातुश्चेति (मनु ९।१०४) उभयोरुपरमे सोदराणां पैतृकधनविभागस्य ज्ञापनात्।।१।।**

**न पुनर्मातुरूर्ध्वं मातृधनविभागार्थं पैतृकपदात् पितृधनमात्रस्यैव विभागवगतेः पैतृकपदस्यैकशेषकल्पनायां प्रमाणाभावात्।।२।।**

**किञ्च जनन्यां संस्थितायामित्यनेनैव (मनु ९।१९२) मातरि मृतायां तदीयधनविभागस्य मनुना वक्ष्यमाणत्वात् ऊर्ध्वं मातुरिति पुनरुक्तं स्यात्।।३।।**

**यथा याज्ञवल्क्यः।।**

**विभजेरन् सुताः पित्रोरुर्ध्वमृक्थमृणं समम्।**
**मातुर्दुहितरः शेषमृणात्ताभ्य ऋतेऽन्वयः।।४।।**

**(याज्ञवल्क्य २।११८)**

**मातृधनविभागस्य दुहितॄणां सद्भावे अनधिकारः असद्भावे चान्वयपदेन पुत्राणामधिकार इत्युत्तरार्द्धेनैव प्रतिपादनात् पूर्वार्द्धे पित्रोरिति पितृधनविषयमेव अन्यथा पुनरुक्तत्वापत्तेः।।५।।**

पितृकृतविभागं निरूप्य भ्रातृकृतविभागनिरूपणार्थं सम्बोध्यावधानाय प्रतिजानीते इदानीमिति। पितृकृतविभागनिरूपणानन्तर मित्यर्थः। सोऽपि भ्रातृकृतविभागोऽपि। धर्म्यो नेति। तथाच विभागः सिध्यत्येव किन्तु स धर्म्यो नेति भावः। अत एवोक्तं सत्यपीत्यादि विभागाधिकारज्ञापनार्थम्। नन्वेवं पितृसत्वे इव मातृसत्वेऽपि विभागासिद्धेरपि वचनार्थत्वसम्भवे धर्म्यत्वेन किमित्यदृष्टकल्पना-गौरवमङ्गीकरोषि इति चेन्न, तवापि तदानीं तेषां धनस्वामित्वात् मातृसत्वे विभागाभावस्य वाचनि-कत्वेनादृष्टकल्पनायास्तुल्यत्वात्, विनिगमना तु तेषां पितृसत्वे अस्वामित्वात् युक्ता विभागासिद्धिः, भातृसत्वे तु तेषां स्वस्वधनस्वामित्वात् विभागे बाधकाभाव इति न्याय एवेति विभाव्यम्। ज्ञापनात् मनुनेति शेषः। ननु मातृरूर्ध्वमित्यस्य पितृधनविषयत्वेऽदृष्टकल्पनागौरवमेव एकशेषकल्पनायां मानमत आह किञ्चेति। पुनरूक्तमिति। द्वयोरपि मनुवचनत्वादिति भावः। उक्तार्थे याज्ञवल्क्यवचनं स्फुटं प्रमाणयति यथेति। अनधिकार इति। पुत्राणमिति शेषः। पुनरूक्तत्वेति। पूर्वार्द्धे पित्रोरित्य-त्रैकशेषकल्पनया मातृधनविभागे मातुरूर्ध्वमिति प्राप्तेः पुनर्मातुर्धनमित्यस्य पुनरूक्तत्वापत्तेरित्यर्थः। इदमुपलक्षणाम् उत्तरार्द्धे दुहित्रभावे सुतस्याधिकारप्रतिपादनात् विरोधोऽपि द्रष्टव्यः। अथ पूवार्द्धं मातुरयौतकधनविषयम् उत्तरार्द्धम् यौतकधनविषयम् अत्र प्रथमं दुहित्रधिकारस्य वक्ष्यमाणत्वात् अतो न पौनरूक्त्यं न वा विरोध इति चेन्न, अयौतकस्त्रीधने पुत्रकुमार्य्योर्युगपदधिकारस्यैव वक्तमाणत्वेन केवलपुत्राधिकारप्रतिपादने विरोधतादवस्थ्यात्। न च सुता इत्यत्रापयेकशेषकल्पनया कन्यापुत्रयो-र्युगपदधिकार प्राप्तिरिति वाच्यं, पितृधनसमभिव्याहारात् केवलपुत्राधिकारस्यैवावगतेः, अन्यथा पितृधनेऽपि तयोर्युगपदधिकारापत्तिः।।१-५।।

**मातापित्रोरूपरमे भ्रातरो विभजेरन्निति वदता याज्ञवल्क्येन उभयोरूपरमानन्तरकालस्य विभागार्थतया विधानात् साहित्यं विवक्षितम्।।६।।**

**तथाच शङ्खलिखितौ। रिक्थमूलं हि कुटुम्बमखतन्त्राः पितृमन्तो मातुरप्येवमस्थितायाः। मातुरपि सकाशाद स्वतन्त्रा विभागानधिकारिण इत्याहतुः।।७।।**

**सुव्यक्तमाह व्यासः।**

**भ्रातृणां जीवतोः पित्रोः सहवासो विधीयते।**
**तदभावे विभक्तानां धर्मस्तेषां विवर्द्धते।।८।।**

**सहवासविधानमुखेन पृथग्भावनिषेधात् पितृमातृजीवनवतश्च विभागनिषेधात् जीवतोरिति साहित्यमविवक्षितम् अत एकस्मिन्नपि जीवति विभागो न धर्म्यः किन्तु उभयोरभावे।।९।।**

**यथाह बृहस्पतिः।**

**पित्रोरभावे पुत्राणां विभागः सम्प्रदर्शितः।**
**मातुर्निवृते रजसि जीवतोरपि शस्यते।।१०।।**

**निवृत्तरजस्कायां मातरि जीवन्त्यां विभागस्य मातृधनगोचरत्वानुपपत्तेः उभयाभावोक्त-विभागस्यैव जीवतोरपीत्यपि कारेण शस्तत्वकीर्त्तनात् उभयोरभावे भ्रातृविभागः पितृधनगोचर एवावधार्य्यते।।११।।**

**अतएव जीवन्त्यां मातरि मातृप्रधानकं विभागं निर्दिशति व्यासः।**

**समानजातिसङ्ख्या ये जातास्त्वेकेन सूनवः।**
**विभिन्नमातृकास्तेषां मातृभागः प्रशस्यते ॥**

**तथा बृहस्पतिः।**

**यद्येकजाता बहवः समाना जातिसङ्ख्यया।**
**सापत्नास्तैर्विभक्तव्यं मातृभागेन धर्मतः।।१२।।**

**पुत्राणां जातिसङ्ख्यासाम्येन विभागे विशेषाभावात् मातुरेवायं विभागो न पुत्राणामित्युद्दिश्य विभागः कर्त्तव्य; तेनेतरमातृधन इवात्रापि पुत्राणां मातरि जीवन्त्यां न परस्परविभागे स्वातन्त्र्यं किन्तु मातुरनुमत्यैव परं विभागो धर्म्यः।।१३।।**

साहित्यमिति। पितृमात्रुपरमयोः साहित्यमित्यर्थः विवक्षितमिति। तद्वचनस्य चकारेण द्वन्द-समानार्थकेन साहित्यावगमादिति भावः। अत्र च साहित्यं विभागक्रियापेक्षया, साहित्यन्तु तुल्यरूपाणां परस्परसापेक्षाणामेकक्रियान्वयित्वं तत्र तुल्यरूपाणां विशेषणविशेष्यभावानापन्नानां तेन सपत्नीको धर्ममाचरेदित्यत्र साहित्यव्युदासः पत्युर्विशेषणत्वेनैव पत्न्या आचारक्रियान्वयात् परस्परसापेक्षाणां परस्परनैरपेक्षेण तत्क्रियानन्वयिनां युगपत्तत्क्रियान्वयिनामिति फलितार्थः तेन धवखदिरौ च्छिनत्तीत्यत्र एकस्यामपि छिदाक्रियाव्यक्तौ क्रमेणान्वितयोर्धवखदिरयोः साहित्यव्युदासः युगपदन्वितयोरेव साहित्य-प्रतीतेरिति। अत्र संवादं दर्शयति तथा चेति। ऋक्थेति। हि हेतौ यतः ऋक्थमूलं गार्हस्थ्यम् अतो-ऽस्वतन्त्राः व्ययानधिकारिणः इतरथा सर्वैरेव स्वेच्छया धनव्यये कृते धनविलयापत्त्या कुटुम्बरक्षा न स्यादिति भावः। अत्रैवं शब्देन मातुरवस्थाने अस्वातन्त्र्यस्य स्फुटमेवाभिधानमिति भावः। नन्वस्य वचनस्य भार्य्यापुत्रश्चेत्यादिनैकमूलत्वात् स्वार्जितधने चस्वातन्त्र्यपरत्वमस्तु दायभागप्रकरणास्नानात् अतएव इदमस्पष्टमेव अतः स्पष्टमाह व्यास इति। विधानमुखेन प्रतिपादनमुखेन। सहवासस्य जन्मप्रभृतिप्राप्ततया तद्विधानासम्भवात्। पृथग्भावेति। पृथग्भावनिषेधस्यैव सहवास एवेति नियमेन परिसंख्ययां वा वचनार्थत्वादिति भावः। अत्र जीवतोरिति द्विवचनावगतसाहित्यस्य विवक्षितत्वे एकमात्रजीवनेन सहवासस्याप्राप्त्या मातरि जीवन्त्यामपि विभागः स्यात् मातरि मृतायां पितृसत्त्वेऽपि

विभाग आपद्येत अतस्तदविवक्षामाह पित्रेत्यादिना, जीवनवत इत्यनेनाविवक्षितत्वबीजम् उद्देश्यविशेषणत्वं साहित्यस्य प्रतिपादितं जीवत्पितृमातृकमुद्दिश्य विभागाभावस्य विधेयत्वात् यद्यपि पितृसत्त्वेऽस्वामित्वेनैव विभागाप्राप्तेः पित्रुपादानवैयर्थ्यं तथापि दृष्टान्तार्थं तदुपादानमत एव प्रागुक्त मातुरप्येवमस्थितायाया इत्यत्र एवं शब्दः यथा पितरि जीवति विभागास्वातन्त्र्यं तथा मातरि जीवन्त्यामपीति दृष्टान्तार्थकः प्रयुक्त इति। उभयोरभावे अन्यतराभावे। एवञ्च जीवतोः साहित्याविवक्षायामुपरमसाहित्यं स्फुटमुक्तमिति भावः। मातृधनगोचरत्वानुपपत्तेरित्यस्य मातुर्निर्धनत्वापत्तेरिति शेषः। उभयाभावोक्तेति। उपस्थितविभागानुषङ्गेणैव शस्तत्वान्वयसम्भवे विभागान्तराध्याहारकल्पनायां गौरवादिति भावः। पितृधनगोचर एवेति पितामहधनस्यापि पितुः स्वत्ववत्त्वात् पितृधनत्वेन तस्यापि संग्रहः। एवकारेण मातृधनमात्रव्यवच्छेदः तेनास्य वचनस्य न प्रागुक्तपितामहधनगोचरत्वविरोधः। मातृप्रधानकं मातृसम्बन्धित्वेन निर्देशपूर्वकम् अत्रापि पितृधने स्वस्वत्वास्पदीभूतेऽपीत्यर्थः।।७-१३।।

**अतो यद्गौतमादिभिरुक्तं विभागे तु धर्मवृद्धिरित्यादि (गौतम २८।४) तन्मातुरुपरमे वेदितव्यम्।।१४।।**

**तत्र यद्यविभक्ता एव स्थातुमिच्छन्ति तदा ज्येष्ठ एव योगक्षेमशक्तः सर्वं गृह्णीयात् इतरे पितरमिव तमुपजीवेयुः। यथा मनुः।**

**ज्येष्ठ एव तु गृह्णीयात् पित्र्यं धनमशेषतः।**
**शेषास्तमुपजीवेयुर्यथैव पितरं तथा।।**

**(मनु ९।१०५)**

**तथा गौतमः। सर्वस्वं वा पूर्वजस्य स इतरान् विभृयात् पितृवत् (गौतम २८।३) वाशब्दात् पृथग्वा भवेयुः सहवा वसेयुः। सहवासश्च सर्वेषामिच्छात एव। यथा नारदः।**

**बिभृयाद्वेच्छतः सर्वान् ज्येष्ठो भ्राता यथा पिता।**
**भ्राता शक्तः कनिष्ठो वा शक्त्यपेक्षा कुले स्थितिः।।**

**(नारद १३।५)**

**शक्तः सन् कनिष्ठोऽपि सर्वान् बिभृयात् मध्यमोऽत्र दण्डापूपन्यायात् सिद्धः।।१५।।**

**विभागस्त्वेकस्यापीच्छया भवतीत्युक्तं प्राक्।।१६।।**

**अतएव विभागं प्रक्रम्याह कात्यायनः।**
**अप्राप्तव्यवहाराणां धनं व्ययविवर्जितम्।।**
**न्यसेयुर्बन्धुमित्रेषु प्रोषितानां तथैव च।**
**तथा रक्ष्यं बालधनमाव्यवहारप्राप्तेरिति वचनम्।।१७।।**

**अयञ्च पुत्राणां विभागः पुत्रपौत्रप्रपौत्राणां समानो नात्रोत्पत्तिक्रमेणाधिकारक्रमः पुत्रादीनां त्रयाणामेव पार्वणे तत्पिण्डतद्भोग्यपिण्डद्वयदानाविशेषात्। अतएव देवलः।**

**पिता पितामहश्चैव तथैव प्रपितामहः।**
**उपासते सुतं जातं शकुन्ता इव पिप्पलम्।।**
**मधुमांसैश्च शाकैश्च पयसा पायसेन च।**
**एष नो दास्यति श्राद्धं वर्षासु च मघासु च।।**

**तथा शङ्खलिखितयमाः।**

पिता पितामहश्चैव तथैव प्रपितामहः।
जातं पुत्रं प्रशंसन्ति पिप्पलं शकुना इव।।
मधुमांसेन खड्गेन पयसा पायसेन वा।
एष दास्यति नस्तृप्तिं वर्षासु च मघासु च।।

**प्रपितामहग्रहणात् पुत्रपदं प्रपौत्रपर्य्यन्तपरम्। तदनेन प्रपौत्रपर्य्यन्तस्य श्राद्धदानेन प्रपितामहपर्य्यन्तोपकारकत्वात् तुल्यो दायाधिकारः।।१८।।**

**अतएव जीवत्पितृकयोः पौत्रप्रपौत्रयोरनधिकारः पार्वणानधिकारितया पिण्डाप्रदातृत्वात्।।१९।।**

**पित्रोरुपरमे च भ्रातृणां पितृकृतो विशेषः परं निवर्त्तते अन्यत् तु सर्वमेव प्रत्येतव्यम्।।२०।।**

उक्तं प्रागिति। पितृधनविभागप्रकरणे एकस्यापि स्वधने स्वाम्यादित्यादिनेत्यर्थः। अप्राप्तव्यवहारा बालकाः पञ्चदशवर्षानधिकवयस्काः। प्रोषितानामिति अत्र तदनुमतिं विना विभागः स्फुट एवेति भावः। यत एव प्रपौत्रपर्य्यन्तानां तुल्योपकारतया अतएव प्रपितामहपर्य्यन्तानां तुल्योपासनेत्याह अत एवेति। तृप्तिं दास्यति जनयिष्यति। प्रपौत्रपर्य्यन्तपरमिति। पार्वणकर्त्तृसपिण्डत्वेन लक्षणयेत्यर्थः। अतएव धनाधिकारस्योपकारनिबन्धनत्वादेव पितृभागस्यैवोत्तरकालं तद्गामित्वात् न निरंशतेति बोध्यम्। पिण्डाप्रदातृत्वादिति। अत्र च पिण्डदानयोग्यतैव विवक्षिता न तु तदुपधानं तथात्वे देवादकृतपार्वणस्य पुत्रादेरनधिकारापत्तेः स्वरूपयोग्यता तु पौत्रादेर्मृतपितृकपौत्रत्वादिनैव तथैव अविभक्ते मृते पुत्रे तत् सुतं रिक्थभागिनमित्यादि शास्त्रेणावगमात् तेन जीवत्पितृकपौत्रादेर्न स्वरूपयोग्यतेति बोध्यम्।।१४-२०।।

**यदा चैकः पुत्रोऽस्ति अपरस्य पुत्रस्य पुत्राः सन्ति तदा तस्यैको भागः अपरश्च बहूनां नप्तृणां स्वपित्रधीनजन्ममूलत्वाद्धनसम्बन्धस्य यावत्येव धने तस्य स्वामित्वार्हत्वं तावत्येव तेषामपि।।२१।।**

**यच्च अनेकपितृकाणां तु पितृतो भागकल्पनेति (याज्ञवल्क्य २।१२१) वचनं तस्य नायं विषयः पितृव्यपितुरेव तत् सर्वं धनमिति पितृव्यस्यैव सर्वं स्यात् न तद्भ्रातुः पुत्राणाम्। पितृतो भागकल्पने पितापुत्रविभागवद्भागकल्पने पितुर्भागद्वयसम्बन्धात् पितृव्यस्य भागद्वयं भवेत् तद्भ्रातुः पुत्राणां त्वेकैको भागः स्यात् तदा च शिष्टाचारविरोधः स्यात्।।२२।।**

**अस्य पुनरेष विषयो यत्रैकस्य भ्रातुरल्पसंख्यकाः पुत्राः सन्ति अपरस्य बहुसंख्यकास्तत्र पितृतो भागकल्पनेति।।२३।।**

उपकाराविशेषात् बहूनां मृतपितृकपौत्राणां प्रत्येकं पितृतुल्यभागमाशङ्क्याह यदेति। तावत्येवेति। तथा च रत्नाकरे कात्यायनः। अविभक्ते मृते पुत्रे तत् सुतं रिक्थभागिनम्। कुर्वीत जीवनं येन लब्धं नैव पितामहात्। लभेतांशं स पित्र्यन्तु पितृव्यात् तस्य वा सुतात्। स एवांशस्तु सर्वेषां भ्रातृणां न्यायतो भवेत्। लभेत् तत् सुतो वापि निवृत्तिः परतो भवेदिति। अत्र न्यायत इत्यस्य स्वपित्रधीनजन्ममूलत्वादित्यर्थः। अतएव पार्वणपिण्डदातृत्वेऽपि दौहित्रस्य नाधिकारः, मातुलादिसत्त्वे तन्मातुरेवानधिकारात्, प्रपौत्रपुत्रस्य तु पार्वणपिण्डदातृत्वाभावात् नाधिकारः। अत्रैव विषये यत् केनचित् वचनान्तरं साधकतया उपन्यस्तं तददूषयितुमेतद्वचनमाह यच्चेति। अनेकपितृकाणामिति। अनेके पितरो येषामिति व्युत्पत्तेरनेकभ्रातृणामनेके पुत्राः सूचिताः। अयं पितृव्यभ्रातृपुत्रविभागः। पितृतो भागकल्प-

नेत्यस्य किं पित्रंश एव पुत्रस्य भाग इत्यर्थः, पिता पुत्रवत् भागो वार्थः। तत्र नाद्य इत्याह पितृव्य-पितुरेवेति। द्वितीयमाशङ्क्य निषेधति पितृत इति। स्वमतमाह अस्य पुनरिति। यत्रेति। तथाच विभिन्नपितृकाणां पौत्राणां पितामहधनविभागे स्वस्वपित्रनुसारेण भागकल्पनेति वचनार्थ इति भावः। पुत्रा इत्युपलक्षणं पौत्रा अपि बोध्याः।।२१-२३।।



# तृतीयाध्यायः

## द्वितीय परिच्छेदः

**इदानीं सवर्णभ्रातृणां विभागो विंशोद्धारादिपूर्वको वा सम एव वेति विकल्पः।।२४।।**

**उद्धारमन्तरेणापि समविभागमाह पितरीत्यनुवृत्तौ हारीतः। समानतो मृते रिक्थविभागः। तथोशना।**

**वर्णानामानुलोम्यानां विभागोऽयं प्रदर्शितः।**
**समत्वेनैकजातानां विभागस्तु विधीयते।।**

**तथा च पैठीनसिः।**

**पैतृके विभज्यमाने दायाद्ये समो विभागः।**

**तथा याज्ञवल्क्यः।**

**विभजेरन् सुतापित्रोरूर्ध्वमृक्थमृणं समम्।।**

**(याज्ञवल्क्य २।११८)**

**अतः सोद्धारानुद्धारभागयोर्विकल्पः।।२५।।**

**न च केवलसमविभागस्यापि शास्त्रीयत्वान्नित्यवत्तस्यैवानुष्ठानं स्यादिति वाच्यं, भक्त्यतिशयेन भ्रातृणामुद्धारानुमतेरपि सम्भवाद्विभागाविभागवद्विकल्पः।।२६।।**

**अतएवाद्यतनानां भक्त्यतिशयाभावात् समभाग एव लोके दृश्यते उद्धारार्हज्येष्ठाभावाच्च।।२७।।**

**यस्तु स्वयोग्यतामात्रपरामर्षात् पितृपितामहादिधनविभागे निस्पृहः, स किञ्चिदेव तण्डुलप्रस्थमपि दत्त्वा तत्पुत्रादेः कालान्तरीयदुरन्ततानिरासार्थं विभजनीयः।**

**तदाह मनुः।**

**भ्रातृणां यस्तु नेहेत धनं शक्तः स्वकर्मणा।**
**स निर्भाज्यः स्वकादंशात् किञ्चिद्दत्त्वोपजीवनम्।।**

**(मनु ९।२०७)**

**तथा याज्ञवल्क्यः।**

**शक्तस्यानीहमानस्य किञ्चिद्दत्त्वा पृथक्क्रिया।।२८।।**

**(याज्ञवल्क्य २।११७)**

इदानीं कालविशेषविशेषितभ्रातृविभागनिरूपणानन्तरम्। विकल्पो द्विप्रकारो निरूप्यत इति शेषः। तत्र सोद्धारः ज्येष्ठस्य विंश उद्धार इत्यादिना प्रागेवोक्तः सम्प्रति सम साधयति उद्धारमन्तरेणापीति। समानतः समत्वेन तृतीया विशेषणे। आनुलोम्यानाम् अनुलोमजातानां ब्राह्मणादेः क्षत्रियादिपुत्राणामित्यर्थः। एकजातानामेकजातीयमातृजातानामित्यर्थः। दायादस्येदं दायाद्यं तस्मिन्

दायाद्ये विभागोंऽशः सम इत्यर्थः, विभागो विभज्यमानदायः समान इति वार्थः। अतो विभागद्वैविध्यतः। विकल्पो व्यवस्थितः न त्वैच्छिकः विषमशिष्टत्वात्। व्यवस्थित्वं व्यवस्थापयितुमाशङ्कते न चेति। नित्यवदिति। नियतमित्यर्थः समभागस्यापि शास्त्रीयत्वे सोद्धारे बलवद्द्वेषादिति भावः। अद्यतनानामिति कनिष्ठानामिति शेषः। यत्र चाद्यगर्भसम्भवरूपज्येष्ठाभावस्तत्रापि समो विभाग इत्यवधेयम्। ननु जन्मविद्यागुणज्येष्ठ इत्यनेन गुणस्यैवाधिकांशप्रयोजकत्वमुक्तं न तु भक्त्यतिशयस्यापि प्रमाणाभावादत आह उद्धाराहं इति। वेदविद्यावैदिककर्मानुष्ठानकनिष्ठावञ्चनादिगुणवत एव उद्धारार्हतया कलौ तादृशज्येष्ठस्य प्रायेणासत्त्वादिति भावः, तेन विकल्पोऽपि गुणतदभावाभ्यां व्यवस्थित एवेति द्रष्टव्यम्। स्वयोग्यतामात्रपरामर्षात् स्वयोग्यताबलात्। किञ्चिदिति। किञ्चिदगृहीत्वा निवृत्तिस्तस्यान्यत्रोपेक्षाव्यञ्जिका इत्यतस्तदुपादानम्। भ्रातृणामिति। भ्रातृणां विभागे क्रियमाणे यस्तु जनः स्वकर्मणा शक्तश्चेत् पितृधनं नेहेत न चेष्टत इत्यर्थः। एवमेव मिताक्षराकृच्छूलपाणिहलायुधप्रभृतयः। प्रकाशकारादयस्तु भागिषु व्याप्रियमाणेषु आलस्यादिना यो न व्याप्रियते स निर्भाज्यः मूलधनादंशमात्रं दत्त्वा अर्जितधनभागशून्यः कार्य्य इति वचनं व्याचक्रुः तदसत् एतस्योपघातार्जितविषयत्वे साधारणधनोपघातेनार्जिते निर्व्यापारस्यापि साधारणं समाश्रित्येत्यादिना भागावगतेर्विरोधात् अनुपघातार्जितविषयत्वे तु अनुपघ्नन् पितृद्रव्यमिति तदीयपरवचनवैयर्थ्यापातादिति।।२४-२८।।

**पितरि चोपरते सोदरभ्रातृभिर्विभागे क्रियमाणे मात्रेऽपि पुत्रसमांशो दातव्यः। समांशहारिणी मातेति वचनात्।।२९।।**

**मातृपदस्य जननीपरत्वात् न सपत्नीमातृपरत्वमपि सकृच्छ्रुतस्य मुख्यगौणत्वानुपपत्तेः।।३०।।**

**समांशता च मातुर्भर्त्रादिभिः स्त्रीधनादाने दत्ते पुनरर्द्धम्। पित्रा च पुत्रेभ्यः समविभागदाने सर्वपत्नीनामेव पुत्रसमांशता कर्त्तव्या। तदाह याज्ञवल्क्यः।**

**यदि कुर्य्यात् समानांशान् पत्न्यः कार्य्याः समांशिकाः।**
**न दत्तं स्त्रीधनं यासां भर्त्रा वा श्वशुरेण वा।।**

**(याज्ञवल्क्य २।११६)**

**अधिविन्नस्त्रियै देयमाधिवेदनिकं समम्।**
**न दत्तं स्त्रीधनं यासां दत्ते त्वर्द्धं प्रकल्पयेत्।।३१।।**

**(याज्ञवल्क्य २।१४९)**

**पुत्रहीनाश्च पितुः पत्न्यः समानांशा न पुत्रवत्यः।**

**तथा व्यासः।**

**असुतास्तु पितुः पत्न्यः समानांशाः प्रकीर्त्तिताः।**
**पितामह्यश्च सर्वास्ता मातृतुल्याः प्रकीर्त्तिताः।।**

**तथा विष्णुः। मातरः पुत्रभागानुसारेण भागहारिण्यः, अनूढा दुहितरश्च।।३२।। (विष्णु १८।३४-३५)**

**पुत्रभागानुसारेण यथा वर्णक्रमेण पुत्राणां चतुस्त्रिद्व्येकभागिता तथा पत्नीनामपीति।।३३।।**

सोदरभ्रातृभिरिति। सोदरासोदरविभागे तु नैवं तत्रैकस्याः सर्वपुत्रमातृत्वाभावात् मातुरेवांशिताया वचनेन बोधितत्वात्। न सपत्नीमातुरिति। सकृच्छ्रुतस्येति। युगपद्वृत्तिद्वयविरोधादिति भावः। इदञ्च प्राचीननयमाश्रित्याभिहितं न तु नव्यानां किन्तु नव्यैरपि तात्पर्य्यान्यथानुपपत्त्यैव गङ्गायां घोषमत्स्यौस्त

इत्यादौ वृत्तिद्वयाङ्गीकारात् प्रकृते तथाविधोभयतात्पर्य्यग्राहकप्रमाणाभावेन मुख्यपरतेति तन्मताश्रयणेऽपि न वृत्तिद्वयसम्भव इति भावः। अत एव पितृपत्नीत्वेनोभयसाधरणरूपेण लक्षणयैवोभयबोधसम्भव इत्यपि परास्तं लक्षणाहेत्वभावात्। सर्वपत्नीनामिति। पुत्रहीनानामिति वक्ष्यति। पुत्रेभ्य इत्यत्र दत्ते पुनरर्द्धमित्यत्र च प्रमाणं क्रमेण वचनद्वयमाह तदाहेति। समानांशान पुत्रानिति शेषः। अधिविन्नेति। उद्वाह्यमानस्त्रियमपेक्ष्याधिका विन्ना पूर्वोद्वाहिता या तस्यै स्त्रियै इत्यर्थः। आधिवेदनिकम् अधिवेदननिमित्तं समम् उद्वाह्यमानस्त्रियै देयसममित्यर्थः। यद्यपीदमधिविन्नस्त्रीसम्प्रदानकदानविषयं न दत्तं स्त्रीधनं यासामिति तु पितृकृतविभागविषयं तथाप्येकत्र निर्णीतः शास्त्रार्थो बाधकं विना अन्यत्रापि तथेति न्यायात् अत्रापि तथा कल्प्यत इति तथोक्तम्। पुत्रहीनाश्चेति। अत्र कश्चिदिदं पितुः पत्न्य इति स्वरसात् पुत्रकृतविभागविषयं पितृकृतविभागे तु सपुत्रापुत्रपत्नीनामेवांशित्वमित्याह तदसत् मातृपदस्य न सपत्नीमातृपरत्वमिति व्याख्यानविरोधात् भर्तृकृतविभागे पुत्रवतीनामप्यंशित्वे समांशहारिणी माता पुत्राणां स्यान्मृते पतावित्यत्र माता तु पितरि प्रेते पुत्रतुल्यांशहारिणीत्यत्र च मृते पताविति पितरि प्रेते इति विशेषणवैयर्थ्याच्च। न च पतिसत्त्वे तत्समांशहारिणी तदभावे पुत्रसमांशिनीत्यर्थो वाच्य इति वाच्यं यदि कुर्य्यात् समानांशानित्यच उपस्थितपुत्रसमांशताया एव पत्नीनां प्राप्तेः न त्वनुपस्थितपतिसमांशताया इति। तस्मात् पतिकृतविभागे पुत्रहीनपत्नीनामेवांशित्वं न पुत्रवतीनां पुत्रकृतविभागे तु मातृणामेवांशित्वं न विमातृणामिति व्यवस्थेति पितुरिति कर्त्तरि षष्ठी। पितामह्य इति पितामहधनविषयम्। अत्र पितामहीपदं पितृजननीमात्रपरं प्रागुक्तेरिति केचित्, अपरे तु बहुवचनात् सर्वा इत्युपादानाच्च सर्वासामेव पितामहपत्नीनामंशित्वमिति प्राहुः।।२९-३३।।

**अनूढानां दुहितृणां पुत्रभागमनुसृत्य तच्चतुर्थांशः।**

**तदाह बृहस्पतिः।**

**समांशा मातरस्त्वेषां तुरीयांशाश्च कन्यकाः।।३४।।**

**पुत्रस्य भागत्रयं कन्यकाया एको भागः।**

**यदाह कात्यायनः।**

**कन्यकानां त्वदत्तानां चतुर्थो भाग इष्यते।**
**पुत्राणाञ्च त्रयो भागाः स्वाम्यं स्वल्पधने स्मृतम्।।३५।।**

**अल्पधने पुत्रैः स्वात् स्वादंशादाकृष्य कन्याभ्यश्चतुर्थोऽंशो दातव्यः। यथा मनुः।**

**स्वेभ्योऽंशेभ्यस्तु कन्याभ्यः प्रदद्युर्भ्रातरः पृथक्।**
**स्वात् स्वादंशाच्चतुर्भागं पतिताः स्युरदित्सवः।।३६।।**

**(मनु ९।११८)**

**प्रदद्युरिति प्रदानश्रुतेरदाने च पतितत्वश्रुतेर्न कन्याभिरधिकारिबुद्ध्या ग्रहीतव्यं न ह्यधिकारिणे भ्रात्रेऽपरो भ्राता स्वादंशाद्ददाति।।३७।।**

**यथा याज्ञवल्क्यः।**

**असंस्कृतास्तु संस्कार्य्या भ्रातृभिः पूर्वसंस्कृतैः।**
**भगिन्यश्च निजादंशाद्दत्वांशन्तु तुरीयकम्।।**

**(याज्ञवल्क्य २।१२५)**

**भगिनीनां संस्कार्य्यतामाह नाधिकारिताम्।।३८।।**

**एवञ्च बहुतरधने विवाहोचितधनं दातव्यं न चतुर्थांशनियम इति सिद्ध्यति।।३९।।**

**एतच्च कन्यापुत्रयोः समसङ्ख्यत्वे ज्ञातव्यं विषमसङ्ख्यत्वे च कन्याया एव बहुतरधनं वा स्यात् पुत्रस्य वा निर्द्धनता स्यात् न चेतदुचितं पुत्रस्य प्राधान्यात्।।४०।।**

स्वल्पधन इति। यद्धनस्य एकपुत्रलभ्यतुरीयांशेन कन्यासंस्कारो न सम्भवति तदेव स्वल्पधनं तद्भ्रातृभिरेव विभजनीयं पश्चात्तैरेव स्वस्वद्रव्यादाकृष्य भगिनीसंस्कारः कार्य्य इति भावः। न चतुर्थांशनियम इति। अतएव रत्नाकरे विष्णुः। अनूढानां कन्यानां वित्तानुसारेण संस्कारं कुर्य्यादिति। विषमेति। पुत्राणां चतुरादिसंख्यत्वे कन्यायाश्चैकत्वे कन्यायाबहुतरधनं चतसृषु कन्यासु सतीषु पुत्रस्यैकस्य निर्धनतेत्यर्थः।।३४-४०।।

**यच्चेदमत्र बाधकमुक्तम्।**

**अविद्यमाने पित्रर्थे स्वांशादुद्धृत्य वा पुनः।**
**अवश्यकार्य्याः संस्कारा भ्रातृभिः पूर्वसंस्कृतैः।।**

**(नारद १३।३४)**

**अस्मान्नारदवचनादवश्यकर्त्तव्यत्वाद्भगिनीनां संस्कारस्य निरंशतापि न दोषायेति।।४१।।**

**तदयुक्तं भ्रातृसंस्कारार्थत्वादस्य वचनस्य भ्रातॄणां पूर्वसंस्कृतैरिति पाठस्यानाकरत्वात् भ्रातृसंस्कारस्य च प्रकृतत्वात्। इदं हि पूर्वमुक्तं येषान्तु न कृताः पित्रा संस्कारविधयः क्रमात्।**

**कर्त्तव्या भ्रातृभिस्तेषां पैतृकादेव तद्धनात्।**

**(नारद १३।३३)**

**येषां तेषामिति पुंलिङ्गनिर्देशात् एतदनन्तरमेवाविद्यमान इति वचनारम्भात् भ्रातृसंस्कारार्थ-मेवेदं वचनम्।।४२।।**

**इति पितृपितामहादिधनविभागः।।४३।।**

भ्रातृणामिति पाठे एकशेषाद्भगिनीसंस्कारस्याप्यावश्यकता स्यात् अतस्तन्निरस्यति भ्रातॄणामिति। ननु भ्रातृसंस्कारार्थत्ववत् भगिनीसंस्कारार्थत्वमपि वचनस्य कुतो न स्याद्विशेषाश्रवणात् अत आह भ्रातृसंस्कारस्येति। पुंलिङ्गनिर्देशादिति। न च येषामपत्यानामिति नपुंसकनिर्देश एव कुतो न स्या-दिति वाच्यम् अर्थसाधुत्वे सम्भवति शब्दसाधुत्वमात्रस्यान्याय्यत्वादित्यभिप्रायादिति। वस्तुतस्तु पितृपितामहाभावे भगिनीदानाधिकारितया भ्रातुरप्यावश्यक एव भगिनीसंस्कारः अथ ऋतुमती भवति दाता प्रतिग्रहीता च नरकमाप्नोतीति श्रुतेः अतएव याज्ञवल्क्येनापि भगिन्यश्च निजादंशादित्यनेन भगिनीनामपि भ्रातृवत्संस्कार्य्यत्वमुक्तम् इत्यतो बहुतरभ्रातृसंस्कारात् भ्रातुर्निर्द्धनतावत् भगिनीसंस्कारादपि निर्द्धनता न दोषायेति सुधीभिर्भाव्यम्।।४१-४३।।



# चतुर्थः अध्यायः

## प्रथम परिच्छेदः

**अथ स्त्रीधनविभागार्थं प्रथमं स्त्रीधनं निरूप्यते।**

**तत्र विष्णुः।**

**पितृमातृसुतभ्रातृदत्तमध्यग्न्युपागतम्।।**

**अधिवेदनिकं बन्धुदत्तं शुल्कान्वाधेयकमिति स्त्रीधनम्।।१।। (विष्णु १७।१८)**

**अन्वाधेयमाह कात्यायनः।**

विवाहात् परतो यत्तु लब्धं भर्त्तुकुलात् स्त्रिया।
अन्वाधेयं तदुक्तन्तु लब्धं बन्धुकुलात्तथा।।
ऊर्द्ध्वं लब्धन्तु यत्किञ्चित् संस्कारात् प्रीतितः स्त्रिया।
भर्त्तुः पित्रो सकाशाद्वा अन्वाधेयन्तु तद्भृगुः।।२।।

**बन्धुपदेन मातापित्रोरुपादानं, तेनायमर्थः मातापितृद्वारेण सम्बन्धिनां पित्रोश्च सकाशात् यत्तु विवाहात् परतो लब्धं तथा भर्त्तुः सकाशात् भर्त्तुकुलाच्च श्वशुरादितो यल्लब्धं धनं तदन्वाधेयम्। विष्णुवचने च बन्धुपदं मातुलाद्यभिप्रायं पित्रादीनां स्वपदेनैव निर्दिष्टत्वात् परिणयनसमयलब्धस्य ब्राह्म्याद्यासुरादिविशेषेण भर्त्तुः पित्रोर्वाधिकारात्।।३।।**

**स्त्रीधनमाहतुर्मनुकात्यायनौ।**

अध्यग्न्यध्यावाहनिकं दत्तञ्च प्रीतितः स्त्रियै।
भ्रातृमातृपितृप्राप्तं षड्विधं स्त्रीधनं स्मृतम्।।

(मनु ९।१९४)

**तथा नारदः।**

अध्यग्न्यध्यावाहनिकं भर्त्तुदायस्तथैव च।
भ्रातृदत्तं पितृभ्याञ्च षड्विधं स्त्रीधनं स्मृतम्।।४।।

(नारद १३।८)

प्रकरणान्तरमाह अथेति अध्यग्नयादिकमग्र वक्ष्यते। विवाहात् परत इति। एतेन पितृमातृभ्रातृबन्धुदत्तमिति कालान्तरदत्तमात्रपरिग्रहार्थमिति सुव्यक्तम्। बन्धुपदेनेति। लब्धं बन्धुकुलात्तथेत्यत्रेति शेषः। मातापितृद्वारेणेति। मातुः पितुर्वा यस्य सम्बन्धस्य घटकत्वं तत्सम्बन्धवतां मातुलपितृव्यादीनामित्यर्थः। एवञ्च सति मातृपितृभर्तृदत्तस्य अन्वाधेयक संज्ञा न स्यात् अत ऊर्ध्वं लब्धमित्यभिहितम्। तल्लब्धार्थमाह पित्रोश्च सकाशादिति, तथा भर्त्तुः सकाशादिति च। लब्धं भर्तृकुलादित्युक्तस्यार्थमाह भर्त्तृकुलाच्चेति इत्थं च विष्णुवचनोपात्तस्य सुतदत्तस्य नान्वाधेयत्वं सुतस्य साक्षादेव सम्बन्धवत्त्वेन निरुक्तबन्धुभर्त्तुकुलत्वासम्भवादिति सुधीभिर्भाव्यम्। स्वपदेनेति। पितृमातृसुतभ्रातृदत्तमित्यत्र पित्रादिपदेनेत्यर्थः। ननु विवाहात् परत इति, ऊर्ध्वसंस्कारादिति च विहाय, सामान्येनैव भर्त्तृतत्कुलात् पितृमातृतत्कुलाच्च लब्धस्यान्वाधेयसंज्ञा किमिति न कृतेत्याशङ्कायामाह परिणयनसमयलब्धस्येति। अयं भावः अन्वाधेयसंज्ञायास्तावत्ताद्रूप्येऽप्रजः स्त्रीधने वक्ष्यमाणो भ्रात्रधिकार एवं फलं परिणयनसमयलब्धे च न भ्रात्रधिकारः ब्राह्यादिपञ्चसु भर्त्तुः श्वासुरादित्रिषु च पित्रोरेव तेषामभावे सोदरादेरेवाधिकारात् अतः संज्ञायास्तत्साधारण्ये प्रयोजनाभावः प्रत्युत तत्साधारण्ये तत्र भर्त्रधिकारबोधकविशेषवचनेन मात्रधिकार वचनस्य विरोधप्रसक्त्या तस्य सङ्कोचो वाच्यः तथाच प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरमिति न्यायेन तद्व्यावर्त्तनमेव संज्ञायाः समुचितमिति। न च तथापि विवाहसमयादन्यवेत्येवोच्यतां किं परत इत्यादिपर्य्यन्तेनेति वाच्यं तथा सति विवाहात् पूर्वं वाग्दानोत्तरं च पतिदत्ते भ्रात्रधिकारापत्तेरिति।।१-४।।

**एतद्व्याकुरुते कात्यायनः।**

विवाहकाले यत् स्त्रीभ्यो दीयते ह्यग्निसन्निधौ।
तदध्यग्निकृतं सद्भिः स्त्रीधनं परिकीर्त्तितम्।।
यत् पुनर्लभते नारी नीयमाना हि पैतृकात्।
अध्यावाहनिकं नाम तत् स्त्रीधनमुदाहृतम्।।५।।

पैतृकादित्येकशेषेण पितृमातृकुलात् यल्लभते धनं भर्तृगृहं नीयमाना तदध्यावाहनिकम्॥६॥

भर्तृदायो भर्तृदत्तं धनं भर्तृदायमनभिधाय मन्वादिभिर्भर्तृदत्तस्याभिधानात् नारदेनापि भर्तृदत्तमनभिधाय भर्तृदायस्याभिधानात्॥७॥

तथा अन्यत्रापि भर्तृदत्ते भर्तृदायप्रयोगो दृष्टः।

यथा कात्यायनः।

भर्तृदायं मृते पत्यौ विन्यसेत् स्त्री यथेष्टतः।
विद्यमाने तु संरक्षेत् क्षपयेत्तत्कुलेऽन्यथा॥८॥

अस्यार्थः भर्तृदत्तं धनं भर्त्तरि मृते यथेष्टं विनियुञ्जीत जीवति तु तद्रक्षेत् इदममुक्तहस्तताज्ञापनार्थम्॥९॥

तथा व्यासवचनमपि भर्त्तुर्देयपर्य्यन्तताज्ञापनार्थम्।
यथा द्विसहस्रपरो दायः स्त्रियै देयो धनस्य तु।
यच्च भर्त्ता धनं दत्तं सा यथा काममश्नुयात्॥

द्विसहस्रपर्य्यन्तः स्त्रियै देयो नाधिकः केनेत्याकाङ्क्षायां भर्त्रेतिश्रुतमन्वेति न पुनरश्रुतकल्पना तथाच देय इति ददातिर्मुख्यः स्यात् मृतपतिधने तु तावति पत्न्या एव स्वामित्वात् गौणः स चान्याय्यः॥१०॥

यच्च भर्तृदत्तं धनं तद् यथाकाममश्नीयात्।

अतोऽपुत्रस्य मृतस्य पत्युर्धने द्विसहस्रपर्य्यन्त एव पत्न्या अधिकारो न सर्वत्रेति यदुक्तं तद्विद्वद्भिरनादेयम्॥११॥

एतच्च विस्तरेण वक्ष्यते॥१२॥

एतदध्यग्न्यादिकम्। दायपदस्य संक्रान्तसम्बन्धिधनपरत्वशङ्कामपनयति भर्तृदाय इति। मन्वादिभिरिति। आदिना कात्यायनविष्णुपरिग्रहः। तत्र मनुकात्यायनाभ्यां दत्तञ्च प्रीतितः स्त्रियै इत्यनेन विष्णुना च अन्वाधेयमित्यनेनेति भावः। तथाच तैः सहैक श्रुतिमूलत्वानुरोधात् दायपदं दत्तपरमिति भावः। न च वैपरीत्यं बहुषु लक्षणाप्रसङ्गात् मनुस्मृतेर्बलवत्त्वाच्च। भर्तृदायं मृत इति। अत्र मृतेऽविद्यमाने इत्यभिधानात् न संक्रान्तसम्बन्धिधनपरता। विन्यसेत् विनियुञ्जीत। क्षपयेत् स्थापयेत्। अन्यथा स्वयं रक्षणासामर्थ्ये। अन्यथा तद्धनेन वर्त्तनासम्भवे तत्कुले क्षपयेत् तत्कुलमाश्रित्य कालं गमयेदित्यर्थ इति केचित्। केनेत्याकाङ्क्षायां केन देय इत्याकाङ्क्षायाम्। अश्रुतकल्पनेति। अनन्तराधिकारिणा भ्रात्रादिना स्वयं सर्वं गृहीत्वा द्विसहस्रपणपर्य्यन्तं स्त्रियै दायो देय इत्यश्रुतभ्रात्रादीनां कर्त्तृत्वकल्पनेत्यर्थः। एतच्चेति मृतस्यापुत्रस्य पत्न्याः सर्वधनाधिकारित्वञ्चेत्यर्थः। वक्ष्यत इति। अपुत्रधनाधिकारनिरूपण इति शेषः।।५-१२।।

आह याज्ञवल्क्यः।

पितृमातृपतिभ्रातृदत्तमध्यग्न्युपागतम् ।
आधिवेदनिकञ्चैव स्त्रीधनं परिकीर्त्तितम्॥१३॥

(याज्ञवल्क्य २।१४४)

यच्च द्वितीयस्त्रीविवाहार्थिना पूर्वस्त्रियै पारितोषिकं धनं दत्तं तदाधिवेदनिकम् अधिकस्त्रीलाभार्थत्वात्तस्य॥१४॥

तथा देवलः।

वृत्तिराभरणं शुल्कं लाभश्च स्त्रीधनं भवेत्।
भोक्त्री तत् स्वयमेवेदं पतिर्नार्हत्यनापदि॥१५॥

तथा व्यासः।

विवाहकाले यत्किञ्चित् वरायोद्दिश्य दीयते।
कन्यायास्तद्धनं सर्वमविभाज्यञ्च बन्धुभिः॥१६॥

उद्दिश्येति कन्याया इदं भवत्वित्युद्दिश्य वराय यद्दानं न पुनरेतदभिसन्धिं विनापीत्यर्थः अतएव विवाहकाल इति प्रदर्शनार्थं न पुनरेतदेव प्रयोजकं दात्रभिसन्धिनिमित्तत्वात् स्वत्वस्य। तथाच प्रामाणिकं वचनम्।

यद्दत्तं दुहितुः पत्ये स्त्रियमेव तदन्वियात्।
मृते जीवति वा पत्यौ तदपत्यमृते स्त्रियाः॥

विवाहकाल इति न विशिनष्टि। अभिसन्धिस्तु दुहित्रन्वयाभिधानादेव लब्धत्वान्नोक्तः॥१७॥

आहेति। स्त्रीधनमिति प्रागुक्तेनान्वयः। पित्रादिदत्तं विवाहात् पूर्वं परतो वा, विवाहकाले दत्तस्य अध्यग्निपदेनैव प्राप्तेः। वृत्तिः ग्रासाच्छादनावशिष्टम्। शुल्कं वक्ष्यमाणम्। लाभ ऋणादिवृद्धिः। वराय दानं वरहस्ते समर्पणम्। प्रदर्शनार्थं उपलक्षणमित्यर्थः। उपलक्षणत्वे हेतुमाह दात्रभीति। तथाचाभिसन्धेः स्वत्वजनकत्वस्यान्यत्र क्लृप्ततयोक्तविषये विवाहकालस्य सहकारित्वकल्पने प्रमाणाभावोऽदृष्टकल्पनागौरवञ्च स्यादिति भावः। तदुपलक्षणत्वे वचनमपि प्रमाणयति तथा चेति। न विशिनष्टि न विशेषणं दत्तवान्॥१३-१७॥

तदेवमव्यवस्थितसङ्ख्यस्त्रीधनकीर्त्तनात् न षट्सङ्ख्या विवक्षिता किन्तु स्त्रीधनकीर्त्तनमात्रपराणि वचनानि। तदेव च स्त्रीधनं यत्र भर्त्तृतः स्वातन्त्र्येण दानविक्रयभोगान् कर्त्तुमधिकरोति॥१८॥

तदिदं किञ्चित् सङ्क्षिप्याह कात्यायनः।

प्राप्तं शिल्पैस्तु यद्वित्तं प्रीत्या चैव यदन्यतः।
भर्त्तु स्वाम्यं भवेत् तत्र शेषन्तु स्त्रीधनं स्मृतम्॥१९॥

अन्यत इति पितृमातृभर्त्तृकुलव्यतिरिक्तात् यल्लब्धं शिल्पेन वा यदर्जितं तत्र भर्त्तुः स्वाम्यं स्वातन्त्र्यम् अनापद्यपि भर्त्ता ग्रहीतुमर्हति, तेन स्त्रिया अपि धनं न स्त्रीधनमस्वातन्त्र्यात्॥२०॥

एतद्द्वयातिरिक्तधनन्तु स्त्रिया एव दानविक्रयाद्यधिकारात्। तदाह कात्यायनः।

ऊढ़या कन्यया वापि पत्युः पितृगृहेऽथवा।
भर्त्तुः सकाशात् पित्रोर्वा लब्धं सौदायिकं स्मृतम्॥
सौदायिकं धनं प्राप्य स्त्रीणां स्वातन्त्र्यमिष्यते।
यस्मात्तदानृशंस्यार्थं तैर्दत्तं तत्प्रजीवनम्॥
सौदायिके सदा स्त्रीणां स्वातन्त्र्यं परिकीर्त्तितम्।
विक्रये चैव दाने च यथेष्टं स्थावरेष्वपि॥
सुदायसम्बन्धिभ्यो लब्धं सौदायिकम्॥२२॥

स्थावरेऽपि भर्तृदत्तमात्रे स्त्रिया दानाद्यनधिकारः।

**तदाह नारदः।**

**भर्त्रा प्रीतेन यद्दत्तं स्त्रियै तस्मिन् मृतेऽपि तत्।**
**सा यथा यथाकाममश्नीयात् दद्याद्वा स्थावराद्दते।।**

**भर्त्तृदत्तविशेषणात् भर्त्तृदत्तस्थावरादृते अन्यत् स्थावरं देयमेव भवति अन्यथा यथेष्टं स्थावरेष्वपीति विरुध्येत।।२३।।**

अव्यवस्थितसङ्ख्येति। अनियतसङ्ख्येत्यर्थः। मन्वाद्युक्तषड्विधादधिकस्यापि शुल्कलाभादेर्देव-लादिभिरहितत्वादिति भावः। पितृमातृभर्त्तृकुलेति। पितृमातृभर्त्तारः सम्बन्धिनी यस्मिन् कुले इति बहुव्रीहिः अन्यथा लब्धं भर्त्तुकुलात्तथेत्यत्र भर्त्तृकुलादिपदात् भर्त्रादिपरिग्रहो न स्यात्। अनापद्यपीति। तथाचोक्तद्विविधस्त्रीधने भर्त्तुरिच्छैव स्वत्वजनिका पत्नीस्वत्वनाशिका च, तदन्यस्त्रीधने तु भर्त्रा आपत्कालोऽपेक्ष्यत इति भावः। स्त्रिया अपि धनं स्त्रीस्वत्वास्पदीभूतमपि धनं न स्त्रीधनं नेतरनैरपेक्ष्येण स्त्रिया यथेष्टविनियोज्यम्। अस्वातन्त्र्यादिति। एतच्च भार्य्यापुत्रश्चेत्यादिना प्रतिपादितमेव प्राक्। स्त्रिया एवेति। स्त्रीणां स्वातन्त्र्येण विनियोज्यं स्त्रीधनमित्यर्थः। तथा च कात्यायनेनैकवाक्यतया भार्य्यापुत्रश्चेत्यादिवचनमप्युक्तशिल्पलब्धादिद्विविधस्त्रीधनविषयमेव स्त्रीधनान्तरे तु स्त्रीणां स्वातन्त्र्येण यथेष्टविनियोगो निष्पत्यूह एवेति भावः। अत्र संवादमाह तदाहेति। आनृशंस्यार्थम् अनुकम्पार्थम्। न चैवं शुल्कलाभयोरसौदायिकत्वात् तत्रास्वातन्त्र्यं स्यादिति वाच्यं पूर्वोक्तकात्यायनवचनेन अन्यतो लब्धस्य शिल्पलब्धस्य च द्वयोरेवास्वातन्त्र्यप्रतिपादनेन एतयोरपि स्त्रीधनमध्यपठितयोः स्वातन्त्र्या-वगमात्। स्थावरेष्वपीति यदुक्तं तस्यापवादमाह स्थावरेऽपीति। अन्यथेति। स्थावरमात्रे दाननिषेध इत्यर्थः।।१८-२३।।

**भर्त्ता तु यदा दुर्भिक्षादौ स्त्रीधनं विना वर्त्तनाक्षमस्तदा ग्रहीतुमर्हति नान्यथा। यदाह याज्ञवल्क्यः।**

**दुर्भिक्षे धर्मकार्य्ये च व्याधौ सम्प्रतिरोधके।**
**गृहीतं स्त्रीधनं भर्त्ता न स्त्रियै दातुमर्हति।।**

**(याज्ञवल्क्य २।१४८)**

**अन्यत्र पुनरधिकारमाह कात्यायनः।**

**न भर्त्ता नैव च सुतो न पिता भ्रातरो न च।**
**आदाने वा विसर्गे वा स्त्रीधने प्रभविष्णवः।।**
**यदि ह्येकतरस्त्वेषां स्त्रीधनं भक्षयेद्बलात्।**
**स वृद्धिं प्रतिदाप्यः स्याद्दण्डश्चैव समाप्नुयात्।।**
**तदेव यद्यनुज्ञाप्य भक्षयेत् प्रीतिपूर्वकम्।**
**मूलमेव तदा दाप्यो यदा स धनवान् भवेत्।।**
**अथ चेत् स द्विभार्य्यः स्यात् न च तां भजते पुनः।**
**प्रीत्या विसृष्टमपि चेत् प्रतिदाप्यः स तद्बलात्।।**
**ग्रासाच्छादनवासानामुच्छेदो यत्र योषितः।**
**तत्र स्वमाददीत स्त्री विभाग रिक्थिनां तथा।।२४।।**

**इति स्त्रीधनलक्षणम्।।२६।।**

तदेति। तदैवेत्यर्थः। सम्प्रतिरोधके ऋणार्थमुत्तमर्णेन कृते स्नानभोजनाद्यवरोधे। विसर्गे दाने।

ग्रासेति। वासी गृहम्। तत्र स्वमिति। स्वकीयं ग्रासाच्छादनादीत्यर्थः। ऋक्थिनां स्वभर्तृसाधारण-धनाधिकारिणां देवरादीनां सकाशात् विभागं स्वभर्तृयोग्यांशमाददीतेत्यर्थः। केचित्तु ऋक्थिनां भर्त्रादिसम्बन्धिनां सकाशात् स्वं विभागं ग्रसाच्छादनादिरूपम् आददीतेत्यर्थ इति व्याचक्रुः तदसत् तत्र स्वमित्यनेनैव गतार्थत्वादिति।।२४-२६।।



# चतुर्थः अध्यायः

## द्वितीय परिच्छेदः

**इदानीं स्त्रीधनविभागोऽभिधीयते। तत्र मनुः।**

**जनन्यां संस्थितायान्तु समं सर्वे सहोदराः।**
**भजेरन् मातृकं रिक्थं भगिन्यश्च सनाभयः।।१।।**

**(मनु ९।१९२)**

**द्वन्द्वाश्रवणेऽपि तत्तुस्त्यार्थकचकारेण भ्रातृभगिन्योरितरेतरयुक्तयोर्विभागप्रतिपादनात् भगिन्यः सहोदराश्च विभजेरन्नित्ययमेवास्य वचनस्यार्थः।।२।।**

**बृहस्पतिरपि चकारात् समुच्चयमाह।**

**स्त्रीधनं तदपत्यानां दुहिता च तदंशिनी।**
**अप्रत्ता चेत्, समूढ़ा तु न लभेन्मातृकं धनम्।।३।।**

**अपत्यपदं पुत्रपरम्। तेषामप्रत्ताभिर्दुहितृभिः सह मातृधनविभागः। तथाच शङ्खलिखितौ।**

**समं सर्वे सोदर्य्या द्रव्यमर्हन्ति कुमार्य्यश्च।।४।।**

**सर्वत्रैव प्रथमं पुत्रोपादानात् सर्वावस्थस्य पुत्रस्य मातृधनेऽधिकारः चकारश्रुतिश्च सर्वत्रानुगता समुच्चयवाचिका।।५।।**

**एतावताप्युदग्राहमल्लस्य देवलवचनं गलहस्तः। यथा,**

**सामान्यं पुत्रकन्यानां मृतायां स्त्रीधनं स्त्रियाम्।**
**अप्रजायां हरेद्भर्त्ता माता भ्राता पितापि वा।।६।।**

**इह पुत्रकन्ययोः साधारणं मातृधनमिति सुव्यक्तं, केवलकुमार्य्याः सकलमातृधनाधि-कारित्वे यौतकधने विशेषवचनं मन्वादीनामनर्थकं स्यात् सर्वत्राधिकाराविशेषात्।।७।।**

इदानीं स्त्रीधननिरूपणानन्तरमित्यर्थः। सममिति। विंशोद्धारनिषेधाय। भगिन्योऽदत्ताः, सनाभयः, सहोदराः। अत्र वचने द्वन्द्वश्रुतिर्नास्ति येनावगतसाहित्यबलेन भगिनीभ्रात्रोर्युगपदाधिकारः स्यात्, किन्तु क्रमेणैव तयोरधिकारः, क्रमश्च न पाठिकः किन्तु प्रथमं भागिन्याः ततो भ्रातुरित्येवं रूपः मातुर्दुहितरीऽभावे दुहितृणा तदन्वय इत्यादि नारदादि वचनेषु बलवतः शाब्दक्रमस्य प्राप्तेरिति केषाञ्चिन्मतं तदपाकर्त्तुमाह द्वन्द्वाश्रवणेऽपीति। तत्तुल्यार्थेति। चार्थे द्वन्द्व इत्युक्तेर्द्वन्द्वसमानार्थता चकारस्य। पुत्रपरमिति। दुहितुः पृथगुपादानात्, नपुंसकस्य चाधिकाराभावादिति भावः। सर्वावस्थ-स्येति। संस्कृतस्यासंस्कृतस्य चेत्यर्थः। अत्र सहोदरपदाद्युपादानात् कन्यासत्त्वे दत्तकादीनां नाधिकारः। दुहित्रपेक्षिया पञ्चमाद्यंशभागिता पुंधनवदिति केचित्। एतावतापि उक्तक्रमेण यौगपद्यावगमेनापि, उद्ग्राहमल्लस्य उद्ग्राहो वादः स च चकारश्रुतिबलात् न तयोर्विभागे साहित्यावगमः व्रीहियवपाकौ चेत्यादाविव भिन्नकालीनयोरप्येकजातीयक्रियासम्बन्धमात्रेण तस्याश्चरितार्थत्वात्। अन्यथा पत्नीदुहित-

रश्चेत्यादौ चकारश्रुतिबलेन पत्नीदुहित्रोरपि युगपदधिकारापत्तिरित्येवं रूप:, तत्र मल्लस्य समर्थस्य, गलहस्तस्तन्निवारक इत्यर्थ:। तद्वचनमाह यथेति। अप्रजायामिति। प्रजा सन्तति:। पुत्र-दुहितृसपत्नी-पुत्रपौत्रदौहित्रप्रपौत्रसपत्नीपौत्रप्रपौत्ररहितायामित्यर्थ:। सुव्यक्तमिति, सामान्यपदादिति शेष:। केवल-कुमार्य्या इति, भ्रातृसत्त्वेऽपीत्यादि विशेषवचनं वक्ष्यमाणम्।।१-७।।

**यः पुनरेवं समाधानं ब्रूते भ्रातृभगिन्योस्तुल्यवज्जननीधनाधिकारित्वे समभागविधानं युक्तं, केवलभगिनीनां तदभावे च केवलभ्रातॄणां धनसम्बन्धे समं स्यादश्रुतत्वाद्विशेषस्येति न्यायत एव समत्वप्राप्तेरनर्थकं सममिति। स एवं वाच्यः भ्रातृभगिन्योरप्यधिकारे समं स्यादिति न्यायात् समत्वप्राप्तेरविशेषादानर्थक्यस्य तदवस्थत्वात्। किञ्च केवलभ्रात्रधिकारपक्षेऽपि पितृधन इव, मातृधनेऽपि विंशोद्धारादिप्रसक्तिनिवर्त्तकतया समपदस्य सार्थकत्वात् कथमनर्थकता। अतो वचनन्यायानभिज्ञः सर्वैः प्राज्ञैरवज्ञेय एव किञ्चिज्ज्ञ इति॥८॥**

ननु भ्रातृभगिन्योरधिकारे भगिन्यपेक्षया भ्रातुरभ्यर्हितत्वेन विंशोद्धारप्रसक्तौ तन्निवर्त्तकतयैव समत्वविधानं सार्थकमिति यदि तदा केवलभ्रात्रधिकारपक्षेऽपि तथैव सार्थकमिति कथमनर्थकतेत्याह किञ्चेति। वचनान्यायेति। वचनं सामान्यं पुत्रकन्यानामिति, न्याय: किञ्चेत्यादिनोक्तयुक्ति:।।८।।

**किन्तुक्तादेव हेतोः पुत्रकुमारीदुहित्रोस्तुल्यवदधिकारः। एतयोश्चान्यतराभावेऽन्यतरस्य तद्वनं द्वयोरप्येतयोरभावे तु ऊढ़ाया दुहितुः पुत्रवत्याः सम्भावितपुत्रायाश्च तुल्योऽधिकारः स्वपुत्रद्वारेण पार्वणपिण्डदानसम्भवात्॥९॥**

**अतएव पूर्वोक्तदुहित्रभावे दौहित्रस्यैव धनाधिकारः। दौहित्रोऽपि ह्यमुत्रैनं सन्तारयति पौत्रवत् (मनु ९।१३९) इति मनुवचनात् न तु वन्ध्याविधवादुहित्रोः, स्वसत्तया स्वजन्यसत्तया च पार्वणपिण्डदानाभावात्। अतएव नारदः।**

**पुत्राभावे च दुहिता तुल्यसन्तानदर्शनात्।।१०।।**

**(नारद १३।५०)**

**पौत्रदौहित्रयोस्तु सद्भावे पौत्रस्यैवाधिकारः, पुत्रेण परिणीता दुहितुर्बाधात् बाधकपुत्रेण बाध्यदुहितृपुत्रबाधस्य न्याय्यत्वात्॥११॥**

**उक्तानान्तु सर्वेषां दौहित्रपर्य्यन्तानामभावे वन्ध्याविधवयोरपि मातृधनाधिकारिता, तयोरपि तत्प्रजात्वात् प्रजाभावे चान्येषामधिकारात्॥१२॥**

अन्यतरेति। भ्रात्रोरिव तुल्याधिकारादिति भाव:। ऊढ़ाया इति। न पुनर्वक्ष्यमाणयौतकधनवत् कन्याया अभावे वाग्दत्तायास्तदभावे ऊढ़ाया इति क्रम: प्रमाणाभावादिति भाव:। अतएव पार्वणा-पिण्डदानादेव। उपकारान्तरमपि हेतुमाह दौहित्रोऽपीति। स्वसत्तया साक्षात्, स्वजन्यसत्तया स्वपुत्र-द्वारेण, चोहेतौ। यद्यपि पुत्रवतीनामपि स्वसत्तया पिण्डदानाभाव: तथापि दृष्टान्तार्थ तदुक्ति:। यत: स्वपुत्रद्वारेण तदुपकारतया दुहितॄणां धनाधिकार: अतएव नारदेन सन्तानदर्शनं दुहित्रधिकारे हेतुतया निर्दिष्टमित्याह अतएवेति। पुत्रेणेति। एतेन यौतकधने दौहित्रस्यादावधिकार: सूचित: तत्र पुत्रस्यैवोढ़ा-बाध्यत्वादिति बोध्यम्। दौहित्रपर्य्यन्तानामिति प्रपौत्रपर्य्यन्तोपलक्षणं दौहित्रानन्तरं महोपकारकत्वेन तस्यैवाधिकारात्। तयोरपीति एतेन पूर्वं यत्तयोरनधिकारकथनं तदुक्तपर्य्यन्तसद्भावे ज्ञेयम्।।९-१२।।

**यत्तु दुहितृमात्राधिकारार्थं गौतमवचनं स्त्रीधनं दुहितॄणामप्रत्तानामप्रतिष्ठितानाञ्च (गौतम २८।२२) यच्च नारदस्य मातुर्दुहितरोऽभावे दुहितॄणां तदन्वयः (नारद १३।२) यच्च कात्यायनस्य दुहितॄणामभावे तु रिक्थं पुत्रेषु तद्भवेत्। यच्च याज्ञवल्क्यस्य मातुर्दुहितरः**

**शेषमृणात्ताभ्य ऋतेऽन्वयः (याज्ञवल्क्य २।११८) तानि पूर्वोक्तदेवलादिवचनविरोधेन यौतकद्रव्यविषयाणि। अतएव मनुः।**

**मातुश्च यौतकं यत् स्यात् कुमारीभाग एव सः।।१३।।**

**(मनु ९।१३१)**

**यौतकं परिणयनलब्धं युमिश्रण इति धातोर्युत इतिपदं मिश्रतावचनं मिश्रता च स्त्रीपुरुषयोरेकशरीरता विवाहाच्च तद्भवति अस्थिभिरस्थीनि मांसैर्मांसानि त्वचा त्वचमिति श्रुतेः, अतो विवाहकाले लब्धं यौतकम्।।१४।।**

**अतएव वशिष्ठः।**

**मातुः पारिणाय्यं स्त्रियो विभजेरन्।। (वशिष्ठ १७।४०)**

**पारिणाय्यं परिणयनब्धं धनम्।।१५।।**

यौगपद्याधिकारे केवलकन्याधिकारबोधकवचनविरोधं परिहर्त्तुं तद्वचनान्याह यत्त्विति। नन्वत्र विनिगमकाभावः देवलादिवचनानां यौतकविषयत्वम् अनन्तरोक्तगौतमादिवचनानाम् अयौतकविषय-त्वमित्यस्यापि सम्भवात् अतोमनुवचनैकमूलकत्वं विनिगमकमाह अत एवेति। यत एव केवलयौतक एव प्रथमं कुमार्य्यधिकारः अतएव मनुना कुमार्य्यधिकारे यौतकपदमभिहितम् इति भावः। अस्थिभिरिति। कन्यास्थिभिर्वरास्थीन्येकतामाप्नुवन्तीत्यर्थः एवमन्यत्रापि। यतो विवाहसमयलब्धमेव यौतकम् अतोऽत्र वशिष्ठेनापि पारिणाय्यपदमुक्तम् अन्यथा मूलान्तरकल्पनापत्तेरित्याह अतएवेति। अतएव पारिणाय्यपदमपि विवाहसमयलब्धपरमेव न तु कल्पतरुप्रभृतिभिरुक्तं यत् परिच्छदा-दर्शकङ्कतिकादिरूपं पारिण्याय्यं तत्परम्। तथात्वे श्रुतिभेदकल्पनापातात् परिणयशब्दस्य विवाहे रूढ़त्वाच्च।।१३-१५।।

**यत्तु मनुवचनम्।**

**स्त्रियास्तु यद्भवेद्वित्तं पित्रा दत्तं कथञ्चन।**
**ब्राह्मणी तद्धरेत् कन्या तदपत्यस्य वा भवेत्।।**

**(मनु ९।१९८)**

**अत्र पित्रा दत्तमिति विशेषणात् विवाहसमयादन्यत्रापि यत् पितृदत्तं तत् कन्याया एवेत्येतदर्थं ब्राह्मणीपदञ्चानुवादः। यद्वा ब्राह्मणीपदस्य चानर्थक्यभयात् क्षत्रियादिस्त्रीणा-मनपत्यानां पितृदत्तं धनं सपत्नीदुहिता ब्राह्मणी कन्या हरेत् न पुनरप्रजा स्त्रीधनं भर्त्तुरिति-वचनावकाश इति वचनार्थः। अन्यथा सकलवचनानामसामञ्जस्यं स्यात्।।१६।।**

**न च वाच्यं नारदादिभिर्दुहितुरभावे दुहितुः पुत्राणामेव धनाधिकारो दर्शितः प्रत्यासन्न-दुहितृपदेनैवान्वयपदस्यान्वयादिति यतो दुहितृपदस्य जन्यविशेषपरत्वेन जनकाकाङ्क्षित-त्वात्।।१७।।**

**न जन्यान्तरेणान्वयपदोपात्तेन पुत्रेणान्वयः सम्भवति समत्वात्। न चाधिष्ठानलक्षणयान्वयो वाच्यः मात्रन्वयेनैव सर्वेषां मुख्यत्वसम्भवात् मातृपदान्वये च दुहितृपदस्य मुख्यत्व-स्वीकारात्।।१८।।**

**न च तदन्वय इति तच्छब्दोपात्ताया दुहितुरन्वययोग्यता वाच्या तच्छब्दस्यापि प्रकृतवाचितया दुहितृत्वरूपेणैवोपपादकत्वात्।।१९।।**

**किञ्च याज्ञवल्क्यवचने दुहितर इति पदं प्रथमान्तं ताभ्य इति पदञ्च पञ्चम्यन्तम् अन्वय-**

**पदेन षष्ठ्यन्तान्वययोग्येन नान्वीयते किन्तु व्यवहितमपि मातुरित्येवपदमन्वयि तदत्र मातुरन्वये निश्चिते नारदकात्यायनवाक्येऽपि मातुरेवान्वयोन्याय्यः अविरोधात्॥२०॥**

विवाहसमयादन्यत्रापीति। तथाच पित्रा दत्तं यौतकमयौतकं वा तत् सर्वं कन्याया एवेत्येतद्बोधनार्थमेतद्वचनं मातुश्च यौतकं यत् स्यादिति पूर्ववचनन्तु यौतकसामान्ये कन्यामात्राधिकारार्थमिति नान्यतरवैयर्थ्यमिति बोध्यम्। कन्याया एवेति। एवकारणे पुत्रनिरासः। ब्राह्मणीपदस्यानुवादत्वे वैयर्थ्यमाशङ्क्याह यद्वेति। न च ब्राह्मणीकन्याया अधिकारावगमात् स्त्रीपदं ब्राह्मणीपरमस्तु क्षत्रियादिपरत्वे कन्यापदस्यामुख्यतापत्तेरिति वाच्यम् अनूढत्वेनैव कन्यापदस्य सपत्नीकन्याबोधकतया अमुख्यत्वाप्रसक्तेः तद्रूपेणैव कन्यापदस्य शक्तेः। आनर्थक्यभयादिति। न च आनर्थक्यभयात् परिसङ्ख्यैवास्तु तथाच ब्राह्मणी एव हरेत् नान्येति परिसङ्ख्यया क्षत्रियादेः पितृदत्तयौतके सत्यामपि कन्यायां पुत्राणामेवाधिकार इति वाच्यं स्वार्थहान्यादिदोषत्रयापत्तेः एतदपेक्षया कन्यापदस्य जहत्स्वार्थलक्षणया सपत्नीकन्यापरत्वस्यैव न्याय्यत्वादिति। ब्राह्मणीपदमुत्तमजातिमात्रपरं तेन वैश्याया अपि तथाविधायाः पितृदत्तं धनं क्षत्रिया गृह्णीयादिति मिताक्षराव्याख्यानं, तत् प्रमाणाभावादुपेक्षणीयमिति। अन्यथेति। पूर्वव्याख्याने इत्यर्थः। सकलवचनानामिति पितृदत्तसाधारणायौतकधनसामान्ये कन्यापुत्रयोस्तुल्यवदधिकारबोधकवचनानामित्यर्थः। नारदादिवाक्ये अन्वयपदं सन्निहितत्वात् दुहित्रन्वयि दौहित्रपरं, तथाच सत्यपि पुत्रे दुहित्रभावे दौहित्रस्यैव यौतकधनाधिकार इति केषाञ्चिन्मतमपाकर्त्तुमाह न च वाच्यमिति। जन्यविशेषेति। विशेषः स्त्रीरूपः, जनकाकाङ्क्षितत्वात् जनकमात्राकाङ्क्षितत्वात् जन्यतयोपस्थितनिराकाङ्क्षितत्वादिति यावत्। जन्यान्तरेण जन्यतयोपस्थितेन। तथोपस्थितिं समर्थयति अन्वयपदोपात्तेनेति। पूर्वासत्त्वपूर्वसत्त्वविशिष्टसत्त्वरूपयोः साध्यत्वसाधनत्वयोर्विरोधेन एकस्मिन् धर्मिण्येकदा तदुभयबोधासम्भवादिति भावः। अन्वयपदस्यापि दुहित्रन्वये निराकाङ्क्षत्वमाह समत्वादिति। द्वयोरेव जनकमात्रसाकाङ्क्षतया तुल्यत्वादित्यर्थः। अधिष्ठानेति। जन्यत्वांशमपहाय दुहितृपदस्य स्त्रीत्वेन, अन्वयपदस्य च पुंस्त्वेन रूपेण लक्षणयेत्यर्थः। अन्वयो वाच्य इति। जन्यत्वेनानुपस्थित्या परस्परनिराकाङ्क्षत्वविरहादिति भावः। सर्वेषामिति। दुहितृपदान्वयपदकात्यायनोक्तपुत्रदानामित्यर्थः। मुख्यत्वस्वीकारादिति। तथाच मातुरन्वयार्थं मुख्यस्य दुहितृपदस्य अन्वयपदार्थान्वयार्थं न पुनर्लक्षणा, युगपदवृत्तिद्वयविरोधादिति भावः। तच्छब्दोपात्ताया इति। तदा बुद्धिस्थत्वेनैवोपस्थिताया इत्यर्थः। दुहितृत्वरूपेणेति। तथाच तदादेर्विशेषणरूपेणैव बोधकत्वं न बुद्धिस्थत्वसामान्येनेति निराकाङ्क्षत्वं तदवस्थमिति भावः। नन्वन्वयपदार्थस्य मातुरित्यनेनान्वये तत्पदवैयर्थ्यं न च तत्पदोपस्थिताया एव मातुरन्वयो वाच्यः मातुर्विशेषणत्वेनाप्रधानतया तदा, परामर्षाभावात् तदादीनां विशेष्यपरामर्षस्यौत्सर्गिकत्वात्, तथाच प्रधानीभूतदुहितुरेव परामृष्टाया अन्वयेनान्वयो वाच्यः, न च जन्यत्वेनोपस्थितया दुहितुर्जनक-त्वान्वये विरोधः, एकनिरूपितजन्यजनकतयोरेवैकस्मिन् धर्मिणि विरोधेन भानानभ्युपगमात् इह तु मात्रपेक्षया जन्यत्वम्, अन्वयपदार्थापेक्षया जनकत्वं दुहितुरिति निरूपकभेदात्, अतएव दुहितुश्चैव ये पुत्रा दौहित्रास्ते प्रकीर्त्तिता इत्यादिवचनेषु दुहितुः पुत्रा इति सङ्गच्छते, इत्थञ्चात्र दुहित्रन्वये निर्णीते तदेकश्रुतिमूलतया यत्र तत्पदं नास्ति तत्रापि वचने दुहित्रन्वय एव वाच्य इत्यत आह किञ्चेति। किन्त्विति। षष्ठ्यन्तमुपेक्ष्य षष्ठ्यन्तविपरिणामेन नान्वयो गौरवादिति भावः। अविरोधादिति। एक-श्रुतिमूलत्वेऽविरोधादित्यर्थः।।१६-२०।।

**किञ्च सत्स्वङ्गजेषु तद्गामी ह्यर्थो भवतीति बौधायनवचनानुसारेणानन्तर्य्याच्च अङ्गस्य पुत्रस्याधिकारो न्याय्यो नानङ्गजस्य व्यवहितदौहित्रस्याधिकारः॥२१॥**

**ततश्च परिणयनलब्धस्त्रीधनं दुहितुरेव न पुत्राणां तत्रैव च क्रमार्थं गौतमवचनं स्त्रीधनं दुहितृणामप्रत्तानामप्रतिष्ठितानाञ्च॥२२॥**

**प्रथममप्रत्तानां, तदभावे प्रत्तानां, तदभावे च समूढ़ानां, स्त्रीधनं दुहितृणामिति सामान्यतः प्राप्तत्वात् अप्रत्तानामित्यादेस्तु क्रमार्थत्वेनोपसंहारार्थत्वात्॥२३॥**

**तथा च याज्ञवल्क्यः।**

**अप्रजा स्त्रीधनं भर्त्तुर्ब्राह्मादिषु चतुर्ष्वपि।**
**दुहितृणां प्रसूता चेच्छेषेषु पितृगामि तत्॥२४॥**

**(याज्ञवल्क्य २।१४६)**

**ब्राह्मादिषु विवाहेषु यल्लब्धम् अध्यग्निधनं स्त्रियाः तत्तस्यां मृतायां प्रथमं दुहितृणामेव तत्रापि प्रथमं कन्यायास्तदभावे प्रत्तायास्तदभावे परिणीतायाः, सर्वदुहित्रभावे च पुत्रस्याधिकारः, अप्रजः स्त्रीधने भर्त्तुरधिकारात्॥२५॥**

**बृहस्पतिना तु अप्रत्तापदेन अप्रत्ताद्यभावे समूढ़ाया अप्यधिकारः सूचितः॥२६॥**

ननु तथापि नारदवचने मातुरन्वये तत्पदवैयर्थ्यापातात् वरं याज्ञवल्क्यवचने षष्ठ्यन्तविपरिणामेन दुहितुरेवान्वयोऽन्याय्य इत्यत आह किञ्चेति। तथाच बौधायनस्य सङ्कोचकल्पनं याज्ञवल्क्योक्तषष्ठ्यन्तविपरिणामेनान्वयकल्पनं चापेक्ष्य तत्पदस्यानुषङ्गप्रयासनिरासार्थम् अनुवाद एव न्याय्य इति भावः। यौतकधनं सर्वावस्थदुहितृणामेव तदभावे पुत्रस्य इत्युपसंहरति ततश्चेति। न पुत्राणामिति, दुहि-तरि सत्यामिति शेषः। तत्रैव दुहित्रधिकारविषय एव। क्रमार्थं कुमारीणां वाग्दत्तानामूढ़ानाञ्च क्रमेणाधिकारार्थम्। प्रथममिति। अप्रत्ता अवाग्दत्ता, प्रत्ता वाग्दत्ता। चकारलभ्यार्थमाह समूढ़ानामिति। नतु युगपदेवाप्रत्तादीनामधिकारस्य वचनार्थत्वसम्भवात् कथं क्रमकल्पनेत्यत आह दुहितृणानिमीति। क्रमार्थत्वेन क्रमिकाधिकारित्वेन यः सामान्यप्राप्ताधिकारस्य उपसंहारो बोधस्तद्रूपार्थवत्त्वात् तत्प्रयोजनवत्त्वादित्यर्थः उपसंहारोऽर्थो यस्येति बहुव्रीहिणा उक्तार्थलाभात्। उपसंहारसमर्थत्वादिति पाठे सम्यगर्थः प्रयोजनं यस्येति पूर्वोक्त एवार्थः। तथाच प्रथमं कुमार्य्यास्तदभावे वाग्दत्तायाः सगोत्रत्वेन तस्या ऊढ़ापेक्षया बलवत्त्वात् तदभावे समूढ़ायाः तत्रापि पुत्रवतीसम्भावितपुत्रयोः तदभावेऽन्यस्या इति क्रमः। न च चकारश्रुतेरप्रत्तादीनां युगपदधिकारो रत्नाकरसम्मतो युक्त इति वाच्यं, मातुश्च यौतकं यत् स्यात् कुमारीभाग एव स इति मनुवचने निरपेक्षकुमारीभागश्रवणात् एवकारश्रवणाच्च कुमारीमात्राधिकारावगमात् तत्तुल्योपकाराभावे न्यायविरोधाच्च। सामान्येन प्राप्तिर्याज्ञवल्क्यवचनापदपीत्याह तथेति। ब्राह्मादिषु चतुर्षु ब्राह्मेण सह पञ्चसु विवाहेषु भर्त्तुः, शेषेषु आसुरादिषु पितृगामि प्रसूता चेत् तदा दुहितृणामर्थात् सर्वत्रेत्यर्थः। प्रथमं कन्याया इति। पूर्वोक्तवचनैकमूलत्वादिति भावः। न चात्र दुहितृपदं दौहित्री परम् अन्यथा मातुर्दुहितरः शेषमित्यनेन पौनरुक्त्यापत्तेरिति मिताक्षरोक्तं युक्तमिति वाच्यं मातुर्दुहितर इत्यस्याध्यन्विषयत्वेनोपसंहारकतया तदतिरिक्तपरिणयनलब्धविषयतया च तस्यापुनरुक्तत्वात्। तस्य च ऋणावशिष्टरूपविशेषायानन्तरमन्वयाधिकाराय च सार्थकत्वात्, तद्वचनं कन्याधिकारार्थम् इदन्तु समूढ़ाधिकारार्थमित्यपुनरुक्तिरिति केचित् तदसत् उभयत्रैव दुहितृपदमात्रश्रुतेरविशेषादुभयाधिकारस्यैकेनैव सिद्धेरपरवचनवैयर्थ्यस्य दुष्परिहारत्वात्। दुहितृणामेवेति। नत्वयौतकधनवत् पुत्रदुहित्रोरित्यर्थः। ननु वचनबलात् दुहित्रभाव एव भर्त्तुरधिकारप्राप्तेः कथमन्तरा-पुत्रस्याधिकार इत्यत आह अप्रजा स्त्रीधन इति। ननु गौतमवचनात् यौतकधने समूढ़ापर्य्यन्तानां दुहितृणामधिकारोऽस्तु अयौतके तु स्त्रीधनं तदपत्यानां दुहिता च तदंशिनी। अप्रत्ताचेत् समूढ़ा तु

न लभेन्मातृकं धनमिति बृहस्पत्युक्तेर्न समूढ़ानां भर्त्रादिसत्त्वेऽधिकारः स्यादित्याशङ्कायां तद्वचनस्यै-वार्थविवेचनेन तत्र समूढ़ाधिकारे प्रमाणमाह बृहस्पतिनेति। अप्रत्तापदेनेति। अत्रायं भावः। अप्रत्तापदं न दुहितृविशेषणपरं समूढ़ानिषेधेनैव दुहितुरप्रत्तत्वलाभात् किन्तु अप्रत्ता चेदर्थादस्ति तदा समूढ़ा न लभेदित्येवार्थः तथा चाप्रत्ताभावे समूढ़ाधिकारो बृहस्पतिना प्रतिपादिति इति। अप्रत्ताया दुहितुर-धिकारितायां पुत्र समत्वात् अप्रत्ताभावे प्रतिपादिते अर्थात् पुत्राभावोऽपि प्रतिपादित इत्येतदुक्तम् अप्रत्ताद्यभाव इति।।२१।।२६।।

**न च यौतकमात्रधनाभिप्रायेण नेदं वचनं किन्तु ब्राह्मादिविवाहेन विवाहिताया यद यावद्धनं यौतकमयौतकं वा तदभिप्रायेणेति वाच्यं बन्धुदत्तमितिवचनस्य (याज्ञवल्क्य २।१४५) निर्विषयतापत्तेः मनुविरोधाच्च।**

**यदाह ब्राह्मदैवार्षगान्धर्व प्राजापत्येषु यद्धनम्।**
**अप्रजायामतीतायां भर्त्तुरेव तदिष्यते।।**
**यत्तवस्याः स्याद्धनं दत्तं विवाहेष्वासुरादिषु।**
**अतीतायामप्रजायां मातापित्रोस्तदिष्यते।।**

**(मनु ९।१९६-१९७)**

**अस्याः स्याद्दत्तमिति पराचीनं पूर्वत्रानुषज्यते तेन विवाहेषु यद्धनं दत्तमिति सम्बन्धात् वैवाहिकधनसात्रप्रतीतेर्न यावद्धनविषयम्।।२७।।**

**तथा यमः।**

**आसुरादिषु यद्द्रव्यं विवाहेषु प्रदीयते।**

**विवाहक्रियायां पूर्वापरीभूतायां यद्द्रव्यं प्रदीयत इति यौतकधनमात्रगोचरत्वमेव प्रतीयते।।२८।।**

**न च विवाहात् पूर्वं परतो वा स्त्रिया लब्धस्याप्रजः स्त्रीधनस्य गतेरश्रूयमाणत्वात् ब्राह्मादिपदं स्त्रीपरमिति वाच्यं पूर्वापरलब्धस्य विस्तरेण गतेर्वक्ष्यमाणत्वात्।।२९।।**

ब्राह्मादिविवाहेन भार्य्यात्वं प्राप्ताया यावद्धनगोचरमेव वचनमिति मिताक्षरोक्तमपाकर्त्तुमाशङ्कते न चेति। नेदं वचनमिति। अप्रजः स्त्रीधनं भर्त्तुरिति याज्ञवल्क्यवचनमित्यर्थः। बन्धुदत्तमितिवचन-स्येति। बन्धुदत्तं तथा शुल्कमन्वाधेयकमेव च। अप्रजायामतीतायां बान्धवास्तदवाप्नुयुरिति वक्ष्यमाण-बान्धवपदोपात्तभ्रात्रधिकारबोधकवचनस्येत्यर्थः। निर्विषयेति। तत्राप्यनेन वचनेन भवन्मते भर्तृधिकार सिद्धेरित्याशयः। अथ तद्विरोधादस्योत्सर्गवचनस्य बन्धुदत्तशुल्केतरविवाहपूर्वसमयलब्धविवाहोत्तर-पुत्रादिदत्तविषयत्वमस्त्वित्यत आह मनुविरोधाच्चेति। अनुषज्यत इति। न तु प्राजापत्येषु इत्यनन्तरं भार्य्यात्वं प्राप्ताया इत्यध्याहारोऽनुषङ्गापेक्षया तस्य गुरुत्वादिति भावः। एवञ्चैतदेकवाक्यतया याज्ञवल्क्यवचनेऽपि दत्तमित्यस्यैवाध्याहारो युक्तो न तु भार्य्यात्वं प्राप्तया इत्यस्येति भावः। न यावद्धनविषयत्वमिति। यौतकेतरधने भर्तृसत्त्वेऽपि भ्रात्राद्यधिकारस्य वक्ष्यमाणत्ववादिति भावः। विवाहक्रियायामिति। पूर्वापरीभूतायां वृद्धिश्राद्धावधिसप्तपदीगमनपर्य्यन्तायामित्यर्थः।।२७-२९।।



# चतुर्थः अध्यायः

## तृतीय परिच्छेदः

सम्प्रति अप्रजःस्त्रीधनाधिकारिणः कथ्यन्ते॥१॥

तत्र याज्ञवल्क्यः।

अप्रजास्त्रीधनं भर्त्तुर्ब्राह्मादिषु चतुर्ष्वपि॥२॥

(याज्ञवल्क्य २।१४६)

ब्राह्म आदिर्येषां चतुर्णां ते दैवार्षप्राजापत्यगान्धर्वाश्चत्वारो ब्राह्मेण सह पञ्च भवन्ति। ब्राह्मदैवार्षगान्धर्वप्राजापत्येष्विति (मनु ९।१९६) मनुना पञ्चानामुक्तत्वात् तेषु विवाहेषु वर्त्तमानेषु यद्धनं स्त्रिया लब्धं तदप्रजायामतीतायां भर्त्तुरेव भवतीति। प्रजा सन्ततिः॥३॥

न पुनर्ब्राह्मादिना परिणीताया यत् यावद्धनं विवाहात् पूर्वं परतो वा तया लब्धं तत् सर्वं भर्त्तुरिति व्याख्यानं युक्तं ब्राह्मादिष्विति कालार्थत्वात् निर्देशस्य ब्राह्मादिपदानां स्त्रीपरत्वे एकत्वेन षष्ठ्या च निर्देशः स्यात् यत्त्वस्याः स्यादिति स्त्रिया एकत्वेन षष्ठ्या च निर्दिष्टत्वात्। विवाहकाले लक्षणायाञ्च वर्त्तमानसम्बन्धेन लक्षणा स्यात् स्त्रीपरत्वे चातिक्रान्तविवाह-क्रियासम्बन्धेन लक्षणा जघन्या सा चायुक्ता, न च विवाहितस्त्रीवाचकत्वं ब्राह्मादिपदानां तत्तल्लक्षणविवाहपरत्वेन मन्वादिभिर्निर्दिष्टत्वात्। तदाह मनुः। अष्टाविमान् समासेन स्त्री-विवाहान्निबोधतेत्युपक्रम्य ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथासुर इत्यादि। (मनु ३।२१)

तथा नारदः।

अष्टौ विवाहा वर्णानां संस्कारार्थं प्रकीर्त्तिताः।
ब्राह्मस्तु प्रथमस्तेषामित्यादि॥ (नारद १२।३९)

तथा विष्णुः।

अष्टौ विवाहा भवन्ति ब्राह्मो दैव इत्यादि॥४॥

(विष्णु २४।१८)

अतो विवाहकाललब्धस्त्रीधनविषयं ब्राह्मादिवचनमिति विश्वरूपोक्तमादरणीयम्॥५॥

दूषणान्तरमाह विवाहकाले लक्षणायामिति। वर्त्तमानसम्बन्धेनेति। वर्त्तमानः कालस्तत्र विवाहस्य यः सम्बन्धोऽधिकरणत्वं तद्रूपेण लक्षणा स्यादित्यर्थः। अतिक्रान्तेति। अतिक्रान्ता या विवाहक्रिया तत्सम्बन्धेन तज्जन्यसंस्कारवत्त्वरूपेण। जघन्येति। विवाहाधिकरणकालत्वापेक्षया तज्जन्यसंस्कार-वत्त्वस्य लक्ष्यतावच्छेदकस्य गुरुत्वादिति भावः। उपलक्षण चैतत्कालपरत्वे लक्षणा निरुढ़ा, स्त्रीपरत्वे पुनराधुनिकी तासु तद्धनस्य तद्दानस्य चाधारत्वबाधोऽपीति द्रष्टव्यम्। केचित्तु अतिक्रान्तेति अतीत इत्यर्थः अतीतत्वं हि वर्त्तमानध्वंसप्रतियोगित्वं तथाच वर्त्तमानकाललक्षणापेक्षयाऽतीतविवाहक्रिया-सम्बन्धेन लक्षणायां ध्वंसप्रतियोगित्वरूपाधिकपदार्थप्रवेशेन गौरवादिति भाव इत्याहुः। ब्राह्मादिपदानां स्त्रीषु लक्षणामसहमान इत्याह न चेति। स्त्रीवाचकत्वमिति। दारादिपदवत् नियतपुंलिङ्गत्वमेषा-मित्याशयः।।१-५।।

आसुरादिविवाहसमयलब्धन्तु स्त्रीधनं जीवत्यपि भर्त्तरि माता गृह्णीयात्, तदभावे पिता, मातापित्रोस्तदिष्यत इत्यत्र क्रमावगतेः युगपदधिकारे पित्रोरित्येवाभिदध्यात् कन्याधने च मातुरभावे पितुरधिकारश्रवणात् अत्रापि तथात्वस्यैवोचितत्वात्॥६॥

तथा बौधायनः।

**रिक्थं मृतायाः कन्याया गृह्णीयुः सोदराः स्वयम्।**
**तदभावे भवेन्मातुस्तदभावे भवेत् पितुः॥७॥**
**तदनेन कन्याधनं व्याख्यातम्॥८॥**

**न च कन्याधन इवात्रापि प्रथमं भ्रात्रधिकारः स्यादिति वाच्यं वचनाभावात् मातापित्रोरेवाधिकारश्रुतेः॥९॥**

माता गृह्णीयादिति। एवञ्च शेषेषु पितृगामि तदिति याज्ञवल्क्यवचने पितृपदे एकशेषो द्रष्टव्यः यद्यपि धनसम्बन्धस्य प्रत्येकपरिसमाप्तत्वेन साहित्यासम्भवेऽपि पाणिभ्यान्तूपसंगृह्यादाविव द्वन्द्वबलात् सहत्वप्रतीतौ युगपद्धनाधिकार एव प्रतीयते तथापि पित्रोरित्यनेनापि तथार्थसिद्धेर्मातापित्रोरिति यत् क्रमाभिधानं तन्मातुरभावे पितुरिति क्रमिकार्थमेवेत्याह युगपदिति। पित्रोरिति। सकृदुच्चरितपितृपदस्य जनकत्वेन लक्षणया युगपदुभयोपस्थितिसम्भवादिति भावः। ननु लक्षणायां प्रमाणाभावात् अत्रापि प्रातिपदिकपितृपदात् प्रथमं जनकत्वस्य पुंस्त्वेनोपस्थितौ पश्चात् द्विवचनोपनीतद्वित्वान्वयानुपपत्त्यैवैकशेषकल्पनया मातुरुपस्थितिरिति क्रमाभिधानमस्त्येव अतएव पितरौ भ्रातरस्तथेति याज्ञवल्क्यवचने अनयैव रीत्या पितृक्रमावगमं वक्ष्यतीति चेन्मेवं पितरौ भ्रातरस्तथेत्यत्र तदभावे मातुरिति स्फुटक्रमिकाधिकारबोधकविष्णुवचनदर्शनात् जनकपुंस्येव पितृपदस्य तात्पर्य्यमवधार्य्यते अनन्तरञ्च द्विवचनबलेनैकशेषकल्पनया मातुरुपस्थितौ युक्तः क्रमाधिकारः इह तु तथाविधविशेषवचनाभावात् द्वन्द्वबललभ्यार्थविशेषपरित्यागे हेत्वभावात् हन्तैवं मातापित्रोरित्युक्तावपि क्रमिकाधिकारबोधकतथाविधवचनान्तराभावात् वाक्यावगतयुगपदधिकार एव कुतो न स्यात् अतएव शेषेषु पितृगामि तदित्येकशेषेण युगपदधिकार एव याज्ञवल्क्यवचनेनोक्त इत्यत आह कन्याधन इति। अत्रापीति। तथा च द्वन्द्वादेकशेषाद्वा साहित्यावगमो न धनसम्बन्धापेक्षया तस्य प्रत्येकपरिसमाप्तत्वात् किन्त्वभिधानापेक्षया युगपज्ज्ञानं श्राद्धानि षोड़श इतिवत् क्रमिकयोरपि सम्भवतीति किमधिकारः क्रमेण युगपद्वेत्याकाङ्क्षायामेकत्रदृष्टन्यायात् कन्याधनवत् तथाविधोढ़ाधनेऽपि क्रमेणैवाधिकारः कल्प्यत इति भावः। तदनेनेति। न त्वेतन्निरूपणं प्रकरणान्तरे पुनः करणीयमिति भावः। वाग्दत्ता मरणे तु वरदत्तावशिष्टं वरो गृह्णीयात्। तथा याज्ञवल्क्यः। दत्त्वा कन्यां हरन् दण्ड्यो व्ययं दद्याञ्च सोदरम्। मृतायां सर्वमादद्यात् परिशोध्योभयव्ययमिति। तथा चार्हतीत्यनुवृत्तौ शङ्खः। स्वञ्च शुल्कं वोढ़ेति। वाग्दानकाले यद येन दत्तं तत् तेनैव ग्राह्यमिति। सम्प्रदायः। अत्रापि यौतकधनेऽपि। ननु वचनाभावेऽपि एकत्रदृष्टन्यायादेव तथा स्यात् अत आह मातापित्रोरेवेति। एव कारेण भ्रातृव्यवच्छेदः तथाचानेनैव तदधिकाराकाङ्क्षानिवृत्तेर्न न्यायावसर इति भावः।।६-९।।

**यत् पुनः परिणयानन्तरं पितृमातृभर्तृकुलात् स्त्रिया लब्धं धनं तद्भ्रातृणामेव। तदाह याज्ञवल्क्यः।**

**बन्धुदत्तं तथा शुल्कमन्वाधेयकमेव च।**
**अप्रजायामतीतायां बान्धवास्तदवाप्नुयुः॥१०॥**
**(याज्ञवल्क्यः २।१४५)**

**बन्धुदत्तमिति मातापितृभ्यां यद्दत्तम् अतएव तत्पुत्राश्च भ्रातरो बान्धवाः॥११॥**
**तदाह वृद्धकात्यायनः।**

**पितृभ्याञ्चैव यद्दत्तं दुहितुः स्थावरं धनम्।**
**अप्रजायामतीतायां भ्रातृगामि तु सर्वदा॥**
**अप्रजस्त्वमात्रनिमित्तत्वेन भ्रातुरधिकारावगतेः॥१२॥**

**सर्वदापदेन ब्राह्मादिपैशाचान्तविवाहिताया अप्रजसो धनं भ्रातृगाम्येव भवतीति विश्वरूपोक्तमादरणीयम्॥१३॥**

**स्थावरपदाद्दण्डापूपन्यायादेवापरस्य धनस्य सिद्धिः॥१४॥**

**बन्धुदत्तपदेन कन्यादशायां यत् पितृभ्यां दत्तं तदुच्यते विवाहात् परतो लब्धधनस्यान्वाधेयपदेनोपात्तत्वात् विवाहकालीने च भर्त्तुः पित्रोर्वाधिकारात्॥१५॥**

पितृमातृभर्तकुलादिति। अन्वाधेयपदार्थ उक्तः। भ्रातृणामेवेति। न पुनर्भर्त्तुः पित्रोर्वेत्यर्थः। वचनक्रमानुरोधात् प्रथमं बन्धुदत्तमिति व्याचष्टे बन्धुदत्तमिति। कन्यादशायामित्यनुपदमेव वक्ष्यति अतएव वक्ष्यमाणवचनैकवाक्यतया पित्रोर्बन्धुपदार्थत्वादेव भ्रातरो बान्धवा इति बन्धोरपत्यानीति योगादिति भावः। बन्धुपदबान्धवपदयोरुक्तार्थत्वे प्रमाणमाह तदाहेति अप्रजस्त्वमात्रनिमित्तत्वेनेति। अतः कन्याया अपि अप्रजस्त्वाविशेषात् तद्विषयत्वमक्षतमिति बन्धुदत्तपदेनेत्यादिवक्ष्यमाणग्रन्थसङ्गतिरिति। अतो राक्षसादौ शुल्काभावादित्यादिवक्ष्यमाणपक्षनिरासोपष्टम्भकमाह सर्वदेति।।१०-१५।।

**अन्वाधेयमाह कात्यायनः।**

**विवाहात् परतो यत्तु लब्धं भर्त्तृकुलात् स्त्रिया।**
**अन्वाधेयं तदुक्तन्तु लब्धं बन्धुकुलात्तथा॥१६॥**

**भर्त्तृकुलात् श्वशुरादेः, बन्धुकुलात् पितृमातृकुलात्॥१७॥**

**तथापरमाह ऊर्ध्वं लब्धन्तु यत् किञ्चित् संस्कारात् प्रीतितः स्त्रिया। भर्त्तुः सकाशात् पित्रोर्वा अन्वाधेयन्तु तद भृगुः॥१८॥**

**शुल्कमाह।**

**गृहोपस्करवाह्यानां दोह्याभरणकर्मिणाम्।**
**मूल्यं लब्धन्तु यत् किञ्चित् शुल्कं तत् परिकीर्त्तितम्।।१९।।**

**गृहादिकर्म्मिभिः शिल्पिभिस्तत्कर्मकरणाय भर्त्रादिप्रेरणार्थं स्त्रियै यदुत्कोचदानं तत् शुल्कं तदेव मूल्यं प्रवृत्त्यर्थत्वात्॥२०॥**

**व्यासोक्तं वा यथा।**

**यदा नेतुं भर्त्तृगृहे शुल्कं तत् परिकीर्त्तितम्॥२१॥**

**भर्त्तृगृहगमनार्थमुत्कोचादि यद्दत्तं तच्च ब्राह्मादिष्वविशिष्टं तदेवमादिकमप्रजःस्त्रीधनं भ्रातरो गृह्णीयुः॥२२॥**

**न पुनरासुरादिषु विवाहेषु यत् कन्याभ्यः शुल्कदानं तदभिप्रायम् आसुरमात्रगोचरत्वात् तच्छुल्कस्य। यथोक्त याज्ञवल्क्येन, आसुरो द्रविणादानाद्गान्धर्वः समयान्मिथः।**

**राक्षसो युद्धहरणात् पैशाचः कन्यकाच्छलात्॥२३॥**

**(याज्ञवल्क्य १।६१)**

प्रागुक्तमप्यन्वाधेयस्यातिव्यवहितत्वात् उपस्थितिसौकर्य्यार्थं पुनराह अन्वाधेयमाहेति। भृगुराहेति शेषः। गृहोपस्करेति। उपस्करः कटककुण्डलहारादिः। सूर्पादीति केचित्। वाह्यं वलीवर्दादि। गृहादिकर्मिभिरिति। गृहादिकर्मिभिः शिल्पिभिर्यद्गृहादिशिल्पकरणं तन्निमित्तशिल्पिरूपभर्त्रादिप्रेरणार्थमित्यर्थः। न च स्वयमेव स्त्रिया गृहादिशिल्पेन यन्मूल्यं लब्धं तत् कथं न व्याख्यातमिति वाच्यं तस्य प्राप्तं शिल्पैस्तु यद्वित्तं प्रीत्या चैव यदन्यतः। भर्त्तुः स्वाम्यं भवेत्तत्र शेषन्तु स्त्रीधनं स्मृतमित्यनेन स्त्रीधनत्वनिरासात् तत्र भर्त्तुरेवाधिकारात् बन्धुदत्तमिति वचनस्य च प्रकरणात् स्त्रीधनविषय-

त्वादित्यन्यथा व्याख्यातं भर्त्रादिप्रेरणार्थमिति। उत्कोचः कथं शुल्कं मूल्यस्यैव शुल्कत्वादत आह तदेवेति। व्यासोक्तं वेति। वा समुच्चये। तच्चेति। एतेन वक्ष्यमाणासुरादिविवाहप्राप्तशुल्कपरत्वाभावोऽस्य सूचितः। चण्डेश्वरादिपुरस्कृतं प्राचीनमतं दूषयति न पुनरिति। आसुरमात्रेति। तथाचासुरादीत्यादिना राक्षसपैशाचग्रहणमसङ्गतमिति भावः। आसुरमात्रे शुल्कं नेतरयोरित्युक्तार्थे प्रमाणमाह यथोक्तमिति।।१६-२३।।

**अतो राक्षसादौ शुल्काभावात् शुल्कसाहचर्य्येणामुरादिष्वेव यद्धनं तन्मात्रस्य भ्रातृगामित्वाभिधानं हेयम्। तथा तस्य स्त्रीधनत्वाभावाच्च पित्रादिगृहीतधनस्य च शुल्कत्वेन कीर्त्तनात्। तथा मनुः।**

**न कन्यायाः पिता विद्वान् गृह्णीयाच्छुल्कमणवपि।**
**गृह्णन् हि शुल्कं लोभेन स्यान्नरोऽपत्यविक्रयी।।**

**(मनु ३।५१)**

**पितेत्युपलक्षणं तेन भ्रात्रादिरपि धनं गृह्णन् शुल्कग्राही तेन पित्रादिगृहीतमेव परं शुल्कं भवतीत्युक्तम्।।२४।।**

**अतो यदुक्तम् आसुर एव शुल्करूपस्त्रीधनसम्भवात् तदेकवाक्योपात्तयोर्बन्धुदत्तान्वाधेययोरप्यासुरविवाहगोचरयोरेव भ्रातुरधिकार इति निरस्तम्।।२५।।**

**किन्तुक्तशुल्करूपस्त्रीधनस्य सर्वविवाहेष्वेव सम्भवात् सर्वत्रैव भ्रात्रधिकारो वाक्यात् विशेषानवगमात्।।२६।।**

**तथा गौतमवचनमपि कात्यायनवचनसमानार्थम्। यथा भगिनीशुल्कं सोदर्य्याणामूर्ध्वं मातुः पितुश्च पूर्वं चैके।।२७।।**

**(गौतम २८।२३)**

**अस्यार्थः प्रथमं सोदर्य्याणां तेषां पुनरभावे मातुः तदभावे पितुः पूर्वञ्चैक इति परमतम्।।२८।।**

शुल्कसाहचर्य्यादासुरादित्रिषु यद्बन्धुदत्तादिधनं तदेव भातृगामीति यत् कैश्चिदुक्तं तदपि दूषयति अत इति। राक्षसादावित्यादिना पैशाचपरिग्रहः तथाच तयोः शुल्काभावात् तत्साहचर्य्येण तदुभयसम्बन्धिधनस्य भ्रातृगामित्वाभिधानमसङ्गत्या हेयमित्यर्थः। अथादिपदमपहाय आसुर एवेति वक्तव्यमित्यत आह तथेति। उपलक्षणमिति। कन्यादातृमात्रोपलक्षणमित्यर्थः। शुल्कसाहचर्य्यादिति यदुक्तं तस्य राक्षसादावादिपदग्राह्ये शुल्काभावदोषेण हेयतोक्ता अधुना पुनरासुरमात्रीयं बन्धुदत्तादिधनं शुल्कसाहचर्य्यात् भ्रातृगामीति मतं निरस्यति अत इति। यतः शुल्कं कन्यादातुरेव न कन्याया अत इत्यर्थः। किन्तूक्तेति। गृहोपस्कर इत्यादिना यदानेतुमित्यादिना चोक्तेत्यर्थः एषु शुल्कपरिभाषाया अप्येतदेव प्रयोजनं प्रयोजनान्तरस्यादृष्टत्वात् इत्यपि बोध्यम्। वाक्यादिति। सामान्यतः एव बन्धुदत्तमित्यादि वाक्यादित्यर्थः विशेषाश्रवणात् आसुरादिविशेषाश्रवणात्। कात्यायनसमानार्थमिति। पितृभ्याञ्चैव यद्दत्तमित्यादि कात्यायनसमानार्थमित्यर्थः। गौतमवचनमाह भगिनीशुल्कमिति। अत्र शुल्कपदेन पारिभाषिकशुल्कस्यैव ग्रहणं शास्त्रीयपरिभाषाया अन्तरङ्गत्वेन शीघ्रोपस्थितिकत्वात् नतु मूल्यरूपस्येति भावः। परमतमिति। सोदरानन्तरं पितुः, तदनन्तरं मातुरिति, परमतमित्यर्थः।।२४-२८।।

**अतः प्रथमं सोदराणां तदभावे मातुः मातुरभावे पितुः एषां पुनरभावे तद्धनं भर्त्तुः। यथा कात्यायनः।**

बन्धुदत्तन्तु बन्धूनामभावे भर्तृगामि तत्॥२९॥

बन्धूनामभाव इत्यनेन भ्रातुरभाव इत्यपि सूचितं भ्रातुरभावे पित्रोरधिकारात् दण्डापूपन्यायात् तत्सिद्धेः॥३०॥

भर्तुपर्य्यन्ताभावे पुनरिदमुच्यते।

यदाह बृहस्पतिः।

मातुःस्वसा मातुलानी पितृव्यस्त्री पितृस्वसा।
श्वश्रूः पूर्वजपत्नी च मातृतुल्याः प्रकीर्त्तिताः॥
यदासामौरसो न स्यात् सुतो दौहित्र एव वा।
तत्सुतो वा धनं तासां स्वस्त्रीयाद्याः समाप्नुयुः॥३१॥

औरसपदेन पुत्रकन्ययोरुपादानं तयोः सर्वापवादकत्वात् सुतपदेन च सपत्नीपुत्रस्य।

सर्वासामेकपत्नीनामेका चेत् पुत्रिणी भवेत्।
सर्वास्तास्तेन पुत्रेण प्राह पुत्रवतीर्मनुरितिस्मृतेः॥

(मनु ९।३८१)

न तु सुतपदमौरसविशेषणं वैयर्थ्यात्, सपत्नीपुत्रसद्भावेऽपि स्वस्त्रीयाद्यधिकारापत्तेश्च॥३२॥

औरसपुत्रकन्ययोः सपत्नीपुत्रस्य चाभावे दौहित्रस्याधिकारिता॥३३॥

तत्सुत इति तच्छब्देन स्वपुत्रसपत्नीपुत्रयोरुपादानं तेन तत्पुत्रयोरधिकारो न तु दौहित्रपुत्रस्यापि तस्य पिण्डदाने बहिर्भावात्॥३४॥

स्वमतमुपसंहरति अतः प्रथममिति। तेषां भ्रातृमातृपितॄणाम्। बन्धुदत्तं मातापितृदत्तम्। भ्रातुरभाव इति। भ्रातुरभाव एव पित्रोरधिकारात् तयोरभावे भर्त्रधिकारे प्रतिपादिते भ्रात्रभावे तदधिकारस्य दण्डापूपन्यायसिद्धत्वादिति भावः। औरसपदेनेति। विशेषणीभूतलिङ्गपरित्यागेन कन्यापुत्रयोर्द्वयोरेव प्रकृत्यर्थत्वादिति भावः। विशेषणीभूतलिङ्गपरित्यागे हेतुमाह तयोरिति। तथाच लिङ्गस्य विवक्षणे पुत्रानन्तरकन्याधिकारविधिविरोधः स्यादिति भावः। एतञ्च दत्तिमादेरप्युपलक्षणम्। सपत्नीपुत्रस्येति। तद्भगिन्या अपीति बोध्यं पुंस्त्वस्याविवक्षितत्वात् तस्या अपि स्वपुत्रद्वारेण तद्भर्त्रादिपुरुषत्रयपिण्ड दातृत्वादिति। सपत्नीपुत्रस्याभावे दौहित्रस्याधिकारितेत्ययुक्तमेतत्, दौहित्रस्योपरिष्टप्रजात्वेन स्वभोग्यभर्त्तुपिण्डदातृत्वेन च प्रागधिकारस्यैवोचितत्वात् वन्ध्याविधवादुहितृसत्त्वेऽपि प्राग्दौहित्राधिकारस्योक्तत्वात् अत्रौरसपुत्रकन्ययोरित्यविशेषितकन्यापदात्तदभावे दौहित्रस्याधिकार इति स्वोक्तविरोधाच्च। तस्मात् सपत्नीपुत्रवन्ध्याविधवादुहितॄणां प्रागेव युक्तो दौहित्राधिकार इति बोध्यम् अतएव तत् सुत इत्यत्रापि पाठक्रमो न ग्राह्यः पौत्रस्य वन्ध्यादिदुहितृसपत्नीपुत्रदौहित्रेभ्योऽयौतकधने प्रागधिकारस्योक्तत्वात्। न च दौहित्र एव वेत्यच एव वाशब्दाभ्यां जघन्यत्वावगमात् वाचनिक एव सपत्नीपुत्रानन्तरं दौहित्राधिकार इति वाच्यं सुतपदस्य सपत्नीपुत्रपरतायामेवं स्यात् सैव त्वसिद्धा प्रमाणाभावात्। नन्वेवं सपत्नीपुत्रसत्वेऽपि भगिनीपुत्रस्याधिकारः स्यादिति चेत् एतन्मध्ये पित्राद्युपादानाभावात् तत् सत्त्वेऽपि तर्हि किन्न स्यात्, अथ भर्तृपितृभ्रात्रधिकारानन्तरं सहितायां लिखनात् तेशामभाव एवैषामधिकार इति चेत् तर्हि पुत्राद्यनन्तरस्यापि सुतरां प्राप्तेरनर्थकमेवौरसाद्युपादानं तस्मादौरसादिपदं पूर्वपूर्वाधिकारिमात्रोपलक्षणं तेषामधिकारक्रमस्य वचनान्तरेणैव प्राप्तेस्तांश्चानूद्य तेषामनन्तरं भगिनीपुत्रादीनामधिकारमात्रबोधकं बृहस्पतिवचनमिति रहस्यम्॥२९-३४॥

**तदेषां पुत्रादीनां भ्रात्रादिभर्तृपर्य्यन्तानाञ्चाभावे सत्स्वपि श्वशुरभ्रातृश्वशुरादिषु सपिण्डेषु, भगिनीपुत्रादीनामधिकारिता, अनन्यगतेर्वचनात्, स्त्रीणां मातृतुल्यत्वप्रतिपादनेनामीषां पुत्रतुल्यत्वज्ञापनेन पिण्डदातृत्वसूचनस्य दायभागप्रकरणे धनाधिकारज्ञापनैकप्रयोजनकत्वात्।।३५।।**

**तत्र स्वस्त्रीयाद्या इतिवचनात् भगिनीसुतस्वभर्त्तृभागिनेयदेवरपुत्रभ्रातृश्वशुरपुत्रभ्रातृसुतजामातृदेवराणां पूर्वपूर्वस्याभावे परपरस्याधिकारे देवरस्यैव सर्वशेषेऽधिकारापत्तेर्महाजनविरोध इति वस्तुबलमालम्ब्य वचनं वर्ण्यते। तत्र मनुना त्रयाणामुदकं कार्य्यं त्रिषु पिण्डः प्रवर्त्तत इति (मनु ९।१८६) दायभागप्रकरणे कीर्त्तनात् याज्ञवल्क्येनापि पिण्डदोऽशं हरश्चैषामिति (याज्ञवल्क्य २।१३३) पिण्डदानेनाधिकारदर्शनात् पुत्रस्यापि सातिशयपिण्डदानेन नरकत्राणकारणतया मुख्यभावेनाधिकारावगतेः।**

**मातुलो भागिनेयस्य स्वस्त्रीयो मातुलस्य च।**
**श्वशुरस्य गुरोश्चैव सख्युर्मातामहस्य च।।**
**एतेषां चैव भार्य्याभ्यः स्वसुर्मातुः पितुस्तथा।**
**श्राद्धदानन्तु कर्त्तव्यमिति वेदविदां स्थितिः।।**

**इति वृद्धशातातपवचनात्।।३६।।**

**अमीषां पिण्डदत्वप्रतिपादनात्, अयं पिण्डदानविशेषादधिकारक्रमः। तत्र प्रथमं देवरः तत्पिण्डतद्भर्त्तृपिण्डतद्भर्त्तृदेयपूर्वपुरुषत्रयपिण्डदातृत्वात् सपिण्डत्वाच्च तद्धनेऽधिक्रियते। तदभावे भ्रातृश्वशुरदेवरयोः सुतः, तत्पिण्डतद्भर्त्तृपिण्डतद्भर्त्तृदेयपूर्वपुरुषद्वयपिण्डदातृत्वात् सपिण्डत्वाच्च पितृव्यस्त्रीधनेऽधिकारी। तदभावे त्वसपिण्डोऽपि भगिनीपुत्रः, तत्पिण्डतत्पुत्रदेयतत्पित्रादिपिण्डत्रयदानात् मातृस्वसृधनेऽधिकारी। तदभावे स्वभर्त्तृभागिनेयः, पुत्रात् भर्त्तुर्दुर्बलत्वात् तत्स्थानपातिनोरपि तथैव बलाबलस्य न्याय्यत्वात् तद्भर्त्तृदेयपूर्वपुरुषत्रयपिण्डदानात् तत्पिण्डदानात् तद्भर्त्तृपिण्डदानाच्च मातुलानीधनेऽधिकारी। तदभावे भ्रातृसुतः तत्पितृपितामहयोस्तस्याश्च पिण्डदानात् पितृस्वसृधनेऽधिकारी। तस्याप्यभावे श्वशुरयोः पिण्डदानात् जामाता श्वश्रूधनेऽधिकारीति।।३७।।**

**अयं क्रमो ग्राह्यः स्वस्त्रीयाद्या इति तु न क्रमार्थं किन्त्वधिकारिमात्रज्ञापनार्थपरम्।।३८।।**

**षणां पुनरेतेषामभावे श्वशुरभ्रातृश्वशुरादेः सपिण्डानन्तर्य्यकृतो धनाधिकारो बोद्धव्यः।।३९।।**

भर्त्तृपर्य्यन्ताभावे इत्यादिनोक्तमुपसंहरति। तदेषामिति। दौहित्रान्तशृङ्खलायां श्वशुरभ्रातृश्वशुरादेरगणनात् तेषु सत्सु इत्युक्तम्। वस्तुबलमिति। उपकारकत्वरूपं वस्तुबलमित्यर्थः। उक्त वस्तुबलस्य धनहरणप्रयोजकत्वे मानमाह त्रयाणामिति। अधिक्रियते अधिकारी भवति। ननु स्वस्त्रीयः पित्रादित्रयपिण्डदाता भर्त्तृभागिनेयश्च श्वशुरादित्रयपिण्डदाता तथाच तुल्यपिण्डदातृत्वे कथं भर्त्तृभागिनेयस्य स्वस्त्रीयबाध्यता इत्यत आह, पुत्रादिति। पुत्रत्वातिदेशेन पुत्रदेयपिण्डत्रयदातृत्वेन च स्वस्त्रीयस्य पुत्रस्थानपातिता, भर्त्तृदेयपिण्डत्रयदातृत्वेन भर्त्तृभागिनेयस्य भर्त्तृस्थानपातितेत्यर्थः। तथाच न्यायबलेनैव भर्त्तृभागिनेयस्य स्वस्त्रीयबाध्यतेति भावः।।३५-३९।।

**न च सपिण्डाभावे सतीदं वचनमिति वाच्यम् अस्यामधिकारिशृङ्खलायां देवरदेवरसुतयोः भ्रातृश्वशुरसुतस्य चाधिकारज्ञापनात् आसन्नतरश्वशुरादेः परित्यागात्।।४०।।**

**अतो वचनार्थापरिज्ञानकृतो व्यवहारः प्रमाणपरतन्त्रैरतन्त्रीकर्त्तव्यः।।४१।।**

**इत्यतिगहनमुक्तमप्रजःस्त्रीधनम्।।४२।।**

वचनार्थपरिज्ञानेति। उक्तमनुयाज्ञवल्क्यवचनयोस्तात्पर्य्यार्थापरिज्ञानकृत इत्यर्थः। व्यवहारः स्वस्त्रीयाद्या इति पाठक्रमेणाधिकारव्यवहारः। प्रमाणपरतन्त्रैः प्रमाणैकसापेक्षैः। अतन्त्रम् अप्रयोजकम् अप्रमाणमिति यावत्। अत्रायं स्त्रीधनाधिकारक्रमनिर्णयः। तत्र कन्याधने प्रथमं सोदरभ्रातुस्तदभावे मातुस्तदभावे पितुरधिकारः वरदत्तातिरिक्तवाग्दत्ताधनेष्वेवं, वरदत्तधने तु वरस्याधिकार इति। ऊढ़ाया यौतकधने प्रथमं कुमारी, तदभावे वाग्दत्ताऽधिकारिणी, एतयोरभावे ऊढ़योः पुत्रवतीसम्भावितपुत्रयोर्युगपदधिकारः। एकस्या अभावेऽपरायाः, एतयोरभावे वन्ध्याविधवयोस्तुल्याधिकारः, एकाभावे चापरायाः, ततः पुत्रदौहित्रपौत्रप्रपौत्रसपत्नीपुत्रपौत्रप्रपौत्राणां क्रमेणाधिकारः ग्रन्थकृन्मते तु सपत्नीपुत्रानन्तरं दौहित्रस्याधिकार इति विशेषः। ततो ब्राह्मादिविवाहपञ्चकसमयलब्धयौतकधने भर्त्ता, भ्राता माता पिता चेति क्रमः, आसुरादिविवाहत्रयसमयलब्धयौतकधने माता पिता भ्राता भर्त्ता चेति क्रमः, ततो देवरः, ततो देवरपुत्रभातृश्वशुरपुत्रौ, ततो भगिनीपुत्रः, ततो भर्तृभागिनेयः, ततो भ्रातृपुत्रः, ततो जामाता, ततः श्वशुरः, ततो भ्रातृश्वशुरः, तत आनन्तर्य्यक्रमेण सपिण्डाः, ततः सकुल्याः, ततः समानोदका इति। यौतकातिरिक्तेऽपि पितृदत्ते प्रथमं कुमारी, ततः पुत्रः, ततः पुत्रवतीसम्भावितपुत्रे, ततः पौत्रदौहित्रप्रपौत्रसपत्नीपुत्रपौत्रप्रपौत्राः, ततो बन्ध्या विधवा च युगपदधिकारिण्यौ, ततो ब्राह्मादिक्रमेणैव पूर्ववत् क्रमः। पितृदत्तातिरिक्ते अयौतकधने तु पुत्रकुमार्य्योर्युगपदधिकारः, तयोरभावे पुत्रवतीसम्भावितपुत्रयोः, ततः पौत्रदौहित्रप्रपौत्रसपत्नपुत्रपौत्रप्रपौत्राः क्रमेणाधिकारिणः, ततो वन्ध्या विधवा च युगपदधिकारिण्यौ ततः पूर्ववत् ब्राह्मणादिक्रम इति।।४०-४२।।



## पञ्चमः अध्यायः

**सम्प्रति विभागानधिकारिणः कथ्यन्ते तत्पर्य्युदासेनाधिकारिज्ञापनार्थम्। तत्रापस्तम्बः। सर्वे हि धर्मयुक्ता भागिनो द्रव्यमर्हन्ति यस्त्वधर्मेण द्रव्याणि प्रतिपादयति ज्येष्ठोऽपि तमभागं कुर्वीतेति।।१।।**

**इदं बालेनाकुलीकृत्य पठितं यस्तु धर्मेण द्रव्याणि प्रतिपादयति ज्येष्ठस्तं पितृसमभागं कुर्वीतेति तदनाकारम्।।२।।**

**तथा अपपात्रितस्य रिक्थपिण्डोदकानि निवर्त्तन्ते। अपपात्रितो भिन्नोदकीकृतः।।३।।**

**तथा बृहस्पतिः।**

**सवर्णाजोऽप्यगुणवान्नार्हः स्यात् पैतृके धने।**
**तत्पिण्डदाः श्रोत्रिया ये तेषां तदभिधीयते।।**
**उत्तमर्णाधमर्णेभ्यः पितरं त्रायते सुतः।**
**अतस्तद्विपरीतेन नास्ति तेन प्रयोजनम्।।**
**तया गवा किं क्रियते या न धेनुर्न गर्भिणी।**
**कोऽर्थः पुत्रेण जातेन यो न विद्वान् न धार्मिकः।।**
**शस्त्रशौर्य्यार्थरहितस्तपोविज्ञानवर्जितः।**
**आचारहीनः पुत्रस्तु मूत्रोच्चारसमस्तु सः।।४।।**

**आपस्तम्बस्यायमर्थः पित्रादेरौर्ध्वदेहिकस्य कर्मणोऽसंस्कृतः सुतः श्रेष्ठो नापरो वेदपारग इति।।५।।**

पुन्नाम्नो नरकात् यस्मात् त्रायते पितरं सुतः। (मनु ९/१३८। विष्णु १५।४३)

**इत्यादिवचनेन पुत्रकर्त्तृकतया महाफलश्रुतेस्तत्कर्मवेतनं, धनसम्बन्धित्वम् अतस्तदकुर्वतः कुतो वेतनम्। अतएवाह मनुः।**

**सर्व एव विकर्मस्था नार्हन्ति भ्रातरो धनम्।।६।।**

**(मनु ९।२१४)**

**तथा अनंशौ क्लीवपतितौ जात्यन्धबधिरौ तथा।**
**उन्मत्तजड़मूकाश्च ये च केचिन्निरिन्द्रियाः।।७।।**

**(मनु ९।२०१)**

अथ दायभागो निरूपणीय इति प्रतिज्ञायाम् अनधिकारिनिरूपणम् अप्रस्तुतमत आह तत्पर्य्युदासेनेति। तथाच तद्भिन्नाधिकारिकतया दायभागनिरूपणे तदपि प्रकृतमेवेति भावः। ज्येष्ठोऽपीति। प्रतिपादयतीत्यनेनान्वयः। बालेन तन्नाम्ना निबन्धकारेणेत्यर्थः। भिन्नोदकीकृत इति। पातित्यादिदोषेण येन सहैकमुदकं न पीयते व्यवहारानर्ह इति यावत्। उत्तमर्णाधमर्णेभ्य इति। धर्मपरोऽयं निर्देशः। उत्तमानां देवर्षिपितृणाम् अधमानां कीटादीनाम् ऋणम् अवश्यापाकरणीयत्वेन ऋणतुल्यं तेभ्य इत्यर्थः। बहुवचनन्तु व्यक्तिभेदात्। असंस्कृतोऽनुपनीतः। महाफलश्रुतेरित्यनन्तरं महानिष्टनिवारणश्रुतेश्चेत्यपि बोध्यं तेनोक्तपुन्नामनरकत्राणस्य सर्वपुत्रकर्त्तृकत्वाभावेऽपि न क्षतिः। विकर्मस्थाः और्ध्वदेहिकस्य कर्मणो विरोधीनि यानि कर्माणि अगम्यागमनादीनि तत्कारिण इत्यर्थः। जातिपदमिति। जन्मार्थकं जातिपदं, तेन जन्मान्धजन्धबधिरावित्यर्थः।।१-७।।

**क्लीवश्च कात्यायनेन दर्शितः।**

**न मूत्रं फेनिलं यस्य विष्ठा चाप्सु निमज्जति।**
**मेढ्रश्चोन्मादशुक्राभ्यां हीनः क्लीवः स उच्यते।।८।।**

**जातिपदमन्धबधिराभ्यां सम्बध्यते। वर्णानुच्चारको मूकः। वेदग्रहणासमर्थो जड़ः।।९।।**

**तदाह याज्ञवल्क्यः।**

**पतितस्तत्सुतः क्लीवः पङ्गुरुन्मत्तको जड़ः।**
**अन्धोऽचिकित्स्यरोगार्तो भर्तव्यास्ते निरंशकाः।।**

**(याज्ञवल्क्य २।१४१)**

**पद्भ्यां न गच्छतीति पङ्गुः।।१०।।**

**निरंशकत्वेऽपि पतिततत्सुतव्यतिरिक्ता भर्त्तव्याः।**

**तदाह देवलः।**

**मृते पितरि न क्लीवकुष्ठ्यन्मत्तजड़ान्धकाः।**
**पतितः पतितापत्यं लिङ्गी दायांशभागिनः।।**
**तेषां पतितवर्जेभ्यो भक्तवस्त्रं प्रदीयते।**
**तत्सुताः पितृदायांशं लभेरन् दोषवर्जिताः।।**

**लिङ्गी प्रव्रजितादिः।।११।।**

**पतितपदेन तत्सुतस्याप्युपादानं पतितोत्पन्नत्वेन पतितत्वात्। तदाह बौधायनः। अतीतव्यवहारान् ग्रासाच्छादनैर्बिभृयुः, अन्धजड़क्लीवव्यसनिव्याधितादीश्चाकर्मिणः पतिततज्जातवर्जम्।।१२।।**

**तत्र नारदः।**

पितृद्विट् पतितः पण्डो यश्च स्यादौपपातिकः।
औरसा अपि नैतेऽंशं लभेरन् क्षेत्रजाः कुतः॥१३॥
(नारद १३।२१)

आह कात्यायनः।

अक्रमोढ़ासुतश्चैव सगोत्राद् यस्तु जायते।
प्रव्रज्यावसितश्चैव न रिक्थं तेषु चार्हति॥१४॥

तत्सुत इति। पातित्यानन्तरमुत्पादितसुत इत्यर्थः। यद्यपि पतितपुत्रस्यापि पतितत्वमेव तथापि तस्य पृथगुपादानं तदितरेषां क्लीवादिपुत्राणामंशित्वज्ञापनार्थमिति। न च पातित्यानन्तरोत्पन्नस्य पतितत्वेनैव प्राप्तेः तत्सुत इति प्रागुत्पन्नपतितपुत्रसंग्रहार्थमित्येव किन्न स्यादिति वाच्यं क्लीवादिपुत्राणामिव तस्यापि निर्दोषत्वात् विभागार्हताया न्याय्यत्वात् तन्निषेधस्य वाचनिकत्वे चादृष्टार्थकल्पनागौरवापत्तेः। अचिकित्स्यरोगार्त्त इति श्रुतेर्यदि विभागानन्तरम् औषधादिना रोगनिवृत्तिस्तदा तस्याप्यंशित्वमेवेति प्रतिपत्तव्यम्।।८-१४।।

**हीनवर्णास्त्रीपरिणयनानन्तरम् उत्तमवर्णस्त्रीपरिणयने द्वयोरप्यक्रमोढ़ात्वं तयोः सगोत्रात् नियुक्तादुत्पन्नः क्षेत्रजः पुत्रो नार्हति धनम् अक्रमोढ़ायामपि सवर्णेन परिणेत्रा उत्पादितः पुत्रो धनाधिकारी क्रमोढ़ायामसवर्णजातोऽपि॥१५॥**

**तदाह कात्यायनः।**

**अक्रमोढ़ा सुतस्त्वृक्थी सवर्णश्च यदा पितुः।**
**असवर्णप्रसूतश्च क्रमोढ़ायाञ्च यो भवेत्॥**
**प्रतिलोमप्रसूतो यस्तस्याः पुत्रो न रिक्थभाक्।**
**ग्रामाच्छादनमात्रं तु देयं यद्बन्धुभिर्मतम्॥**
**बन्धूनामप्यभावे तु पित्र्यं द्रव्यं तदाप्नुयात्।**
**स्वपित्र्यं तद्धनं प्राप्तं दापनीया न बान्धवाः॥१६॥**

**अस्ति च क्लीवादीनां दारपरिग्रहः।**

**यद्यर्थिता तु दारैः स्यात् क्लीवादीनां कथञ्चन।**
**तेषामुत्पन्नतन्तूनामपत्यं दायमर्हति॥ (मनु ९।२०३)**

**तन्तुरपत्यम्॥१७॥**

**न चापुंस्त्वात् क्लीवस्य जननासामर्थ्यात् अध्ययनाभावात् मूकादेरुपनयनाभावेन पतितत्वात् कथं दारसम्बन्ध इति वाच्यं, क्लीवस्य पत्न्यामन्येन पुत्रोत्पादसम्भवात् उपनयनानर्हस्यानुपनीतत्वे शूद्रवदपतितत्वात्॥१८॥**

**तेनैतेषां यथासम्भमौरसक्षेत्रजाः क्लीवत्वादिशून्याः स्वपित्रनुसारेण भागहारिणः। दुहितरश्च परिणयनं यावद्भर्त्तव्याः अपुत्राश्च स्त्रियो यावज्जीवम्।**

**यदाह याज्ञवल्क्यः।**

**औरसक्षेत्रजास्त्वेषां निर्दोषा भागहारिणः।**
**सुताश्चैषां प्रभर्त्तव्या यावन्न भर्तुसात्कृताः॥**
**अपुत्रा योषितश्चैषां भर्त्तव्याः साधुवृत्तयः।**
**निर्वास्या व्यभिचारिण्यः प्रतिकूलास्तथैव च॥१९॥**

अवर्णजातोऽपीति। उत्तमवर्णेनाधमवर्णायामुत्पादितोऽपीत्यर्थः। प्रतिलोमेति। हीनवर्णेनोत्तमवर्णायामुत्पादितो न ऋक्थभागित्यर्थः। बन्धुभिः तस्य पितृऋक्थग्राहिभिः तत्पितृभ्रात्रादिभिः। स्वपित्र्यमिति। यदा बन्धुभिः स्वपित्र्यमेव धनं प्राप्तं न तु तत्पितृधनं प्राप्तं तदा तद्ग्रासाच्छादनं राज्ञा बान्धवा न दापनीयाः। अपित्र्यमिति पाठे प्रतिलोमजस्य न पितृसम्बन्धि इति स एवार्थः तथाच प्रतिलोमजाय ग्रासाच्छादनं बन्धुभिस्तत्पितृधनप्राप्तावेव देयं नान्यथेत्यर्थः। क्लीवादेर्दारपरिग्रहासम्भवात् कथं पुत्रसम्भव इत्याशङ्कामपनेतुमाह अस्ति चेति। यथासम्भवमिति मूकादेरौरसस्य क्षेत्रजस्य च सम्भवः क्लीवस्य तु क्षेत्रजमात्रस्य सम्भव इति। स्वपित्रनुसारेणेति। स्वपितुर्ब्राह्मणीपुत्रक्षत्रियापुत्रत्वादिना यादृशो भागस्तादृशभागहारिण इत्यर्थः। यावज्जीवमिति। भर्त्तव्या इति पूर्वेणान्वयः। भर्त्तृसात्कृता इति। तेन तासां विवाहोऽप्यवश्यं कारयितव्य इति प्रतिपन्नम्।।१५-१९।।



## षष्ठः अध्यायः

### प्रथम परिच्छेदः

**सम्प्रति विभाज्यमविभाज्यञ्चोच्यते। तत्र कात्यायनः।**

**पैतामहञ्च पित्र्यञ्च यच्चान्यत् स्वयमर्जितम्।**
**दायादानां विभागे तु सर्वमेतद्विभज्यते।।१।।**

**यच्चान्यदिति चकारः स्वयमित्यनेन सम्बध्यते स्वयञ्चार्जितमिति चकारादन्यस्यापि तदर्जनं साधारणधनद्वारेणेत्यर्थः।।२।।**

सम्प्रति क्लीवादिभिन्नत्वेनाधिकारिनिरूपणानन्तरमित्यर्थः। पैतामहञ्चेति, सम्बन्धिधनमात्रोपलक्षणम्। साधारणधनद्वारेणेति। शरीरश्रमसाधारण्येनापि बोध्यं, तथैव वक्ष्यमाणत्वात्।।१-२।।

**अनुपघातोपात्तमविभाज्यमाहतुर्मनुविष्णू ।**
**अनुपघ्नन् पितृद्रव्यं श्रमेण यदुपार्जितम्।**
**स्वयमीहितलब्धं तन्नाकामो दातुमर्हति।।३।।**
**(मनु ९।२०८।विष्णु१८/४२)**

**पितृद्रव्योपघाताभावेन द्रव्यद्वारेण नेतरेषां व्यापारः, स्वचेष्टालब्धत्वेन शारीरोऽपि व्यापारो नेतरेषामिति अर्जकस्यैव तदसाधारणं स्वयमोहितलब्धं तदिति हेतुत्वेनोपन्यासात्।।४।।**

**तथाच व्यासः।**

**अनाश्रित्य पितृद्रव्यं स्वशक्त्याप्नोति, यद्धनम्।**
**दायादेभ्यो न तद्दद्यालब्धन्तु यद्भवेत्।।५।।**

**स्वशक्तिमात्रेण यत् प्राप्तमिति सामान्येनाभिधानात् सर्वमेवंविधं स्वीयमसाधारणं द्रव्यम्।।६।।**

**स्वीयं स्वधनश्रममात्रार्जितं असाधारणं भ्रात्रन्तरैरविभाज्यम्।।६।।**

**स्वशक्तिप्राप्तस्यापि विद्याधनस्य समाधिकविद्यैः साधारणत्वात् न्यूनविद्याविद्यनिराकरणार्थं विद्यालब्धपदम्।**

**तथा याज्ञवल्क्यः।**

**पितृद्रव्याविरोधेन यदन्यत् स्वयमर्जितम्।**
**मैत्र्यमौद्वाहिकञ्चैव दायादानां न तद्भवेत्।।७।।(याज्ञवल्क्य २।११९)**

**मैत्रादिग्रहणं प्रदर्शनार्थम्, एवमादिषु प्रायेणानुपघातसम्भवात्।।८।।**

**तथा मनुः।**

**विद्याधनन्तु यद यस्य तत्तस्यैव धनं भवेत्।**
**मैत्र्यमौद्वाहिकञ्चैव माधुपर्किकमेव च।।९।।**

**(मनु ९।२०६)**

**तथा व्यासः।**

**विद्याप्राप्तं शौर्य्यधनं यच्च सौदायिकं भवेत्।**
**विभागकाले तत्तस्य नान्वेष्टव्यं स्वरिक्थिभिः।।१०।।**

**पितृपितृव्यादिभ्यः सुदायसम्बन्धिभ्यः प्रसादादिना लब्धं सौदायिकम्।।११।।**

**तथा नारदः।**

**शौर्य्यभार्य्याधने, हित्वा, यच्च विद्याधनं भवेत्।**
**त्रीण्येतान्यविभाज्यानि प्रसादो यश्च पैतृकः।।१२।।**

**(नारद १३।६)**

**भार्य्याप्राप्तिकाले लब्धं भार्य्याधनम् औद्वाहिकमित्यर्थः, एतानि वर्जयित्वा अन्यद्विभजेदित्यनुवर्त्तते वाक्यान्तरीयम्।।१३।। (नारद १३।४)**

ननु विद्यालब्धस्य पृथगुपादानं व्यर्थम् अनाश्रित्येति सामान्याभिधानेन तस्यापि प्राप्तेः अतस्तत्प्रयोजनमाह स्वशक्तिप्राप्तस्यापीति। निराकरणार्थमिति। तथाच विद्यालब्धस्य न्यूनविद्याविद्यैर्न विभागः तदन्येषान्तु तथाविधानां केनापि सह न विभाग इति भागस्य द्वैविध्येनैकविध्यभावात् तस्य पृथगुपन्यास इति भावः। न च साधारणधनसम्बन्धेनापि विद्यार्जिते विभागनिषेधार्थ एव किं न स्यादिति वाच्यं वैद्योऽविद्यायेति वक्ष्यमाणवचनविरोधात्। औद्वाहिकं जामातृतया श्वशुरादितो लब्धम्। तत्तस्यैवेत्येवकारात् न्यूनविद्याविद्यव्यवच्छेदः। माधुपर्किकम् आर्त्विज्यलब्धम्। भार्य्याधनस्य स्त्रीधनत्वात् विभागप्रसक्तेरन्यथा व्याचष्टे। भार्य्याप्राप्तिकाल इति। यतः शौर्य्यभार्य्याधने विद्याधनं प्रसादलब्धधनञ्च एतान्यविभाज्यानि अत एतानि हित्वा अन्यद्विभजेदिति वचनार्थं दर्शयति एतानीति। अन्यद्विभजेदिति वचने नास्ति कुतो विवृतम् अत उक्तम् अनुवर्तत इति।।३-१३।।

**तदेवमादिभिः शौर्य्यादिधनत्वमविभाज्यत्वे कारणं नोच्यते शौर्य्याद्यर्जितस्यापि विभागश्रुतेः। तथा व्यासः।**

**साधारणं समाश्रित्य यत्किञ्चिद्वाहनायुधम्।**
**शौर्य्यादिनाप्नोति धनं भ्रातरस्तत्र भागिनः।।**
**तस्य भागद्वयं देयं शेषास्तु समभागिनः।।**

**साधारणद्रव्येणार्जितस्य धनस्य विभागं वदति। तथा नारदः।**

**कुटुम्बं बिभृयादभ्रातुर्यो विद्यामधिगच्छतः।**
**भागं विद्याधनात्तस्मात् स लभेताश्रुतेऽपि सन्।।१४।।**

**(नारद १३।१०)**

**बिभृयादित्येकवचननिर्देशात् यदि विद्यामभ्यस्यतो भ्रातुः कुटुम्बमपरो भ्राता स्वधनव्ययशरीरायासाम्यां संवर्द्धयति तदा तद्विद्योपार्जितधने तस्याप्यधिकारः।।१५।।**

**तत्पदोपात्तस्य कुटुम्बभर्त्तुः कर्तृत्वात् तद्विशेषणस्य एकत्वस्य विवक्षितत्वेन वित्तार्जक-**

धनव्यावृत्त्या स्वीयासाधारणधनलाभः साधारणधनेन न लाभः साधारणधनेन भवने तु वित्तार्जकधनस्यैव तदुपयोगे स्वधनस्यैव वित्तार्जनोपयोग इति भावः॥१५॥

तथा वैद्योऽविद्याय नाकामो दद्यादंशं स्वतो धनात्।
पित्र्यं द्रव्यं समाश्रित्य न चेत्तेन तदर्जितम्।।१६।।

(नारद।१३।११)

पित्र्यपदं साधारणधनपरं तदनाश्रित्यार्जितं वैद्योऽविद्याय अनिच्छन्न दद्यात् वैद्याय विदुषे पुनः साधारणमन्तरेणाप्यर्जितं दद्यादेव॥१७॥

तथा गौतमः।

स्वयमर्जितमवैद्येभ्यो वैद्यः कामं न दद्यात्॥१८॥

(गौतम २८।२८)

असाधारणधनशरीरव्यापारार्जितं स्वयमर्जितम् अविद्वद्भ्यो दातुमनिच्छन् न दद्यात् विद्वद्भ्यः पुनर्दद्यादेव॥१९॥

एतच्च विद्याधनमात्रविषयम्। तदाह कात्यायनः।

नाविद्यानान्तु वैद्येन देयं विद्याधनं क्वचित्।
समविद्याधिकानान्तु देयं वैद्येन तद्धनम्।।२०।।

तन्त्रोच्चरितविद्यापदम् उभाभ्यां समाधिकपदाभ्यां सम्बध्यते तेन समविद्याधिकविद्यानां दातव्यं न्यूनविद्याविद्ययोः पुनरनधिकारः॥२१॥

अश्रुती मूर्खः। विभृयादित्येकेति। इतरनैरपेक्ष्येण भरणकर्त्तृत्वस्य एकवचनबललभ्यत्वादिति भावः। इतरनैरपेक्ष्यञ्च साधारणधननैरपेक्ष्यं तद्भ्रातुरसाधारणधननैरपेक्ष्यञ्च, तेनाश्रुताभ्यां द्वाभ्यां त्रिभिर्वा भरणे सर्वेषामेव तेषामशितेति। समाश्रित्येति। तच्च भोजनाच्छादनातिरिक्तधनाश्रयणपरं, तदर्थं धनोपघातस्य गृहस्थितेनाप्यवश्यं कर्त्तव्यत्वात्। साधारणधनपरमिति। अन्यथा पितामहादि-धनोपघाते विभागानुपपत्तेरिति भावः। अवैद्यायेति विशेषणस्वरसलभ्यार्थमाह वैद्यायेति। एतस्यैव विवरणं विदुषे इति। एतच्च स्वयमर्जितञ्च। विद्याधनमात्रेति, तदतिरिक्तस्य स्वयमर्जितस्य तु विद्वद्भ्योऽविद्वद्भ्यो वा अदेयत्वादिति भावः। तन्त्रोच्चरितमिति। सकृदुच्चरितमित्यर्थः। उभाभ्यामिति। समविद्येत्यत्र विद्ययैव साम्यावगतेरधिकेत्यत्रापि विद्ययैवाधिक्यमवसीयते न तु धर्मान्तरेण अनुषङ्गापेक्षया अध्याहारस्य कल्पने गौरवादिति भावः।।१४-२१।।

तदेवमादिवचनैर्विद्याशौर्य्यादिधनेष्वपि साधारणधनोपघातानुपघाताभ्यां विभागाविभाग-योरवगमात् तस्यैव प्रयोजकत्वात् तत्पदवत्येव श्रुतिः कल्पनीया, उपघातार्जितं विभजेदिति, न पुनः शौर्य्यादिपदवत्स्वपि, अवश्यकल्पनीयसामान्यश्रुतिकल्पनयैवोपपत्तेः॥२२॥

होलाकाधिकरणन्यायस्यायमेव विषयः॥२३॥

यद्वा न्यायप्राप्त एवायमर्थः, यद येनार्जितं तत्तस्मिन् जीवति तस्यैव, असति विशेषवचने, यत्र पुनः साधारणधनमात्रेणैकस्य व्यापारोऽपरस्य धनशरीराभ्यां तत्रैकस्यैको भागोऽपरस्य भागद्वयं न्यायावगतमेव निबद्धम्। एतेन चैतदपि सिध्यति, यत् साधारणधनोपघाते सति यस्य'यावतो'ऽशस्य स्वल्पस्य महतो वोपघातः, तस्य तदनुसारेण भागकल्पना कार्य्या॥२४॥

तस्यैव, उपघातानुपघातार्जितत्वस्यैव, प्रयोजकत्वात् विभागे उपघातार्जितत्वस्य, अविभागे

चानुपघातार्जितत्वस्य, प्रयोजकत्वात्। कल्पनीयां श्रुतिमाह उपघातार्जितमिति। अनुपघातार्जितं न विभजेदिति तु श्रुतिर्न कल्प्यते, तत्रान्येषां स्वामित्वाभावेन विभागाप्रसक्तेः तद्भावस्य सिद्धत्वात्। सामान्यश्रुतीति। शौर्य्यादिपदशून्योक्तश्रुतिकल्पनयेत्यर्थः। शौर्य्यादिपदवती उपघातेन शौर्य्याद्यर्जितं विभजेदित्येवंरूपश्रुतिकल्पने गौरवात्। न्यायमूलत्वमाह यद्वेति। धनसाधारण्ये व्यापारसाधारण्ये वा भागान्तरस्य विभागोक्तेरुक्तनियमे-व्यभिचारमाशङ्क्याह असतीत। तथाचायमुत्सर्ग इति भावः विशेष-वचनञ्च समविद्याधिकेत्याद्युक्तमेव, न्यायश्चात्र उपघातार्जिते अर्जकस्य, द्व्यंशित्वाभिधानात् अनुपघाते तदधिकस्य सर्वस्यैव ग्रहणं युक्तमित्येवंरूपः। यस्य यावत इति। विभिन्नजातीय-भातृसाधारणधनो-पघातार्जिते, ब्राह्मणीपुत्रस्य चतुर्णामंशानां क्षत्रियापुत्रादीनाञ्च त्रिद्व्येकांशानामुपघातः, तत्र स्वस्वांशसम-सङ्ख्यमेव तेषामंशकल्पनमित्यर्थः।।२२-२४।।

**किञ्च कात्यायनवचनम्।**

**विभक्ताः पितृवित्ताच्चेदेकत्र प्रतिवासिनः।**
**विभजेयुः पुनर्द्व्यंशं स लभेतोदयो यतः।।२५।।**

**इदं संसृष्टस्य साधारणधनोपघातेनार्जकस्य भागद्वयम् इतरेषामेकैको भाग इति श्रीकरेण व्याख्यातम्।।२६।।**

**तेनानुपघातार्जितमर्जकस्यैव धनं संसृष्टत्वेऽपि न पुनस्तद्धनं साधारणमित्यभिप्रायो मुनेर्व्याख्यातुश्च लक्ष्यते, अनुपघातार्जिते भागविशेषानभिधानात्।।२७।।**

**एवञ्चेत् संसृष्टवदविभक्तस्यापि तथात्वमेव युक्तं, विभागप्रागभावे तत्प्रध्वंसेऽपि, एकत्र प्रतिवासस्य हेतोरविशेषात् साधारणधनोपघातार्जितेऽर्जकस्य भागद्वयमिति ज्ञापनार्थत्वेन वचनस्याप्युपपत्तेः, न केवलं संसृष्टविषयत्वं युक्तं, होलाकाधिकरणस्यात्रैव जागरूक-त्वात्।।२८।।**

वक्ष्यमाणकात्यायनवचने, एकत्र प्रतिवासिन इति श्रुतेरेकत्र वास एव नियामको, न साधारण-धनार्जितत्वं, यथाच कथं न्यायमूलत्वमित्याशङ्क्य अस्यापि न्यायमूलत्वं व्यवस्थापयति किञ्चेति। विभक्ता इति। एकत्र प्रतिवासिनो यदा विभजेयुः तदा यतो यस्मात् एकत्र प्रतिवासिनो भ्रात्रादेरुदयः धनार्जनं, स पुनर्विभागे द्व्यंशं लभेत इत्यर्थः। द्व्यंशञ्चार्जित एव, अर्जकी द्व्यंशमर्हतीत्येकमूलकत्वात्। इतरेषामेकैको भागः, एकैकस्येति शेषः। मुनेः कात्यायनस्य, तेन एकत्रप्रतिवासित्वोक्त्या, साधारण-धनोपघातेन द्व्यंशित्वस्य प्रतिपादितत्वात्, अनुपघातार्जिते भागानभिधानात्। व्याख्यातुः श्रीकरस्य, तेन तथैव स्फुटे व्याख्याततत्वात्। अभिप्रायं प्रकाशयति। अनुपघात इति। एवञ्चेत् उपघातार्जिता-भिप्रायश्चेत्। तथात्वं द्व्यंशित्वम्। अविभक्तत्वे विभागप्रागभावः, संसृष्टत्वे विभागप्रध्वंसः। एकत्रप्रति-वासस्य, अभिन्नधनसम्बन्धस्य। ननु वचनबलात् संसृष्टाधनविषयत्वप्रतीतेस्तद्विरोधात् कुतोऽविभक्त-विषयत्वकल्पनम्, अतो वचनमन्यथोपपादयति साधारणेत्यादिना। न केवलमित्यत्र हेतुमाह होलाकेति। तथाच यथा होलाकानुष्ठानार्थं होलाका कर्त्तव्येति श्रुतिः कल्प्यते, न कर्त्तृबोधकप्राच्यादिपदवती, तथा साधारणधनोपघातेनार्जिते अर्जको द्व्यंशं गृह्णीयादित्येव श्रुतिः कल्प्यते न त्वर्जकविशेषणतया संसृष्टपदवतीति भावः।।२५-२८।।

**किञ्चोपघातार्जिते अर्जकस्य भागद्वयमिति तावन्निर्विवादं,**

**साधारणं समाश्रित्य यत्किञ्चिद्वाहनायुधम्।**
**शौर्य्यादिनाप्नोति धनं भ्रातरस्तत्र भागिनः।।**
**तस्य भागद्वयं देयं शेषास्तु समभागिनः।।**

**इत्यनेनोपघात एव भागद्वयस्य विधानात्, असाधारणधनशरीरव्यापारार्जिते तु न भागद्वयं न्याय्यं, किन्त्वधिकं, सर्वमेव वा किञ्चिदूनं वा, तत्र किञ्चिदूनस्य मुनिभिर्निबन्धृभिश्चानुक्तत्वात्। साधारणधनव्यापारेण भ्रात्रन्तरस्य मार्गदर्शनात् तदभावे भावाभाव एव युक्तः॥२९॥**

**द्विरर्जयितुरित्येतस्य च न्यायमूलत्वमेव युक्तम्, अन्यथा श्रुतिकल्पने अर्जकत्वानुप्रवेशो वा पृथग्वाधिकारी कल्पनीयः स्यात्॥३०॥**

**तस्मादनुपघातार्जितमर्जकस्यैव नैतरेषामिति सिद्धम्॥३१॥**

नन्वाचारे पदवैयर्थ्यरूपबाधकाभावात् सामान्यश्रुतिकल्पनमस्तु, स्मृतौ तु तथात्वे विशेषणवैयर्थ्यमिति विशेषाकारेव श्रुतिः कल्प्यत इत्यत आह। किञ्चेति। किन्त्वधिकमिति। भागद्वयाधिकमित्यर्थः। अधिकस्यैव द्वैविध्यमाह सर्वमेव वा किञ्चिदूनमिति च। सर्वमिति शेषः। भागनिर्गमादिति। भागश्रवणादित्यर्थः। तदभावे भ्रात्रन्तरभागनिर्गमहेत्वोः साधारणधनोपघातभ्रात्रन्तरव्यापारयोरभावे। ननु अर्जकी द्व्यंशमर्हति येन चैषामुत्पादितं स्यात् सोऽपि द्व्यंशमेव हरेदित्यादौ साामन्यत एवार्जकतया द्वयंशश्रुतेरनुपघातेऽपि, द्व्यंशएवार्जकस्यास्तामत आह द्विरर्जयितुरिति। एतस्य एतदर्थकस्व अर्जको द्व्यंशमर्हतीत्यादेः। न्यायमूलत्वं यत्रैकस्य धनहारेण अपरस्य धनशरीरायासाम्यामित्युक्तयुक्तिमूलत्वम्। अन्यथा न्यायामूलत्वे। अर्जकत्वानुप्रवेशो वेति। पिता गृह्णीतांशद्वयं स्वयमिति मूलश्रुतौ अर्जकत्वविशेषणप्रवेश इत्यर्थः। नन्वेवम् अर्जकः पिता द्वयंशं गृह्णीयादिति श्रुतिकल्पने पितुरनर्जकस्य द्वयंशानुपपत्तिः अर्जकस्य भ्रात्रादेर्द्व्यंशानुपपत्तिश्चेत्यत आह पृथग्वेति। पितृत्वादिनिरपेक्षः पृथगर्जक एवाधिकारी कल्प्यः स्यात्। तथा चोभयथैव श्रुतिकल्पने गौरवात् न्यायमूलत्वमेव युक्तमिति भावः उपसंहरति तस्मादिति॥२९-३१॥

**किञ्चाविभक्तार्जितं सर्वे विभजेयुरिति न तावत् सामान्येन वचनं कल्पनीयं शौर्य्यादिधने पर्य्युदासदर्शनात्।**

**तथा मनुः।**

**विद्याधनन्तु यद यस्य तत्तस्यैव धनं भवेत्।**
**मैत्रमौद्वाहिकञ्चैव माधुपर्किकमेव च॥ (मनु ९।२०६)**

**तथा मनुविष्णू,**

**अनुपघ्नन् पितृद्रव्यं श्रमेण यदुपार्जयेत्।**
**स्वयमीहितलब्धं तन्नाकामो दातुमर्हति॥३२॥**
**(मनु ९।२०८।विष्णु १८।४२)**

**अनुपघ्नन्निति विद्यादिधनेऽपि सम्बध्यते, सत्युपघाते विभागवचनदर्शनात्॥३३॥**

**तथा याज्ञवल्क्यः।**

**पितृद्रव्याविरोधेन यदन्यत् स्वयमर्जितम्।**
**मैत्रमौद्वाहिकञ्चैव दायादानां न तद्भवेत्॥**
**क्रमादभ्यागतं द्रव्यं हृतमभ्युद्धरेत्तु यः।**
**दायादेभ्यो न तद्द्याद्विद्यया लब्धमेव च॥**
**(याज्ञवल्क्य २।११९-१२०)**

**तथा नारदः।**

शौर्य्यभार्य्याधने हित्वा यच्च विद्याधनं भवेत्।
त्रीण्येतान्यविभाज्यानि प्रसादो यश्च पैतृकः।।

(नारद १३।६)

तथा व्यासः।

विद्याप्राप्तं शौर्य्यधनं यच्च सौदायिकं भवेत्।
विभागकाले तत्तस्य नान्वेष्टव्यं स्वरिक्थिभिः।।३४।।

**सौदायिकं सुदायसम्बन्धिभ्यो यल्लब्धम्॥३५॥**

पितामहेन यद्दत्तं पित्रा वा प्रीतिपूर्वकम्।
तस्य तन्नापहर्त्तव्यं मात्रा दत्तञ्च यद्भवेत्।।
अनाश्रित्य पितृद्रव्यं स्वशक्त्याप्नोति यद्धनम्।
दायादेभ्यो न तद्द्यात् विद्यालब्धञ्च यद्भवेत्।।३६।।

ननु न्यामूलत्वे अर्जकस्य व्यापारतारतम्येन विभागतारतम्यं स्यात्, तथाच सामान्यत एव तस्य भागद्वयाभिधानमयुक्तमतोऽविभक्तार्जिते अर्जकस्य भागद्वयम्, इतरेषामेकैको भाग इति सामान्य-श्रुतिमूलत्वमेवोचितमर्जकद्वयंशित्वस्य अतएवानुपघातार्जितेऽपि प्रतिग्रहधने अविभक्तार्जितत्वमात्रेण सर्वेषां विभागो लोके दृश्यते इति श्रीकरमतमुत्तोल्य दूषयति किञ्चाविभक्तेत्यादि। शौर्य्यादिधन इति। अनुपघातार्जितशौर्य्यादिधन इत्यर्थः। सम्बध्यत इति। विद्याधनन्तु यद् यस्येति प्राग्वचनोक्त-विद्याधनेऽपि सम्बध्यत इत्यर्थः, वैद्योऽविद्यायेति प्रागुक्तवचने पित्र्यं द्रव्यं समाश्रित्य न चेत्तेन तदर्जितमिति श्रुतेरत्रापि तदेकवाक्यतया विद्याधनेऽप्यनुघातान्वय इति भावः। क्रमादभ्यागतमिति। क्रमादागतमित्यर्थः। एतच्चासाधारणधनमात्रोपलक्षणं, तेन भ्रातॄणां स्वार्जितधनेऽपीयं व्यवस्था। उद्धरेदित्येकवचनेन अन्येषां कायिकव्यापारस्वाभाव उक्तः।।३२-३६।।

**तदेवमादिवचनैर्यावद्वर्णवर्णान्तरालानां, सङ्कीर्णजातानां, सकलविद्यानिमित्तस्य, सौदा-यिकस्य च स्वजनदत्तस्य च, तथा मित्रविवाहमधुपर्कप्राप्तस्य, शौर्य्येण च युद्धादिना, प्राप्तस्य, कृषिसेवावाणिज्यादिना च श्रमेणोपार्जितस्य, अनुपघातेन च स्वशक्तिमात्रार्जितस्य, पर्य्युदासात्, सर्वमेव पर्य्युदस्तमिति तदितराभावात् निर्विषयो विधिः॥३७॥**

**अथ यथाकथञ्चिदेको, द्विको वा, विषयो लभ्यते, तदा तदेव स्वपदेन, निर्देष्टुमुचितं मुनीनाम्, अविभक्तार्जितममुकधनं विभजेदिति, लाघवात् स्वपदात् शीघ्रप्रतीतेश्च, न तु शौर्य्यादिधनेतरतया, बहुतरपदप्रयोगापत्त्या गौरवात्, पर्य्युदासत्वे च, सर्वमुनिभिरेव, सकल-पर्य्युदसनीयपदानुकीर्त्तनं कर्त्तव्यं, तद्भिनां तदितरज्ञानानुपपत्तेः, मुनीनां पर्य्युदासवचनं बालप्रल-पितमिव स्यात्, प्रदर्शनार्थत्वे तु अनास्थया केनचित् किञ्चित् कीर्त्तितं, केनचिञ्च किञ्चिदिति, युक्तं सर्वस्याकीर्त्तनम्॥३८॥**

**तस्मात् साधारणधनोपघातार्जितं, धनं विभजेदिति विधिः, शौर्य्यादिपदञ्च वाक्येषु प्रदर्शनार्थम्॥३९॥**

**अतोऽविभक्तार्जितत्वमात्रेण, धनस्य साधारणत्वाभिधानमप्रामाणिकम्॥४०॥**

याद्वर्णेति। वर्णाः, ब्राह्मणादयश्चत्वारः। वर्णान्तराला अम्बष्ठकरणादयः। सङ्कीर्णजाता, रथकारादयः। सर्वमेवेति। अनुपघातार्जितं सर्वमेवेत्यर्थः। निर्विषयो विधिरिति। अनुपघातेन शौर्य्याद्य-र्जिततत्तद्धनेतरदविभक्तार्जितं विभजेदिति विधिर्भवदभिमतः स च निर्विषयः यादृशमप्राप्तविषयं

प्राप्य विधित्वं तादृशविषयशून्यः अत्र हेतुः तदितराभावादिति। न्यायप्राप्तेतरस्य विषयस्याभावादित्यर्थः उपघातार्जितविभागस्य तु न्यायत एव प्राप्ततया नाप्राप्तत्वमिति भावः। नन्वविभक्तलब्धनिधिरेकोऽस्ति विषयः, कृपयोदासीनदत्तमादायद्विको वा वर्त्तते, एतयोश्चासाधारणव्यापारार्जितत्वेन तद्विभागस्य न्यायादप्राप्तेरिति तत् कथं निर्विषयत्वमित्याशङ्कते अथेति। स्वपदात् विशेषरुपेण स्वबोधकपदात्। न तु शौर्य्यादीति। न त्वनुपघातेन शौर्य्याद्यर्जितेतराविभक्तार्जितधनतयेत्यर्थः। बहुतरपदेति। पदार्थानां वाक्यार्थघटकतया वाक्यघटकपदार्थनामुपस्थितौ तदन्वितान्वयक्रमेण प्रकृते प्रकृतोपस्थितिरिति विलम्बोपस्थितिकत्वादित्यर्थः, इदमुपलक्षणं पदार्थोपस्थित्यादिकल्पनागौरवमपि द्रष्टव्यम्। बालप्रलपितमिति। विद्याधनेतरद्विभजेत् शौर्य्यादिधनेतरत् विभजेदित्यादिप्रत्येकानभिधाने कस्मादप्यभिधानात् न विभाज्यतावच्छेदकस्य उक्तताविद्धनेतराविभक्तार्जितधनस्य परिचयः, तथाच तादृशधनविभागस्य प्रकृतस्याप्रतिपादकतया, निरर्थकत्वेन, बालप्रलापतुल्यत्वात् बालप्रलपितमित्यर्थः। मन्मते अनुपघातार्जनं, यत्र यत्र धने सम्भवति तत्तदुदाहरणार्थत्वेन नानर्थक्यमित्याह प्रदर्शनार्थत्व इति।।३७-४०।।

**किञ्च।**

**क्रमादभ्यागतं द्रव्यं हृतमभ्युद्धरेत्तु यः।**
**दायादेभ्यो न तद्दद्यात् विद्यया लब्धमेव च।।**

**अत्र याज्ञवल्क्यवचनेऽपि, पितृपितामहादिधनमपि केनचिदपहृतं योऽभ्युद्धरेत् तस्यैव तत्रान्येषामिति भवतोऽपि सम्मतं, तेन पूर्वसम्बन्धलेशे सत्यपि, अविभक्तानामप्यभ्युद्धारकत्वेन, तत्र सम्बन्धं निराकुर्वन् अपूर्वत्वेन स्वार्जिते सुदूरमेवान्येषां सम्बन्धं निरस्यति।।४१।।**

**यच्चोक्तं श्रीकरेण, यदि पितृद्रव्यानुपघातार्जितमर्जकस्यैव तदा प्रतिग्रहोपात्तं धनं न कदाचित् भ्रात्रन्तरस्य भवेत् न हि प्रतिग्रहः पितृद्रव्यविनाशेन सम्भवति, द्रव्यं हि दातुरानमनमुखेन प्रतिग्रहे उपयुज्यते एकहायन्यादिकमिव सोमक्रये, कर्त्तृशरीरधारणेन वा पयोव्रतादिकमिव ज्योतिष्टोमे, तत्र तावदृष्टार्थे दाने द्रव्यान्तरग्रहणेन न दातुराननतिरपेक्षितेति न दात्रानत्या द्रव्यमुपयुज्यते प्रतिग्रहस्य चाल्पकालीनत्वात् न तत्कर्त्तुर्भोजनमपेक्षितं दीर्घकालीनज्योतिष्टोमेनेव स्वर्गकर्त्तुरिति।।४२।।**

**तन्मन्दं दापकानत्यर्थमुपहारप्रदानादिना धनोपघातस्य लोके बहुलमुपलम्भात्, कलौ च प्रतिग्रहधनस्य सेवाधनसमानत्वात् अतएव कलौ त्वनुगमान्वित इति स्मरन्ति।।४३।।**

अथात्र निषेध एव न पर्य्युदास इत्येकेन सर्वाकीर्त्तनेऽपि न क्षतिरित्यत आह किञ्चेतीति चूड़ामणिः तन्न वाक्यभेदकल्पनागौरवापत्तेः पर्य्युदासस्यैव न्याय्यत्वात् किन्तूपघाताभावे विभागाभाव इति प्रागुक्तयुक्त्यन्तरमाह किञ्चेति। अविभक्तानामपीति। अविशेषेण वचनस्य विभक्ताविभक्तविषयत्वादित्याशयः। अपूर्वत्वेन पूर्वसम्बन्धलेशशून्यत्वेन। न हीति। ज्योतिष्टोम इति वाक्येनान्वयः। पितृद्रव्यविनाशासम्भवं दर्शयति द्रव्यं हीति। आनमनं सन्तोषः, मुखेन द्वारेण। एकहायन्यादिकमिति। अरुणया एकहायन्या पिङ्गाक्ष्या गवा सोमं क्रीणातीत्यत्र विक्रेतुर्वशीकरणद्वारा यथैकहायनीमूल्यतया उक्तक्रयोपयोगिनी तद्वदित्यर्थः। आदिना वाससा क्रीणातीत्युक्तवाससः परिग्रहः। न च वाससोगोवैकल्पिकत्वं विषमशिष्टत्वात् तथाच वाससाविशिष्टाया एकस्या एव गोः क्रयसाधनत्वात् पृथक्क्रयासाधनस्य वाससः कथमादिपदग्राह्यत्वं वाससा सोमं क्रीणातीति पृथक्वाक्यबलेन वासोऽविशिष्टगवा क्रयेऽमाशस्त्यावगमात् प्रशस्तक्रये वासो विशिष्टाया गोरादिपदग्राह्यत्वसम्भवात् पण्यान्तरक्रये मूल्य-

तयोक्तसुवर्णादेरादिपदग्राह्यत्वसौलभ्याच्च। कर्त्तुशरीरधारणेनेति। अन्तरा प्रकृतकर्मण इति शेषः। अतएव दूषयिष्यति प्रतिग्रहस्य चेति। पयोव्रतादिकमिवेति। दीर्घकालीनज्योतिष्टोमादौ पयःपानं ब्राह्मणस्येत्यनेनाभिहितं, क्षीरभोजनादिकं यथा शरीरधारणद्वारा उपयुज्यते तद्वदित्यर्थः। द्वयं क्रमेण दूषयति तत्रेत्यादि प्रतिग्रहस्येत्यादि च। दीर्घकालीनज्योतिष्टोमस्यानेकाहसाध्यत्वात् शरीरधारणार्थे यागकर्त्तुर्यथा भोजनमपेक्षितं तथा प्रकृते नेति व्यतिरेकेण दृष्टान्तः। उपहारप्रदानादिना पारितोषिकद्रव्यदानादिना। उपदादानाददिनेति पाठे उत्कोचदानादिनेत्यर्थः कलौ चेति। तेन सेवायां बहुतरकालसाध्यत्वात् शरीरधारणार्थमपि धनोपघातः क्वाचित्क इत्युक्तम्। अनुगमेति। अनुगम उपसर्पणं तेनान्विते दीयते इत्यन्वयः। तथाचेक्तम्। कृते तु दीयते गत्वा त्रेतायामाहुताय वै। द्वापरे याचमानाय कलौ त्वनुगमान्विते इति।।४१-४३।।

**यच्च चिरावस्थितेर्व्यभिचारात् न प्रतिग्रहकारणत्वमानतेरत आनतिद्वारा न प्रतिग्रहार्थत्वं द्रव्यस्येत्युक्तं तन्मन्दतरम् आनतिद्वारेण चिराश्रयणादीनां प्रतिग्रहकारणत्वात् पुरुषस्याशयवैचित्रेण कस्यचिद्धनदानेन कस्यचिच्चिराश्रयणादिना कस्यचित्तत्तद्गुणानुसन्धानमात्रेण दर्शनात् सहकार्य्यभावेन कार्य्यानुत्पत्तेर्नाकारणता अतएवोक्तम् आनतेरनियतोपायपरिणामत्वादिति॥४४॥**

चिरावस्थितेरिति। चिरावस्थितेरपि प्रतिग्रहदर्शनात् आनतेर्व्यभिचारात् न कारणता इत्यर्थः। आनतिहारेण आनतिद्वारेणैव न तु स्वातन्त्रेण तेन नानतेर्व्यभिचार इति भावः। चिराश्रयणादीनामित्यादिना धनदानगुणानुसन्धानयोः परिग्रहः। ननु चिराश्रयणादीनां परस्परव्यभिचारेण कथमानतिं प्रति कारणतेत्यत आह पुरुषाशयेति। पुरुषाशयस्य आनतिरुपस्य वैचित्रेणेत्यर्थः। तथाचानतिगतवैजात्यव्यक्तीनां प्रत्येकस्य चिराश्रयणादीनां कार्य्यतावच्छेदकत्वात् न व्यभिचार इति भावः। वस्तुतस्तु एषामेकशक्तिमत्त्वेनैव कारणत्वं तेनानतिगतनानावैजात्यकल्पने न क्षतिरिति बोध्यम्। दर्शनादिति। आनतेरिति शेषः। ननु तथाप्यन्वयव्यभिचारः सत्यपि चिराश्रयणादौ कस्यचित् आनत्यनुत्पाददत आह सहकार्य्येति। पुरुषाशयविशेषः सहकारी तदभावात् तत्र नानतिरिति न व्यभिचार इति भावः। केचित्तु ननु सत्यामप्यानतौ क्वचित् प्रतिग्रहाप्राप्त्या कथमानतेः प्रतिग्रहकारणत्वमत आह सहकार्य्येतीत्याहुः। अनियतोपायेति। परस्परनिरपेक्ष नानोपायसाध्यत्वादित्यर्थः। तेनैकशक्तिमत्त्वात् वैजात्याद्वा कार्य्यकारणभाव इति भावः।।४४।।

**यदप्युक्तम् अथ तत्सन्निधिमन्तरेण प्रतिग्रहस्यासम्भवात् भोजनमन्तरेण च तदयोगात् तस्यां स्थितौ व्याप्रियमाणं धनं प्रणाल्या प्रतिग्रहं निष्पादयतीति तदा ज्योतिष्टोमादिकर्मणः प्राचीनमपि भोजनं शरीरस्थितौ व्याप्रियमाणं प्राचीनशरीरस्थितिमन्तरेण ज्योतिष्टोमाद्यनिष्पत्तेः प्रणाल्या ज्योतिष्टोमार्थमिति सर्वमेव भोजनं क्रत्वर्थं स्यात् न पुरुषार्थं तथाच तत्साधनमपि द्रव्यं क्रत्वर्थं स्यात् तदर्जनोपायोऽपि क्रत्वर्थः स्यादिति पुरुषार्थत्वं द्रव्यार्जनस्य द्रव्यस्य भोजनस्य च हीयेतेति॥४५॥**

**तन्मन्दतमं प्रणाल्या ज्योतिष्टोमोपकारकत्वेऽपि भोजनस्य साक्षात् तृप्त्यर्थत्वात् पुरुषार्थस्यैव सतः क्रतूपकारकत्वात् तत्रैदमर्थे प्रमाणाभावात् उपकारकत्वस्य तादर्थ्यव्यभिचारात् अतः कथं द्रव्यार्जनस्य द्रव्यस्य भोजनस्य च क्रत्वर्थत्वमापद्यत इति॥४६॥**

**अतएवास्यापि पर्य्यनुयोगस्यानवकाशः यदि द्रव्यस्य प्राचीनभोजनद्वारा प्रतिग्रहोपकारकत्वमिष्यते तदा जन्मत आरभ्य भोजनं विना शरीरावस्थितेरभावात् नार्जनं सम्भवतीति सर्व एव धनोपायः पितृद्रव्यविनाशेन स्यात् अतोऽनुपघ्नन् पितृद्रव्यमिति विशेषणं न स्यादिति।**

**यतो विशेषणानर्थक्यादेव भक्षणाद्युपभोगोपयुक्तधनोपघातादन्यस्यैवोपघातादिरूपस्य वचनार्थत्वात्।।४७।।**

श्रीकरेणैव प्ररिग्रहे प्रकारान्तरेण पितृद्रव्योपघातवादिमतं यत्प्रतिबन्धिमुपन्यस्य निरसितं तमपि दूषयितुमाह यदप्युक्तमिति हीयेतेत्यन्तं यदप्युक्तमित्यर्थः। तस्यां स्थितौ प्रतिग्रहावधि दातृसन्निधिस्थितौ प्रणाल्या परम्परया। उक्तमर्थं प्रतिबन्धिमुखेन श्रीकरो दूषयति तदेत्यादि हीयेत इत्यन्तेन। उपकारकत्वेऽपि नान्तरीयकविधया उपकारकत्वेऽपि। तृप्त्यर्थत्वादिति। तथाच पुरुषार्थत्वं पुरुषोद्देश्यप्रत्यक्षफलसाधकत्वं, क्रत्वर्थत्वं क्रतूद्देश्यकत्वम् इति न पुनर्भोजनस्य क्रत्वर्थत्वं क्रतूद्देश्यकत्वाभावादिति भावः। ऐदमर्थे इदमर्थकत्वे क्रतूद्देश्यकत्व इति यावत्। ननु तदुपकारकत्वस्येव तदुद्देश्यकत्वे प्रमाणमत आह उपकारकत्वस्येति। व्यभिचारादिति अन्यावलोकनार्थानीतदीपादितोऽन्यावलोकनादौ व्यभिचारादित्यर्थः। अत एवेति। यत एव उपकारकत्वेऽपि न तदर्थत्वम् अत एवेत्यर्थः। पर्य्यनुयोगस्य दोषोद्भावनस्य। हेत्वन्तरमाह यत इति। केचित्तु अतएव वक्ष्यमाणहेतोरेव तमाह यत इतीत्याहुः। विशेषणानर्थक्याद यतो हेतोरित्यर्थः।।४५-४७।।

**किञ्च भक्षणाद्युपभोगार्थधनोपघातस्य गृहगतेनाप्यवश्यं कर्त्तव्यत्वात् न धनार्जनार्थत्वमुपघातस्य तादर्थ्यमेव च तत्प्रयोजकमिति नातिप्रसक्तिः।।४८।।**

**अतएवोक्तं विश्वरूपेण, पितृद्रव्यं दत्त्वां यदि नोपार्जितं धनं तदा तस्यैवासाधारणं वैवाहिकवदेवोक्तं न तु भक्षणाद्युपभोगमात्रेण तस्य स्तन्यपानादितुल्यत्वादित्यन्तेन।।४९।।**

**अतएव पुत्रोपनयनविवाहयोः सोत्सुकसव्ययपितृकृतबहुतरधनव्ययेऽपि न व्रतभिक्षादिलब्धस्य वैवाहिकस्य वा साधारण्यं धनप्रेप्सया धनव्ययस्याकृतत्वात्।।५०।।**

**तस्माद्धनोद्देशेनैव साधारणधनोपघातेनार्जितं साधारणं नान्यदिति सिद्धम्।।५१।।**

ननु भक्षणादीत्यादिपदग्राह्योऽननुगम आच्छादनमात्रस्यादिपदग्राह्यत्वेऽपि यत्र बहुतरव्ययेन औषधमुत्पाद्य तद्भक्षणेन नदीपर्वतलङ्घनमहिम्ना बहुतरधनमर्जितं तस्याविभाज्यता स्यादत आह किञ्चेति। तादर्थ्यमेवेति। तथाचोपकारकत्वस्य ग्रामाणिकत्वेनापहापयितुमशक्यत्वात् तादर्थ्यमेवोपघातस्य विशेषणमिति भावः। एतेनानुपघ्नन् पितृद्रव्यमित्यादेरर्जनोद्देशेन धनोपघातं विना यदर्जितमित्येवार्थ इति बोध्यम्। अत्र वृद्धसम्मतिमाह अत एवेति। यतस्तादर्थ्यं विवक्षितं नोपकारकत्वमत एवेत्यर्थः। दत्त्वेत्यनेन तादर्थ्यं व्यक्तमेव तेनाभिहितमिति भावः। स्वयमपि लोकाचाररूपसंवादं दर्शयति अत एवेति। पुत्रोपनयनेति। व्रतभिक्षा। ब्रह्मचर्यमिक्षा। आदिना समावर्त्तनोत्तरराजप्रसादलब्धभिक्षापरिग्रहः। तथाचोक्तम्। आवृत्तानां गुरुकुलात् विप्राणां पूजको भवेत्। नृपाणामक्षयो ह्येष विधिर्ब्राह्मोऽभिधीयत इति वैवाहिकस्य विवाहे श्वशुरादितो लब्धस्य। तत्रापि धनव्ययस्य कथं न धनार्जनार्थत्वमत आह धनप्रेप्सवेति। उपसंहरति तस्मादिति।।४८-५१।।

**जितेन्द्रियेणापि बहुप्रकारं विमृष्योक्तं तदस्य यावदुक्तप्रपञ्चस्य संक्षेपणायमर्थः प्रत्येतव्यः यत्किञ्चिद्धनमसाधारणोपार्य्यार्जितं तदसाधारणं विस्पष्टार्थन्तु विद्याधनन्तु यद यस्येत्वादिना (मनु ९।२०६) उदाहरणप्रपञ्चेनोपन्यस्तम् असाधारणत्वादेवाविभाज्यमेवंविधमेव धनं साधारणमपि साधारणहेतुसमुत्थमेवंविधमेव तदपि सुखावबोधार्थं क्वचिदर्थसाधारण्येन क्वचिच्च व्यापारतथात्वेन सम्बन्धसाधारण्येन च प्रदर्शितमित्यन्तेन।।५२।।**

**बालकेनाप्युक्तं न ह्येकेन भ्रात्रा विद्यादिना लब्धेऽपरेषामधिकारसम्भवः प्रमाणाभावादित्यन्तेन।।५३।।**

असाधारणधनशरीरायासाभ्यां यदर्जितं तदविभाज्यत्वे प्राक् स्वयमभिहिते जितेन्द्रियसंवादमप्याह जितेन्द्रियेणापीति। तदुक्तमाह तदस्येति। असाधारणोपायार्जितं साधारणधनानुपघातेन स्वयमेवार्जितम्। उपन्यस्तं विद्याधनादिकमिति शेषः एतेषु प्रायेणासाधारण्यसम्भवादिति भावः। एवंविधमेव विद्याशौर्य्यादिलब्धमेव। साधारणमपीति। साधारणहेतुसमुत्थं एवंविधमपि साधारणमेवेति अप्येवशब्दयोर्वैपरीत्येन योजना कार्य्या अन्यथा क्रमागतस्यापि साधारणत्वेन एवंविधमेव साधारणमिति यथाश्रुतासङ्गतेः। सुखावबोधार्थं विशेषरूपेण शीघ्रबोधार्थम्। अर्थसाधारण्येनेति। यथा साधारणं समाश्रित्येत्यादि। व्यापारसाधारण्यं यथा अविद्यानान्तु सर्वेषामीहातश्चेद्धनं भवेत्। समस्तत्र विभागः स्यादपित्र्य इति धारणा इत्यादि। सम्बन्धसाधारण्यं यथा ऊर्ध्वं पितुश्च मातुश्चेत्यादि। इत्थञ्च यत्रामुकपुत्रत्वपुरस्कारेणैकस्मै दत्तं तत्र सर्वेषामेव तत्पुत्राणामधिकार इति प्रतिपन्नम्। प्रदर्शितं मुनिभिरिति शेषः। इत्यन्तेनेति। विमृष्योक्तमिति पूर्वेणान्वयः। उक्तार्थे संवादान्तरमाह बालकेनापीति। विद्यादिना लब्धे साधारणानुपघातेन इतरव्यापारनैरपेक्ष्येण चार्जिते।।५२-५३।।

**यश्चानुपघातप्रतिग्रहार्जितधनस्य विभागः शिष्टानां दृश्यते स भ्रातृस्नेहेन पौरुषबुद्ध्या वा नानुपपन्नः। यद्वा प्रतिग्रहधनस्य विद्याधनत्वात् विद्याधने च साधारणधनानुपघातार्जितेऽपि समविद्याधिकविद्यानां विभागस्य वाचनिकत्वात् तद्विभागं पश्यन्तो विद्याधनस्य विद्याविशेषकृतोऽयं विभाग इत्यजानन्तोऽविभक्तार्जितत्वेनायं विभाग इति भ्रान्ताः स्वयमपि तथैव व्यवहृतवन्तः तन्मूलश्चापरापरव्ययहार इति न किञ्चिदनुचितम्।।५४।।**

ननु भ्रातृस्नेहेन पौरुषबुद्ध्या वा दाने न्यूनाधिकस्य सम्भवात् कथं समतया प्रतिनियतो विभाग इत्यत आह यद्वेति। विद्याविशेषेति। विद्यार्जितधनस्य वो विशेषः समाधिकविद्याभ्यां विभाज्यत्वरूपः तत्कृतोऽयं विभाग इत्यजानन्त इत्यर्थः।।५४।।

**यत् पुनर्मनुवचनम्।**

**यत् किञ्चित् पितरि प्रेते धनं ज्येष्ठोऽधिगच्छति।**
**भागो यवीयसां तत्र यदि विद्यानुपालिनः।।**

**(मनु ९।२०४)**

**तस्यायमर्थः।**

**पितेव पालयेत् पुत्रान् ज्येष्ठो भ्रातॄन् यवीयसः।**
**पुत्रवच्चानुवर्त्तेरन् ज्येष्ठे भ्रातरि धर्मतः।। (मनु ९।१०८)**

**एतस्माद्वचनात् पितापुत्रवदवस्थानात् पित्रर्जित इवानुपघातार्जितेऽपि ज्येष्ठधने कनिष्ठानामधिकारः एतावान् परं विशेषः पित्रर्जितेऽविदुषामप्यधिकारो ज्येष्ठार्जिते पुनर्विदुषामेव।।५५।।**

**एतच्च पितरि प्रेत इति ज्येष्ठ इति यवीयसामिति विद्यानुपालिन इति पदप्रयोगस्यानर्थक्यात् सिध्यति।।५६।।**

**तस्मादविभक्तार्जितत्वमात्रेणाविभक्तभ्रात्रन्तरस्य भवतीत्यसङ्गतं वचनम्।।५७।।**

ज्येष्ठोऽधिगच्छतीति, निरपेक्षश्रुतिबलात् ज्येष्ठ एवासाधारणधनश्रमाभ्याम् अर्जयतीत्यर्थः। पितापुत्रवदवस्थानादिति। पित्रुपरमानन्तरमिति शेषः वचनस्य पित्रुपरमप्रकरणीयत्वात्। ज्येष्ठधने न तु मध्यमार्जितधने। ननु सामान्यवचनस्य पित्रुपरमानन्तरं पितापुत्रवदवस्थानविषयत्वे किं प्रमाणमत आह एतच्चेति। पितरि प्रेत इति। अनेन जीवति पितरि ज्येष्ठस्यासाधारणार्जिते न कनिष्ठानां भाग

इति प्रतिपादनात् पित्रुपरमानन्तर्य्यलाभः। ज्येष्ठ इति यवीयसामिति आभ्याम् उत्तरवचने पितापुत्रवदवस्थितौ ज्येष्ठयवीयःपदप्रयोगबलाच्च पितापुत्रवदवस्थानलाभः। विद्यानुपालिन इति। तेन विदुषामेवेति सिद्धम्, आनर्थक्यात् सामान्यत एव ज्येष्ठार्जिते कनिष्ठमात्राधिकारे आनर्थक्यात्।।५५-५७।।



# षष्ठः अध्यायः

## द्वितीय परिच्छेदः

**तत्र विद्याधनं तावदभिधीयते। तत्र कात्यायनः।**

**उपन्यस्ते तु यल्लब्धं विद्यया पणपूर्वकम्।**
**विद्याधनन्तु तद्विद्यात् विभागे न नियोजयेत्।।**
**शिष्यादार्त्विज्यतः प्रश्नात् सन्दिग्धप्रश्ननिर्णयात्।**
**स्वज्ञानशंसनात् वादात् लब्धं प्राध्ययनाच्च यत्।।**
**विद्याधनन्तु तत् प्राहुर्विभागे न नियुज्यते।**
**शिल्पेष्वपि हि धर्मोऽयं मूल्याद यच्चाधिकं भवेत्।।**
**परं निरस्य यल्लब्धं विद्यया द्यूतपूर्वकम्।**
**विद्याधनन्तु तद्विद्यान्न विभाज्यं बृहस्पतिः।।१।।**

**यदि भवान् भद्रकमुपन्यस्यति तदा भवते मया एतावद्देयमिति पणितं तत्रोपन्यासं निस्तीर्य्य लभते तन्न विभाज्यम्।।२।।**

**शिष्यादध्यापितात्।।३।।**

**आर्त्विज्यतः यजमानात् दक्षिणादिना लब्धम्।।४।।**

**दक्षिणा च न प्रतिग्रहो वेतनरूपत्वात् तस्याः।।५।।**

**तथा यत्किञ्चित् विद्यायां प्रश्ने निस्तीर्णे अपणितमपि यदि कश्चित् परितोषात् ददाति।।६।।**

**तथा यो ह्यस्मिन् शास्त्रार्थे मम संशयमपनयति तस्मै सुवर्णमिदं ददामीत्युपस्थितस्य संशयमपनीय यल्लब्धं, वादिनोर्वा सन्देहे न्यायकरणार्थमागतयोः सम्यङ्निरूपणेन यल्लब्धं षष्ठांशादिकम्।।७।।**

**तथा शास्त्रादिषु स्वप्रकृष्टज्ञानं विभाव्य यत् प्रतिग्रहादिना लब्धम्।।८।।**

**तथा द्वयोः शास्त्रविज्ञानविवादेऽन्यत्रापि यत्र कुत्रचिदन्योन्यज्ञानविवादे निर्जित्य यल्लब्धम्।।९।।**

**तथैकस्मिन् देये बहूनामुपप्लवे येन प्रकृष्टमधीत्य यल्लब्धम्।।१०।।**

**तथा शिल्पादिविद्यया चित्रकरसुवर्णकारादिभिर्लब्धम्।।११।।**

**द्यूतेनापि परं निर्जित्य यल्लब्धं तत् सर्वमविभाज्यमितरैः।।१२।।**

असाधारणार्जितस्यापि विद्याधनस्य समविद्याधिकविद्ययोर्विभाज्यत्वमुक्तं तच्च विद्याधनं किमित्याकाङ्क्षायां तन्निरूपणार्थमाह तत्रेति। तत्र तेष्वविभाज्यमानेषु मध्ये। अत्रेति पाठे अस्मिन्नवसरे इत्यर्थः। उपन्यस्ते त्विति। एतत् सर्वं स्वयमेव व्याख्यास्यति। मूल्यादीति। साधारणस्वर्णादिकमादाय कुण्डलादिकं निर्माय स्वर्णादिमूल्यात् शिल्पगुणेन यदधिकमूल्यं स्यात् तद्विद्याधनमित्यर्थः। विद्ययेति। द्यूतातिशयनैपुण्येन द्यूतपूर्वकं यल्लब्धमित्यर्थः। वचनार्थान् क्रमेणाह यदीत्यादिं उपन्यासं निस्तीर्य्यं भद्रकमुपन्यस्य। स्वज्ञानसंशनादित्यनेनाभिधास्यमानप्रतिग्रहधनेन पौनरुक्त्यमपाकर्त्तुमाशङ्क्याह दक्षिणा

चेति। न प्रतिग्रहः न प्रतिग्रहेण लब्धं धनम्। प्रश्ने निस्तीर्णे प्रश्नस्य सम्यगुत्तरे दत्ते एषा प्रश्नादित्यस्य व्याख्या। सन्दिग्धप्रश्नेति व्याचष्टे तथा यो ह्यस्मिन्निति अत्रैव विकल्पेन व्याख्यान्तरमाह वादिनीवेति। स्वज्ञानशंसनादिति व्याचष्टे तथा शास्त्रादिष्विति। वादादित्वस्यार्थमाह तथा द्वयोरिति। निर्जित्य एककोटिव्यवस्थापनेन विवादमपनीय लब्धं वादिपणितं राज्ञा वा प्रसाददत्तमित्यर्थः। प्राध्ययनादिति व्याचष्टे तथैकस्मिन्निति। शिल्पेष्वपीत्यस्यार्थमाह तथा शिल्पादीति। लब्धं शिल्पिगुणेन यदधिकं लब्धम्।।१-१२।।

**तदयमर्थो कयाचिद्विद्यया यया यल्लब्धमर्जकस्यैव तत् नेतरेषां प्रदर्शनार्थं तु कात्यायनेन विस्तरेणोक्तं श्रीकरादिभ्रमनिरासार्थम्॥१३॥**

**अतः स्वज्ञानख्यापनादिना यत् प्रतिग्रहलब्धं तदपि विद्याधनमेव विद्ययैव विदुषे प्रतिग्रहदानात्॥१४॥**

**तथा यमः।**

**विद्याशीलो धर्मयुक्तः प्रशान्तः क्षान्तोदान्तः सत्यवादी कृतज्ञः।**
**वृत्तिग्लानो गोहितो गोशरण्यो दाता यज्वा ब्राह्मणः पात्रमाहुः।।**
**अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम्।**
**नैषां प्रतिग्रहो देयो न शिला तारयेच्छिलाम्।।१५।।**

**विद्वत्तयैव पात्रत्वात् अविदुषाञ्चापात्रत्वात्॥१६॥**

**अतो यत् केनचिदुक्तं विद्याधनन्तु विद्याध्यापननिमित्तं यत् तदुच्यते इति तदुक्तवचनादर्शनिनेति हेयमेव, विद्याशब्दस्य विदज्ञान इत्यस्माद्धातोर्निष्पत्तेर्ज्ञानवचनात्॥१७॥**

सर्वानुगमकमाह तदयमिति। तर्हि एतदेव मुनेरभिधानमुचितं किं विस्तरेणेत्यत आह प्रदर्शनार्थमिति। अनुपघातार्जितविद्याधनोदाहरणार्थमित्यर्थ। श्रीकरादीति। अविभक्तार्जितत्वमात्रेणैव विभाज्यत्वमिति तेषां भ्रम तन्मूलकस्य परेषां तथाविधभ्रमस्य निरासार्थमित्यर्थः। अत इति कात्यायनेन विद्याधनमध्यपठितत्वादित्यर्थः। विद्याधनमेवेति। तेनात्र समाधिकविद्ययोरेव भागो नेतरेषामिति भावः। प्रतिग्रहधने विद्याधनपदस्य यौगिकत्वमाह विद्ययैवेति। प्रमाणमाह तथा यम इति। धर्मयुक्तः नित्यनैमित्तिकस्वधर्मात्यागी। प्रशान्तः स्वल्पलाभेनापि सन्तुष्टः। क्षान्तः केनापि पीड़ितोऽपि समर्थः सन् तत्पीड़ापराङ्मुखः। दान्तः इन्द्रियादिदमनशीलः। कृतज्ञः प्रत्युपकारे सयत्नः। वृत्तिग्लानः शिलोञ्छादिवृत्तिः वृत्तिहीनो वा। गोहितो ग्रोग्रासाहर्त्ता। गोशरण्यो व्याघ्रादितो दुर्गाच्च परित्रायकः। आहुरित्याहुः। तदुच्यते तन्मात्रमुच्यते उक्तवचनादर्शनेन कात्यायनवचनादर्शनेन। विद ज्ञान इति। तेन शिल्पद्यूतादिलब्धस्यापि ग्रहणमित्युक्तम्।।१३-१७।।

**यच्च प्रतिग्रहधनस्यापि विद्याधनत्वेन याजनाध्यापनप्रतिग्रहाणां सङ्कीर्णत्वमापादितं श्रीकरेण तदतिमन्दं विद्याधनत्वसामान्यस्य याजनाध्यापनप्रतिग्रहादिनानाव्यक्तिसम्बन्धेऽपि व्यक्तीनामसङ्कीर्णत्वात् तदापि याजनाध्यापनस्याप्रतिग्रहत्वात् गोत्वसमवायेऽपि नीलकपिलकापोतिकादिव्यक्तीनामसङ्कीर्णत्वस्याविवादात्॥१८॥**

**अतएव शिष्यादार्त्विज्यतः प्राप्तयोर्विद्याधनत्वं स्मरन् मुनिर्याजनाध्यापनयोः सङ्करात् कथं न ब्रिभेति। अतः पक्षग्रहणमात्रेण तदभिधानमिति हेयम्॥१९॥**

सङ्कीर्णत्वमिति। सङ्कीर्णत्वमभेदः। तथाहि याजनस्य विद्याधनत्वं विद्ययैवार्त्विज्यकरणात् एवमध्यापनप्रतिग्रहयोरपीति त्रयाणामेव विद्याधनत्वेन परस्परं भेदाभाव इति श्रीकराशयः। व्यक्तीनामिति।

तथाच याजनादीनां विद्याधनत्वाविशेषेऽपि याजनत्वादिना परस्परं भेदसत्त्वात् न सङ्कीर्णत्वमिति भावः। गोत्वेति। यथा नीलकपिलादिगोव्यक्तीनां गोत्वाविशेषेऽपि परस्परमसङ्कीर्णत्वं विशेषरूपेण भेदसत्त्वात् तद्वदित्यर्थः। अतएव सामान्यरूपावच्छिन्नानामपि विशेषरूपेण भेदसत्त्वादेव। कथमिति। केनापि प्रकारेण न विभेतीत्यर्थः। पक्षग्रहणेति। पूर्वपक्षग्रहणमात्रेणेत्यर्थः। तदभिधां सङ्कीर्णत्वाभिधानम्। हेयमिति। यतः पूर्वपक्षवचनं न तु सिद्धान्तवचनं तत् अतो हेयमित्यर्थः। यद्वा पक्षग्रहणमात्रेण याजनादिना अर्जकस्य पक्षग्रहणमात्रेण आपत्तिमुखेन याजनादिधने विद्याधनत्वनिरासेन तत्र समाधिकविद्ययोर्भागनिरासात् तत्पक्षग्रहणस्य स्फुटत्वात् तदभिधानं पक्षाश्रितं तदभिधानम् अतो हेयमित्यर्थः।।१८-१९।।

**शौर्य्यादिधनमाह कात्यायनः।**

**आरूह्य संशयं यत्र प्रसभं कर्म कुर्वते।**
**तस्मिन् कर्मणि तुष्टेन प्रसादः स्वामिना कृतः।।**
**तत्र लब्धन्तु यत् किञ्चिद्धनं शौर्य्येण तद्भवेत्।**
**ध्वजाहृतं भवेद यत्तु विभाज्यं नैव तत् स्मृतम्।।**
**संग्रामादाहृतं यत्तु विजित्य द्विषतां बलम्।**
**स्वाम्यर्थं जीवितं त्यक्त्वा तध्वजाहृतमुच्यते।।२०।।**
**वैहाहिकन्तु तद्विद्याद्भार्य्यया यत् सहागतम्।।२१।।**
**भार्य्याप्राप्तिकाले लब्धमित्यर्थः।।२२।।**

**तथा अपरमप्यविभाज्यमाहतुर्मनुविष्णू।**

**वस्त्रं पत्रमलङ्कारं कृतान्नमुदकं स्त्रियः।**
**योगक्षेमप्रचारञ्च न विभाज्यं प्रचक्षते।।२३।।**

**(मनु ९।२१९)**

**वस्त्रमङ्गयोजितं पंक्तिपरिच्छदार्दञ्च। पत्रं वाहनम् अश्वादि। अलङ्कारम् अङ्गुलीयकादिम्। कृतान्नं लड्डुकादि। उदकं कूपवापीगतं प्रचारोपयुक्तम्। स्त्रियो दासीव्यतिरिक्ताः। योगक्षेमप्रचारं शय्यासनभोजनाचमनाद्युपयुक्तभाजनादीनि।।२४।।**

**तथा व्यासः।**

**अविभाज्यं सगोत्राणामासहस्त्रकुलादपि।**
**याज्यं क्षेत्रञ्च पत्रञ्च कृतान्नमुदकं स्त्रियः।।२५।।**

याज्यं यागस्थानं देवता वा न तु याजनलब्धं धनं, तस्य विद्याधनत्वेनैव गतार्थत्वात्।।२६।।

**तथा कात्यायनः।**

**गोप्रचारश्च रथ्या च वस्त्रं यच्चाङ्गयोजितम्।**
**प्रयोज्यं न विभाज्यन्तु शिल्पार्थं तु बृहस्पतिः।।२७।।**

**प्रायोज्यं यद् यस्य प्रयोजनार्हं यथा श्रुतादौ पुस्तकादि तत् मूर्खैर्न विभजनीयं, शिल्पोपयुक्तञ्च शिल्पिनामेव नातद्विदाम्।।२८।।**

**तथा शङ्खलिखितौ न वास्तुविभागो नोदकपात्रालङ्कारानुपयुक्तस्त्रीवाससामपां प्रचाररथ्यानां विभागश्चेति प्रजापतिः।।२९।।**

संशयमारुह्य उत्कटसम्भावनाविषयमरणमप्यङ्गीकृत्य तत्र लब्धं तस्मिन् प्रसादे सति लब्धम्। तत् ध्वजाहतमिति। यद्यप्येतस्यापि शौर्य्यधनत्वेनैव अविभाज्यत्वस्य सिद्धेः पृथगभिधानं व्यर्थं तथापि ध्वजाहतपरिभाषाव्युत्पादनार्थमेव तद्वचनारम्भ इति बोध्यम्। भार्य्याप्राप्तिकाल इति। उपलक्षणमेतत् जामातृत्वपुरस्कारेण त्वन्यदापि लब्धं बोध्यम्। अङ्गयोजितमिति। तेन विक्रीयवस्त्राभरणम् ऋणमुद्ग्राह्यमण्वपीति बृहस्पतिवचनमेतद्वयतिरिक्तवस्त्रपरं बहुमूल्यवस्त्रपरमित्यन्ये। प्रचारोपयुक्तं व्यवहारोपयुक्तं तेन यावद्भिर्यस्य निर्वाहः तेन तावन्त्येव ग्राह्याणि न तु तत्र समांशनियम इति भावः। एकां स्त्रीं कारयेत् कर्म यथांशेन गृहे गृहे इति बृहस्पतिना दासीविभागोक्तेराह दासौव्यतिरिक्ता इति। शय्येति। तथाच सर्वेषामेव व्यवहारिकवस्तुषु प्रत्येकनियततुल्यमूल्येषु वस्त्रालङ्कारादिषु च सत्सु यद् यस्य तत्तस्यैव न तेषां विभाग इति तात्पर्य्यार्थः। न तन्मूर्खैरिति। एतच्च पुस्तकतुल्यमूल्यद्रव्यान्तरसत्त्वे पुस्तकं पण्डितैरेव मूर्खैस्तु द्रव्यान्तरमेव ग्राह्यमित्येतत्परम् अन्यथा क्रमागतस्य पुस्तकमात्रधनस्य सत्त्वे तत्र मूर्खाणामनधिकारे तेषां वृत्तिलोपापत्तेरिति बोध्यम्। अनुपयुक्तस्त्रीवाससामिति। अनुपयुक्तं मूर्खाणां पुस्तकादि। स्त्रीवाससौ प्रागुक्ते।।२०-२९।।

**पितरि जीवति यस्मिन् वास्तौ येन गृहोद्यानादिकं कृतं तत्तस्याविभाज्यं पितुरप्रतिषेधेनानुमतत्वात्।।३०।।**

**तथा पैतामहमपि द्रव्यं यच्चिरं नष्टम् अक्षमत्वात् अथवा प्रतीकारपराङ्मुखतया इतरैरप्रतिकृतं पित्रा स्वधनव्ययशरीराया साभ्यांप्रतिकृतं तत् पितुरेव न साधारणम्।।३१।।**

**तथा मनुः।**

**पैतृकं तु पिता द्रव्यमनवाप्तं यदाप्नुयात्।**
**न तत् पुत्रैर्भजेत् सार्द्धमकामः स्वयमर्जितम्।।३२।।**

**(मनु ९।२०९)**

**पैतृकं द्रव्यं पुत्रैरनवाप्तमप्रतिकृतम्।**
**अनवाप्यमिति अनवाप्येति पाठावनाकरौ।।३३।।**

**आह बृहस्पतिः।**

**पैतामहं हतं पित्रा स्वशक्त्या यदुपार्जितम्।**
**विद्याशौर्य्यादिना प्राप्तं तत्र स्वाम्यं पितुः स्मृतम्।।**
**प्रदानं स्वेच्छया कुर्य्याद्भोगञ्चैव ततो धनात्।**
**तदभावे तु तनयाः समांशाः परिकीर्त्तिताः।।३४।।**
**स्वशक्त्येत्यसाधारणधनशरीरव्यापारं दर्शयति।।३५।।**

**वचनद्वयेऽपि पितृपदमुपलक्षणं स्वयमर्जितमिति हेतोरभिधानात्।।३६।।**

**एवञ्च स्वार्जिताक्रमागतद्रव्यवदेव क्रमागतेऽप्येवंरूपे भूमिव्यतिरिक्ते व्यवस्था वोद्धव्या।।३७।।**

**भूमौ तु विशेषमाह शङ्खः।**

**पूर्वनष्टान्तु यो भूमिमेक एवोद्धरेच्छ्रमात्।**
**यथाभागं भजन्त्यन्ये दत्त्वा भागं तुरीयकम्।।३८।।**

**यद्यपि असाधारणधनशरीरव्यापारमेवकारेण दर्शयति तथापि ऊर्ध्वर्त्तुर्नासाधारण्यं किन्तु प्रतिकृतभूमेश्चतुर्थांशोऽधिकस्तस्मै दातव्यः भूमिपदसामर्थ्यात् तदविवक्षाकारणाभावात्।।३९।।**

**इति विभाज्याविभाज्यनिरूपणम्।।४०।।**

न वास्तुविभाग इति व्याचष्टे पितरि जीवतीति। पुत्रैरनवाप्तमिति। पाठावनाकराविति। अनवाप्येति पाठे अन्येषु निरस्तेषु इत्यध्याहारस्य अनवाप्यमिति पाठे तु अन्यैरशक्योद्धारमित्यर्थे लक्षणायाः प्रसङ्गादिति भावः। तदभावे तु तनया इति। अत्र समानांशाभिधानं विंशोद्धारं निरस्यति अनन्यथा-सिद्धेर्वचनादिति भावः। अधिक इति। तथाच उद्धर्त्रे उद्धृतभूमेश्चतुर्थांशमधिकं दत्त्वा तेन सह सर्वे समं विभजेरन्निति वचनार्थः। न तु अन्य इति श्रवणात् तस्मै तुरीयांशमात्रदानं तथात्वे अनुद्धर्त्तुरेकत्वे द्वित्वे या उर्द्धर्त्तुरिव स्वल्पप्राप्त्या विषमशिष्टत्वापत्तेरिति भावः। भूमिपदेति। भूमेश्चतुर्थांशमित्युक्तार्थे प्रमाणमेतत्।।३०-४०।।



## सप्तमः अध्यायः

**सम्प्रति विभागानन्तरजातस्य विभागः कथ्यते, तत्र मनुनारदौ।**

**ऊर्ध्वं विभागज्जातस्तु पित्र्यमेव हरेद्धनम्।**
**संसृष्टास्तेन वा ये स्युर्विभजेत स तैः सह।।१।।**

**(मनु ९।२१६।नारद १३।४३)**

**यदि पिता पुत्रान् विभज्य स्वयञ्च यथाशास्त्रं भागं गृहीत्वा पुत्रैरसंसृष्ट एव मृतः तदा विभागनन्तरं जातः पितृधनमेव गृह्णीयात् स एव तस्य भागः, अथ कैश्चित् पुत्रैः सह संसृष्टः पिता मृतः तदा संसृष्टेभ्यो भागं गृह्णीयात्।।२।।**

**तथाच गौतमः। विभक्तजः पित्र्यमेव।।३।।**

**(गौतम २८।२७)**

**विभागानन्तरं यस्य गर्भाधानं स विभक्तजनः विभक्तेन जनितः गर्भाधानादृते जनकस्य जननव्यापाराभावात् अतो यद्यज्ञातगर्भायामेव स्त्रियां विभक्ताः पुत्राः तदनन्तरं जातो भ्रातृभ्य एव भागं गृह्णीयात्।।४।।**

**न केवलमेक एव किन्तु बहवोऽपि विभक्तजाताः पित्र्यमेव धनं गृह्णीयुः। यदाह बृहस्पतिः।**

**पित्रा सह विभक्ता ये सापत्ना वा सहोदराः।**
**जघन्यजाश्च ये तेषां पितृभागहरास्तु ते।**
**अनीशः पूर्वजः पित्र्ये भ्रातृभागे विभक्तजः।।५।।**

सम्प्रतीति। पूर्वजातविभागानन्तरमित्यर्थः। यथाशास्त्रमित्यनेन शास्त्रानभिज्ञतया यदि पिता स्वयं स्वल्पं गृहीत्वा विभक्तः तदा विभक्तजस्य भ्रातृभ्यो भागग्रहणं ध्वनितम्। अत इति। यतो विभागानन्तराहितगर्भजातस्यैव विभक्तजत्वम् अत इत्यर्थः। भ्रातृभ्य इति। एतच्च यदा पिता स्वग्राह्यं गृहीत्वा अवशिष्टं पुत्रेभ्यो दत्त्वा विभक्त एव तिष्ठति तदा बोध्यम्, पितृमरणे तु पितृ-भ्रातृभागानेकत्रीकृत्य यथाशास्त्रं सर्वैर्विभाज्यमिति। चूडामणिस्तु पितरि जीवत्यपि पितामहधने तद्गृहीतद्व्यंशादेरशास्त्रीयतया सर्वमिश्रणेन पुनर्विभाग इत्याह। अत्र ज्ञातगर्भायास्तु यदि गर्भस्थस्य भागः प्रागेव रक्षितः तदा पित्र्यं भागं विभक्तजाभावे सर्व एव विभजेयुः अथ पित्रैव चेद्गर्भस्थं निश्चित्यापि प्रभुतया पुत्रेभ्यो भागो दत्तः तदा तेषामेव तत्र स्वाम्यात् न तत्र गर्भस्थस्याधिकारः किन्तु पित्र्य एवेति, विभक्तजसत्त्वे तु तेन सह तुल्यांशितेति बोध्यम्। पित्रा सहेति। जघन्यजा विभागानन्तरं पित्रोत्पादिताः ते पितृभागहरा न तु विभागात् पूर्वं जाताः। तत्र हेतुमाह अनीश इति। स्वामिनामेव विभागार्हत्वादिति भावः। पूर्वोक्तविवरणमेतदिति केचित्।।१-५।।

**विभागात् पूर्वं जातः पित्र्ये धनेऽनधिकारी विभक्तजश्च भ्रातृधने। तथा,**

**पुत्रैः सह विभक्तेन पित्रा यत् स्वयमर्जितम्।**
**विभक्तजस्य तत् सर्वमनीशाः पूर्वजाः स्मृताः॥**
**यथा धने तथर्णेऽपि दानाधानक्रयेषु च॥६॥**
**सर्वशब्दात् बहुतरमपि धनं पित्रार्जितं विभक्तजस्यैव॥७॥**
**परस्परमनीशास्ते मुक्त्वाशौचोदकक्रियाः॥८॥**

**अशौचोदकक्रियामात्रप्रदर्शनेन सुदूरमेव धनाधिकारं निरस्यति॥९॥**

**इदञ्च पित्रुपात्तधनमात्रविषयम्। यदि तु पैतामहधनमपि भूम्यादिकं विभक्तं तदा तद्धनविभागं भ्रातृभ्य एव गृह्णीयात् मातुर्निवृत्ते रजसि तद्विभागविधानात्॥१०॥**

**तदाह विष्णुः। पितृविभक्ता विभक्तानन्तरोत्पन्नस्य विभागं दद्युरिति॥११॥ (विष्णु १७।३)**

**तथा याज्ञवल्क्यः।**

**विभक्तेषु सुतो जातः सवर्णायां विभागभाक्।**
**दृश्याद्वा तद्विभागः स्यादायव्ययविशोधितात्॥१२॥**

**(याज्ञवल्क्य २।१२३)**

**पित्र्यमेव हरेद्धनमिति विरोधात् उक्तयुक्तेश्च क्रमागतधनविषयमिदम्॥१३॥**

तथेति। बृहस्पतिरेवेत्यर्थः। स्वयमर्जितमित्यनेन पुत्रान्तरेण विभक्तसंसृष्टिनापि पित्रा असाधारणधनव्ययशरीरायासाभ्यां यदुपार्जितं तदपि विभक्तजस्यैव न संसृष्टिनामित्युक्तम्। यथा धन इति। विभागानन्तरलब्धधनग्रहणवत् विभक्तपितृणपरिशोधनमपि विभक्तजैरेव कार्य्यम् एवमेतादृशेन पित्रा यद्दातुं प्रतिश्रुतं यच्चाहितं बन्धकविधया दत्तं वा क्रीत्वा मूल्यं न दत्तं वा तत्सर्वं तस्यैव समाधेयमित्यर्थः। निरस्यति बृहस्पतिरेव। भूम्यादिकमित्यनेन निबन्धद्विपदयोर्ग्रहणं मणिमुक्तादेः स्वार्जिततुल्यत्वात्। निवृत्ते रजसीति। तथाचतद्विभागस्य अशास्त्रीयत्वात् निवर्त्तनीयत्वमिति भावः। दृश्याद्वेति। वाशब्दोऽवधारणार्थः तेन भुक्तव्यवच्छेदः। उक्तयुक्तेरिति। मातुर्निवृत्ते रजसीत्युक्तयुक्तेरित्यर्थः। तथाच ज्ञातेऽज्ञाते वा गर्भे मातृरजोनिवृत्तिं विना वा कृतपितामहधनविभागस्याशास्त्रीयतया निवर्त्तनीयत्वेन तद्धनविभागविषयत्वमेव अनन्तरोक्तवचनयोरिति पूर्वेषां मन्वादिवचनानां पितुः स्वार्जितविषयत्वमेवेति न वैपरीत्याशङ्का कर्त्तव्येति भावः।।६-१३।।



# अष्टमः अध्यायः

**अथ विभागानन्तरागतविभागः। तत्र बृहस्पतिः।**

**कृतेऽकृते विभागे वा रिक्थी यत्र प्रदृश्यते।**
**सामान्यञ्चेद्धवेद् यत्तु तत्र भागहरस्तु सः॥**
**ऋणं क्षेत्रं गृहं लेख्यं यस्य पैतामहं भवेत्।**
**चिरकालप्रोषितोऽपि भागभागागतस्तु सः॥१॥**
**गोत्रसाधारणं त्यक्त्वा योऽन्यदेशं समाश्रितः।**
**तद्वंशस्यागतस्यांशः प्रदातव्यो न संशयः॥**

**तृतीयः पञ्चमश्चैव सप्तमो वापि यो भवेत्।**
**जन्मनामपरिज्ञाने लभेतांशं क्रमागतम्॥२॥**
**यं परम्परया मौलाः सामन्ताः स्वामिनं विदुः।**
**तदन्वयस्यागतस्य दातव्या गोत्रजैर्मही॥३॥**

**तदनेन चिरप्रोषितवंश्येन समन्ताद्वासिभिर्मौलैरात्मज्ञापनपूर्वकं भागग्रहणं कार्य्यम्॥४॥**

**इति विभागानन्तरागतविभागः॥५॥**

अथेति। यद्यपि विभागानन्तरागतस्याधिकारितया विभागः सिद्ध एव तथापि तद्वंशपरम्पराजातस्य सप्तमपुरुषपर्य्यन्तस्यैव विभागज्ञापनार्थं पृथग्वचनारम्भः, स्वदेशावस्थाने चतुर्थपुरुषपर्य्यन्तस्यैव विभागार्हत्वादिति बोध्यम्। कृते देशान्तरस्थितं विहाय विभागे कृते। सामान्यं साधारणं विभागार्हमिति यावत्। लेख्यं शासनारूढ़ं यद्दृणम्, पैतामहं पूर्वपुरुषसम्बन्धि। तेन पूर्वपुरुषवित्तस्येव तत्कृतस्यापि ऋणस्यांशिता। गृहादिकं साधारणद्रव्यमात्रोपलक्षणम्। सप्तमो वेति वा शब्दः सप्तमान्तर्गतानुक्त-समुच्चायकः, तेन सप्तमपर्य्यन्तानामेव देशान्तरादागतानां भागिता, न त्वष्टमादेरिति। अत एवा-सप्तमादृक्थविच्छित्तिर्भवतीति वचनमप्येतद्विषयमिति। केचित्तु वाकारोऽनास्थायां, तेन वीजिस्वामि-मरणादिदशायां यदि तत् प्रपौत्रपर्य्यन्तोऽस्य पूर्वजस्तिष्ठेत् तदा तस्य स्वामित्वेन तत्परम्पराजातस्य सप्तमादूर्ध्वस्याप्यधिकारः यथोत्तरं धनस्य संक्रान्तत्वात्, यदि तु वीजिस्वामिमरणादितः प्रागेव तत्प्रपौत्रपर्य्यन्तोऽस्य पूर्तजो ध्वस्तः तदा पञ्चमस्य पिण्डवहिर्भावेणानधिकारात् तत् पुत्रादेरपि नाधिकार इत्याहुः, तदसत्, तथा सति देशस्थविदेशस्थयोर्व्यवस्थायां विशेषाभावेन वचनवैयर्थ्या-पातात् अतएव मूलीभूतश्रुत्यन्तरकल्पनापि प्रामाणिकीति सुधीभिर्भाव्यम्। मौलाः वंशपरम्पराक्रमेण तद्देशावस्थायिनः। सामन्ताः प्रतिवासिन इत्यर्थः।।१-५।।



## नवमः अध्यायः

**सम्प्रत्येकपितृकाणां सवर्णानुलोमपरिणीतस्त्रीजातानां पुत्राणां विभागः कथ्यते॥१॥**

**अस्ति च सवर्णानुलोमस्त्रीपरिणयनम्। तथाच मनुः।**

**सवर्णाग्रे द्विजातीनां प्रशस्ता दारकर्मणि।**
**कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशोऽवराः॥**
**शूद्रैव भार्य्या शूद्रस्य सा च स्वा च विशः स्मृते।**
**ते च स्वा चैव राज्ञः स्युस्ताश्च स्वा चाग्रजन्मनः॥२॥**

**(मनु ३।१२-१३)**

**शूद्रैवेत्येवकारः सर्वत्र सम्बध्यते, सा ते ता इत्यनन्तरपूर्वोक्तपरामर्षात्, प्रतिलोमपरिणयनं सर्वथैव न कार्य्यमित्यर्थः॥३॥**

**कामतस्तु प्रवृत्तानामिति, दोषाल्पत्वख्यापनार्थं न तु दोषाभाव एव॥४॥**

**तदाहतुः शङ्खलिखितौ। भार्य्याः कार्य्याः सजातीयाः श्रेयस्यः सर्वेषां स्युरिति पूर्वः कल्पः, ततोऽनुकल्पः, चतस्रो ब्राह्मणस्यानुपूर्वेण, तिस्रो राजन्यस्य, द्वे वैश्यस्य, एका शूद्रस्य॥५॥**

**जात्यवच्छेदेन चतुरादिसङ्ख्या सम्बध्यते॥६॥**

एकपितृकाणामिति। एकपितृकाणां विभिन्नजातिमातृकाणां पुत्राणामित्यर्थः। अनुलोमेति। तेन प्रतिलोमपरिणयनं सर्वथैव नेति सूचितम्। ननु प्रतिज्ञेयं बालप्रलाप एव, एतैरेव गुणैर्युक्तः सवर्णः श्रोत्रियो वर इति याज्ञवल्क्येन सवर्णाविवाहमात्रस्य प्रतिपादनात् असवर्णाविवाहस्याप्रसक्तेरत आह अस्ति चेति। प्रशस्ता गार्हस्थ्योचितयज्ञादिधर्मोपयोगिनी, सवर्णाया एव सहत्वेन धर्मकर्माधिकारस्य भर्त्तुः शरीरशुश्रूषां धर्मकार्य्यञ्च नैत्यिकम्। स्वा स्वैव कुर्य्यात् सर्वेषां नान्यजातिः कथञ्चनेति मनुना प्रतिपादनात्। कामतः विषयगोचरातिरागतः, न तु गृहिधर्मलिप्सया, तेनैतासां विवाहो भवत्येव किन्तु केवलं रागाधीन एव स इति प्रतिपन्नम्। अतएव चतस्रो ब्राह्मणस्य परिणीताः तिस्रो द्वे चैका चेतरेषामिति सङ्ख्याऽप्याह स्म। अतएवात्राऽपि वैदिककर्मतया पूर्वं वृद्धिश्राद्धादिकर्त्तव्यमेव, गोभिलेन संस्कारप्रचयमभिधाय सर्वाण्येवान्वाहार्य्यवन्तीत्युक्तेः। दोषसत्त्वे हेतुमाह तदाहतुरिति। अत्रानुकल्पत्वकथनेन सवर्णापरिणयनसम्भवे तथाचरणस्यावैधत्वेन तदभिगमे प्रत्यवायः प्रतिपादित इति, बोध्यम्। जात्यवच्छेदेनेति। जात्या इत्यर्थः। तेन ब्राह्मणस्य पञ्चषट्ब्राह्मणीविवाहो न विरुद्ध इति भावः।।१-६।।

**एताः परिणीता एव भार्य्या भवन्ति। तथाह पैठीनसिः। चतस्रो ब्राह्मणस्य परिणीतास्तिस्रो द्वे चैका चेतरेषाम्।।७।।**

**इतरेषां राजन्यादीनां यथाक्रमं तिस्रो द्वे चैका चेति।।८।।**

**आनुलोम्येऽपि द्विजातेः शूद्रायां बहुदोषमाहतुर्मनुविष्णू।**

**हीनजातिस्त्रियं मोहादुद्वहन्तो द्विजातयः।**
**कुलान्येव नयन्त्याशु ससन्तानानि शूद्रताम्।।**
**शूद्रावेदी पतत्यत्रेरुतथ्यतनयस्य च।**
**शौनकस्य सुतोत्पत्त्या तदपत्यतया भृगोः।।**
**शूद्रां शयनमारोप्य ब्राह्मणो यात्यधोगतिम्।**
**जनयित्वा सुतं तस्यां ब्राह्मण्यादेव हीयते।।९।।**

**(मनु ३।१५-१६-१७)**

**तदनेन क्रमोढ़ाविषयत्वं वचनानां, हारीतवचनमपि मन्वाद्येकवाक्यतया परिणीताविषयम्। यथा—**

**ब्रह्महा न भवत्यन्यो ब्रह्महा वृषलीपतिः।**
**यस्तस्यामाहितो गर्भः स तेन ब्राह्मणो हतः।**
**अतएव शूद्रावर्जं द्विजातिभार्य्यामाह शङ्खः।**
**ब्राह्मणी क्षत्रिया वैश्या ब्राह्मणस्य प्रकीर्त्तिता।।**
**क्षत्रिया चैव वैश्या च क्षत्रियस्य प्रकीर्त्तिता।**
**वैश्यैव भार्य्या वैश्यस्य शूद्रा शूद्रस्य कीर्त्तिता।।१०।।**

**अतः स्वयमनूढ़ायां शूद्रायामपत्यजनने नैते दोषाः किन्तु स्वल्पदोषः प्रायश्चित्तञ्चाल्पमिति वक्ष्यति।।११।।**

उतथ्यतनयस्य गौतमस्य। पक्षत्रयमिदं ब्राह्मणादित्रयाणां व्यवस्थितं बोध्यम्। निन्देयं व्युत्क्रमोढ़ाविषयिणीति प्राचीनमतनिराकरणायाह तदनेनेति। कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशोऽवराः। शूद्रैव भार्य्या शूद्रस्य सा च स्वा च विशः स्मृते इति क्रमिकोढ़ां शूद्रामुपक्रम्य निन्दावचनेनेत्यर्थः।

व्युत्क्रमोढ़ाविषयत्वे च क्षत्रियादीनामपि व्युत्क्रमोढ़ात्वे दोषश्रवणात् हीनजातिपदवैयर्ध्यापत्तेरिति भावः। ननूढ़ाया ऋत्वभिगमस्व शास्त्रीयतया निन्दायाः स्वयमनूढ़ाविषयत्वमेव युक्तमित्वत आह हारीतेति। तथाचास्य वचनस्य पतिशब्दबलादूढ़ाविषयत्वेन तदेकवाक्यतया मन्वादिवचनमप्यूढ़ाविषयकं, विधिनिषेधौ तु श्येनवदुपन्नाविति भावः। अत एवेति। यत एव शूद्रापरिणयने तस्यामपत्योत्पादनादौ च दोषः। अतएवेत्यर्थः। स्वयमनूढ़ायामिति। अन्येनोढ़ायामित्यर्थः, तेन तदपरिणीतशूद्रासुताभिप्रायमिति वक्ष्यमाणेन न विरोधः।।७-११।।

**अत्र चातुर्वर्ण्यपुत्राणां विभागमाह मनुः।**

**त्र्यंशं दायाद्धरेद्विप्रो द्वावंशी क्षत्रियासुतः।**
**वैश्याजोऽध्यर्द्धमेकांशमंश शुद्रासुतो हरेत्।।**
**सर्वं वा रिक्थजातन्तु दशधा परिकल्प्य तत्।**
**धर्म्यं विभागं कुर्वीत विधिनानेन धर्मवित्।।**
**चतुरोऽशान् करेद्विप्र स्त्रीनंशान् क्षत्रियासुतः।**
**वैश्यापुत्रो हरेद्व्यंशमंशं शूद्रासुतो हरेत्।।१२।।**

**(मनु ९।१५१, १५२, १५३)**

**किञ्चिद्गुणवत्त्वेन विभागप्रकारद्वयम्।।१३।।**

**तत्र विष्णुः।**

**ब्राह्मस्य चतसृषु चेत् पुत्रा भवेयुरित्यादि। (विष्णु १८।१)**
**अनेन क्रमेणांशकल्पना अन्यत्रापि भवतीत्यन्तम्।।१४।। (विष्णु १८।४०)**

किञ्चिद्गुणवत्त्वेनेति। शूद्रापुत्रस्यापि किञ्चिद्गुणवत्त्वनिर्गुणत्वाभ्यामित्यर्थः। द्विजातिपुत्राणामपि, किञ्चिद्गुणवत्त्वेनेति केचित्। कीनाशो गोवृषो यानमलङ्कारय वेश्म च। विप्रस्योद्धारकं देयमेकांशश्च प्रधानत इत्युद्धारस्य प्रागभिहितत्वात् पूर्ववचनं स्वोद्धारविषयम् उत्तरवचनञ्चानुद्धारविषयमिति रत्नाकरः तदसत्, क्षत्रियविशोरुद्धारानुक्तेः तयोस्तदभावादाधिक्यविधानानुपपत्तेः। कीनाशो हलवाहकः। ब्राह्मणस्येत्यादि। आदिना पित्र्यमृवथं दशधा विभजेयुः ब्राह्मणीपुत्रश्चतुरोऽशानादद्यात् क्षत्रियापुत्रस्त्रीन्, द्वावंशौ वैश्यापुत्रः, शूद्रापुत्रस्त्वेकम्, अथ चेत् शूद्रापुत्रवर्जं ब्राह्मणस्य पुत्रा भवेयुः तदा नवधा विभजेयुः चतुस्विद्विभागीकृतानंशानादद्युः, वैश्यवर्जम् अष्टधा विभज्य चतुरस्त्रीनेकञ्च समादद्युः, क्षत्रियवर्जं सप्तधा कृत्वा चतुरो द्वावेकञ्च, ब्राह्मणवर्जं षड्धा कृत्वा त्रीन् द्वावेकञ्च, क्षत्रियस्य क्षत्रियवैश्यशूद्रेष्वेवं विभागः अथ ब्राह्मणस्य ब्राह्मणक्षत्रियौ पुत्रौ स्यातां तदा सप्तधा कृत्वा ब्राह्मणश्चतुरोंऽशान् गृह्णीयात् त्रीन् राजन्यः, ब्राह्मणस्य ब्राह्मणवैश्यौ चेत्तदा षड्धा विभज्य चतुरोंऽशान् ब्राह्मण आदद्यात् द्वौ वैश्यासुतः, अथ ब्राह्मणस्य ब्राह्मणशूद्रौ पुत्रौ स्यातां तदा पञ्चधा विभजेयातां चतुरोऽशान् ब्राह्मण आदद्यात् द्वौ वैश्यासुतः, अथ ब्राह्मणस्य ब्राह्मणशूद्रौ पुत्रौ स्यातां तदा पञ्चधा विभजेयातां चतुरोऽशान् ब्राह्मण आदद्यात् एकं शूद्रः, अथ ब्राह्मणस्य क्षत्रियवैश्यौ सुतौ स्यातां तदा तद्धनं पञ्चधा विभजेयातां त्रीनंशान् क्षत्रियस्त्वादद्यात् द्वावंशौ वैश्यः, अथ ब्राह्मणस्य क्षत्रियस्य वा क्षत्रियशूद्रसुतौ स्यातां तदा तद्धनं चतुर्द्धा विभजेयातां त्रीनंशान् क्षत्रिय आदद्यात् एकं शूद्रः, अथ ब्राह्मणस्य क्षत्रियवैश्ययोर्वा वैश्यशूद्रौ सुतौ स्यातां तदा तद्धनं त्रिधा विभजेयातां द्वावंशौ वैश्य आदद्यात् एकं शूद्रः, यदि ब्राह्मणीपुत्रौ द्वौ स्यातां शूद्रापुत्र एकः तदा ब्राह्मणीपुत्रौ अष्टभागानदद्याताम् एकं शूद्रासुतः, अथ शूद्रासूतौ द्वौ स्याताम् एको ब्राह्मणीपुत्रः तदा षड्धा विभज्य चतुरोऽशान्

ब्राह्मणस्त्वादद्यात् द्वावंशौ शूद्रासुताविति, अनेन क्रमेणांशकल्पनान्यत्रापि भवतीति विष्णुसूत्रं, विस्तरभयादनेन न लिखितम्। अन्यत्रेति। ब्राह्मणीपुत्र, एकः क्षत्रियापुत्रौ द्वौ क्षत्रियापुत्र एकः ब्राह्मणी पुत्रौ द्वावित्यादिष्वित्यर्थः। जन्मना ज्येष्ठो ब्राह्मणीपुत्रापेक्षया। भवेदिति। ब्राह्मणपुत्रेण सह समांशो भवेदित्यर्थः।।१२-१४।।

**ब्राह्मणजातो राजन्यापुत्र एव यदि जन्मना सर्वज्येष्ठो गुणवांश्च, तदा ब्राह्मणेन सह तुल्यभागः कार्य्यः, ब्राह्मणेन क्षत्रियेण वा जातो वैश्यश्चेत्तद्रूपः, तदा क्षत्रियेण सह तुल्यांशी। यथाह बृहस्पतिः।**

**विप्रेण क्षत्रियाजातो जन्मज्येष्ठो गुणान्वितः।**
**भवेत् समांशः क्षत्रेण वैश्याजातस्तथैव च।।**

**तथा बौधायनः। सवर्णापुत्रानन्तरापुत्रयोरनन्तरापुत्रश्चेद् गुणवान् ज्येष्ठभागं गृह्णीयात् गुणवान् हि शेषाणां भर्त्ता भवतीति।।१५।।**

**अनेनैव शूद्रस्याप्येवं विधस्य वैश्येन सह समांशिता दर्शिता।।१६।।**

**य तु प्रतिग्रहेण पित्रार्जिता भूमिः, सा ब्राह्मणीपुत्रस्यैव, न क्षत्रियादेः गृहं क्रमागतं क्षेत्रञ्च द्विजातिपुत्राणामेव, न शूद्रस्य। तदाह बृहन्मनुः।**

**ब्रह्मदायागतां भूमिं हरेयुर्ब्राह्मणीसुताः।**
**गृहं द्विजातयः सर्वे तथा क्षेत्रं क्रमागतम्।।१७।।**

**क्रमादागतयोः पितामहप्रपितामहादिगृहीतयोः सकलद्विजातिसम्बन्ध्यः, क्रमागतमित्यविशेषेणाभिधानात्। प्रतिग्रहभूमौ च क्षत्रियादिसुतानामेवाधिकारनिषेधेन तन्नप्तादीनामप्यननुज्ञानम्।।१८।।**

**तदाह बृहस्पतिः।**

**न प्रतिग्रहभूर्देया क्षत्रियादिसुताय वै।**
**यद्यप्यस्य पिता दद्यान्मृते विप्रासुतो हरेत्।।**

**एवञ्च प्रतिग्रहभूमिरेव ब्रह्मदायागतेत्युक्तम्। ब्रह्म वेदः तदध्ययनतदर्थज्ञानवत्तया प्रतिग्रहविधानात्।।१९।।**

**न पुनर्मनूक्तार्चनलब्धा। यथा,**

**आवृत्तानां गुरुकुलाद्विप्राणां पूजको भवेत्।**
**नृपाणामक्षयो ह्येष विधिर्ब्राह्मोऽभिधीयते।।**

**(मनु ७।८२)**

**अर्चनरूपत्वादस्य।।२०।।**

**अथवा इयमेकेन निषिद्धा अन्या, परेण।।२१।।**

विप्रेण वैश्याजातः तथाविधः क्षत्रियेण जातः तथाविधः क्षत्रियेण समांश इत्यर्थः। दर्शिता इति। सवर्णापुत्रानन्तरापुत्रयोरिति सामान्याभिधानादिति भावः। अविशेषेणेति। पैतामहमिति विशेषमनभिधाय क्रमागतमिति प्रपितामहादिसम्बन्धिसाधारणसामान्याभिधानादिति भावः। नप्त्रादीनामिति। क्षत्रियादिपौत्राणामित्यर्थः। अननुज्ञानम् अधिकारेऽनुमत्यभावः सिद्धमिति शेषः सम्बन्धिनोऽनधिकारे स्वसम्बन्धिसम्बन्धिनोऽनधिकारस्य दण्डापूपन्यायसिद्धत्वादिति भावः। एवञ्चेति। बृहस्पतिवचनैकमूलकत्वादिति भावः। उक्तं बृहन्मनुना। विधानात्, विद्याशीलो धर्मयुक्तः प्रशान्त इत्यादिना दानपात्रक-

थनादिति भावः। अर्चनलब्धमाह आवृत्तानामिति। गुरुकुलात् विद्यामधीत्य स्वगृहागतानामित्यर्थः। एष विधिः अर्चनविधिः अक्षयोऽभिधीयते इत्यन्वयः। अर्चनरूपत्वादस्येति। अर्चनं पूजा, सा च गौरवितप्रीतिहेतुक्रिया तथाच तद्दानक्रिया परितोषार्थैव नादृष्टार्था अतस्तत्स्वीकारो न प्रतिग्रहः अदृष्टार्थत्यक्तद्रव्यस्वीकारस्यैव प्रतिग्रहत्वादिति भावः। प्रतिग्रहभूमात्रपरत्वे ब्राह्मपदानर्थक्यमाशङ्क्याह अथवेति। इयम् अर्चनरूपा एकेन मनुना। अन्या प्रतिग्रहभूः परेण बृहस्पतिना, तथाच उभयरूपा भूर्ब्राह्मणीपुत्रस्यैवेत्यर्थः।।१५-२१।।

**न तु ब्राह्मणस्य भूमिर्ब्रह्मदायः द्विजातीनां क्रयागतक्षेत्रसम्बन्धस्य वाचनिकत्वात् केवल-शूद्रस्यैव निषेधाच्च।**

**यथा बृहस्पतिः।**

**शूद्र्यां द्विजातिभिर्जातो न भूमेर्भागमर्हति।**
**सजातावाप्नुयात् सर्वमिति धर्मो व्यवस्थितः।।२२।।**

**भूमिमात्रोपादानात् क्रयप्रसादादिनापि द्विजातिलब्धभूमौ शूद्रस्यानधिकारः सिद्धयति।।२३।।**

**यस्तु शूद्र एवैकः पुत्रो ब्राह्मणस्य स तृतीयभागाधिकारी, भागद्वयं सपिण्डानां, तदभावे सकुल्यानां, तदभावे श्राद्धकर्त्तुः। यथा देवलः।**

**निषाद एकः पुत्रस्तु विप्रस्य स तृतीयभाक्।**
**द्वौ सपिण्डः, सकुल्यो वा, स्वधादाताथवा, हरेत्।।२४।।**
**ब्राह्मणेन शूद्रायां जातोनिषाद उच्यते।**
**सपिण्डसकुल्ययोस्तु भेदं वक्ष्यति।।२५।।**

ब्रह्मैव दायोधनमस्येति योगात् ब्राह्मणसम्बन्धिभूम्यर्थत्वमाशङ्क्याह न स्विति। ननु तथापि गृह-क्रमागतक्षेत्रातिरिक्तभूमात्रे क्षत्रादेरनधिकारः स्यादत आह केवलेति। तद्दर्शयति यथेति। सजाताविति। शूद्र्यां शूद्राज्जात इत्यर्थः। सर्वमिति। न तु तत्र भूमिकृतो विशेष इति भावः। तथाचैतद्वचने शूद्रापुत्रमात्रस्य निषेधेन प्रतिगृहीतातिरिक्तभूमौ क्षत्रियादेरधिकारसिद्धेर्न योगबलेन ब्रह्मदायागतपदस्य ब्राह्मणसम्बन्धिभूम्यर्थत्वमिति भावः। इत्थञ्चैतद्वचनैकवाक्यतया मनुवचनमपि शूद्राधिकारनिषेधार्थं परिसङ्ख्याविधिरेव न तु द्विजातीनामधिकारविधिः तस्य विध्यनतरप्राप्ततया विधानासम्भवादिति बोध्यम्। वक्ष्यति, अपुत्रधनाधिकारप्रकरणे इति शेषः।।२२-२५।।

**क्षत्रियवैश्ययोस्तु यदि शूद्र एवैकः पुत्रः तदा तद्धनस्यार्द्धहरः, अपरमर्द्धं वक्ष्यमाणापुत्र-धनाधिकारक्रमेण गृह्णीयुः। तथा विष्णुः। द्विजातीनां शूद्रस्त्वेकपुत्रोऽर्द्धहरः अपुत्रर्क्थस्य या गतिः सा अर्द्धस्य द्वितीयस्य।।२६।। (विष्णु १८।३२-३३)**

**इदञ्च तृतीयभागाधिकारित्वमर्द्धहरत्वञ्च विद्याविनयसम्पन्नस्येति वेदितव्यम्। यदाह मनुः।**

**यद्यपि स्यात्तु सत्पुत्रो यद्यपुत्रोऽपि वा भवेत्।**
**नाधिकं दशमाद्दद्यात् शूद्रापुत्राय धर्मतः।।**

**(मनु ९।१५४)**

**अनेन द्विजातिपुत्राभावेऽपि दशमांशाधिकदाननिषेधात् पूर्वस्य, उत्तमैकशूद्रापुत्रगोचरत्वमेव ज्ञायते। यच्च मनुना।**

**ब्राह्मणक्षत्रियविशां शूद्रापुत्रो न रिक्थभाक्।**
**यदेवास्य पिता दद्यात्तदेवास्य धनं भवेदिति।। (मनु ९।१५५)**

**अनेन रिक्थभागित्वमेव निषिद्धं तत् पितृप्रसादलब्धधनदशमांशत्वे सतीति विज्ञेयम्॥२७॥**
**यच्चाह बृहस्पतिः।**

**अनपत्यस्य शुश्रुषुर्गुणवान् शूद्रयोनिजः।**
**लभताजीवनं शेषं सपिण्डाः समवाप्नुयुः।।**

**यच्चाह मनुः।**

**यं ब्राह्मणस्तु शूद्रायां कामादुत्पादयेत् सुतम्।**
**स पारयन्नेव शवस्तस्मात् पारशवः स्मृतः।।**

**(मनु ९।१७८)**

**तदपरिणीतशूद्रासुताभिप्रायं, परिणीतायाः सकृदृतावुपगमनस्य वैधत्वात्, तत्रैव च गर्भ-स्थितेः न च द्वितीयादिसम्पर्केष्वपि। यथा याज्ञवल्क्यः।**

**अपुत्रे भ्रातरि नृते तान्तु गच्छेदृतौ सकृत्।**

**तथा मनुः।**

**यथा विध्युपगम्यैनां शुक्लवस्त्रां शुचिव्रताम्।**
**मिथो भजेदाप्रसवात् सकृत् सकृदृतावृतौ।।**

**(मनु ९।१७०)**

**प्रथमोपगमनमात्रस्य गर्भहेतुत्वे सकृद्वचनं दृष्टार्थं स्यात्, अन्यथाऽदृष्टार्थत्वमस्य कल्प-नीयम्, अतएव लोकेऽपि प्रथमसम्पर्कदिवसमादाय मङ्गलाचारार्थं नियतमासविहितपुंसवन-सीमन्तोन्नयनाद्यर्थं मासगणना दृश्यते। अतः कामादुत्पादयेत् सुतमित्यनूढाशूद्राभिप्राय-मेव॥२८॥**

तथा विष्णुरिति। अत्र द्विजातिपदं क्षत्रियवैश्योभयपरं, न तु ब्राह्मणपरमपि विप्रस्य तृतीयांशा-भिधायकदेवलवचनविरोधात् बहुवचनन्तु व्यक्तिभेदादिति भावः। सत्पुत्रः विद्यमानद्विजातिपुत्रः। अपुत्रः शूद्रातिरिक्तपुत्रशून्यः। पितृप्रसादेति। यदि पितृप्रसादलब्धस्य दशमांशतुल्यत्वं तदा शूद्रापुत्राय अन्यत् न देयमित्यर्थः। विज्ञेयमिति। यदेवास्य पिता दद्यादित्युक्तेरिति भावः। आजीवनमिति व्याचष्टे वर्त्तनोचितेति। तत् अनन्तरोक्तवचनद्वयम्। अपरिणीता केनाप्यपरिणीता किन्तु ग्राम्यधर्मार्थम-वरुद्धा। अपरिणीताविषयत्वे हेतुमाह परिणीताया इति। तथाच परिणीताजातस्य विधिबोधितपुत्रत्वेन प्राशस्त्यात् भागिता युक्ता अपरिणीताजातस्य तु प्रतिषिद्धपुत्रत्वेनापकर्षात् न भागिता किन्तु ग्रासाच्छादनमात्रार्हता इति न वैपरीत्याशङ्केति भावः। केचित्तु वैधत्वादिति। तथाच विधिविरोधेन निन्दायास्तदितरविषयत्वस्यैव युक्तत्वादित्याशय इत्याहुः। तदसत् स पारयन्नेव शव इति निन्दाया वैधावैधसाधारणत्वेन सङ्कोचे हेत्वभावात्। ननु सकृदभिगमस्य वैधत्वेऽपि न पुत्रोत्पत्तेर्वैधत्वमत आह तत्रैवेति। प्राथमिकाभिगम एवेत्यर्थः गर्भस्थितेः गर्भोत्पत्तेः तथाच निमित्तस्य सकृदभिगमस्य वैधत्वेन नैमित्तिकस्य पुत्रजनकरूपफलस्यापि वैधत्वं तदर्थमेव तत्प्रतिपादनात् यथा फलचमसमस्मै भक्ष्यं प्रयच्छतीत्यत्र ऋत्विजे फलचमसदानस्य निमित्तस्य वैधतया ऋत्विजः फलचमसभक्षणमपि वैधमिति भावः। ननु पर्ववर्जं व्रजेदृताविति विधौ ऋत्वभिगमनसामान्यस्य वैधतया सकृदिति कथं तत्राह नेति। उक्तार्थे प्रमाणमाह यथेति। दृष्टार्थमिति। पुत्रजननरूपदृष्टप्रयोजनार्थमित्यर्थः। अन्यथा अन्यस्याभि-गमनस्यापि पुत्रोत्पत्तिहेतुत्वे। अस्य सकृदभिगमनविधानस्य तथाच पुत्रार्थं प्राथमिकाभिगम एव शास्त्रार्थः द्वितीयाद्यभिगमनन्तु दृष्टप्रयोजनमात्रार्थमिति साधूक्तं सकृदिति भावः। अतएव सदैव वा

पर्ववर्जं तासां वरमनुस्मरन्निति सदाभिगमनं वरस्मरणनिमित्ततया निर्दिष्टम् अन्यथा पुत्रमिच्छन्नित्येव निर्दिश्येत। प्रधान्यादिति। मङ्गलेति। अभिप्रेतार्थसिद्धिर्मङ्गलं तदाचारार्थं तत्प्राप्त्यर्थमित्यर्थः तद-परिणीताशूद्रापुत्राभिप्रायमित्युक्तमुपसंहरति अत इति।।२६-२८।।

शूद्रस्य पुनरपरिणीतादास्यादिशूद्रापुत्रः पितुरनुमत्या पुत्रान्तरतुल्यांशहरः। तदाह मनुः।

दास्यां वा दासदास्यां वा यः शूद्रस्य सुतो भवेत्।
सोऽनुज्ञातो हरेदंशमिति धर्मो व्यवस्थितः।।२९।।

(मनु ९।१७९)

अनुमतिमन्तरेण त्वर्द्धांशहरः। तदाह याज्ञवल्क्यः।

जातोऽपि दास्यां शूद्रेण कामतोऽंशहरो भवेत्।
मृते पितरि कुर्य्युस्तं भ्रातरस्त्वर्द्धभागिनम्।।३०।।

(याज्ञवल्क्य २।१३४)

परिणीतास्त्रीजातभ्रातृशून्यस्तु सर्वमेव धनं गृह्णीयात् यदि दौहित्रो नास्ति। तदाह याज्ञवल्क्यः।

अभ्रातृको हरेत् सर्वं दुहितृणां सुतादृते।

(याज्ञवक्ल्य २।१३५)

सति तु दौहित्रे समं विभज्य गृह्णीयात् विशेषाश्रवणात्।।

तथाह्यपरिणीताजातत्वेऽप्यस्य पुत्रत्वात्, अपरस्य तु परिणीतासन्तानत्वेऽपि दौहित्रत्वात् तुल्यांशस्यैव युक्तत्वात्।।३१।।

दासदास्यामिति। दासस्यपरिणीतरक्षितायामित्यर्थः। सममिति। समं स्वादश्रुतत्वाद्विशेषस्येति न्यायादिति भावः।।२९-३१।।



## दशमः अध्यायः

सम्प्रति पुत्रिकाकरणानन्तरमौरसपुत्रे जाते तयोर्विभागः प्रतिपाद्यते।।१।।

तत्र पुत्रिकौरसयोस्तुल्यांशित्वं न पुनः पुत्रिकाया ज्येष्ठत्वेन विंशोद्धारार्हता, तदाह मनुः।

पुत्रिकायां कृतायान्तु यदि पुत्रोऽनुजायते।
समस्तत्र विभागः स्यात् ज्येष्ठता नास्ति हि स्त्रियाः।।

(मनु ९।१३४)

स्वतो ज्येष्ठपुत्रकार्य्याकरणात् स्वपुत्रद्वारेण पुत्रिकायाः पिण्डदातृत्वात्। तदाह मनुः।

अपुत्रोऽनेन विधिना सुतां कुर्वीत पुत्रिकाम्।
यदपत्यं भवेदस्यां तन्मम स्यात् स्वधाकरम्।।२।।

(मनु ९।१२७)

न च पुत्रिकायामेव प्रथमं पुत्रे जाते तदनन्तरमौरसपुत्रोत्पत्तौ पुत्रिकापुत्रस्य ज्येष्ठांशता भवेदिति वाच्यं तस्य पौत्रत्वात्। तदाह मनुः।

अकृता वा कृता वापि यं विन्देत् सदृशात् सुतम्।
पौत्रो मातामहस्तेन दद्यात् पिण्डं हरेद्धनम्।। (मनु ९।१३६)

**पुत्रिका हि पुत्रस्तस्याः पुत्रः पौत्र एव भवति तद्वाञ्च पौत्री भवति न च ज्येष्ठत्वेन पौत्रस्यांशातिरेकः श्रुतोऽस्ति॥३॥**

ज्येष्ठता श्रेष्ठता सा च पुन्नामनरकत्राणनिबन्धना तदभावात् श्रेष्ठत्वाभाव इत्यत आह स्वत इति। साक्षादित्यर्थः। ज्येष्ठेति। ज्येष्ठपुत्रकार्य्यं पुन्नामनरकत्राणं तदकरणात्। तर्हि पुत्रिकाकरणं किमर्थमत आह स्वपुत्रद्वारेणेति। स्वधाकरं त्रिविधक्रियाकरम् अन्यथा स्वधाकरशब्दस्य श्राद्धकरण-मात्रार्थत्वे दौहित्रान्तरसाधारण्यात् पुत्रिकाकरणवैयर्थ्यापत्तेः। एतेन पुत्रिकापुत्रसत्त्वेऽपि पुत्रिकाया एव प्रेतकृत्या-धिकार इति मतमपि निरस्तमिति वेदितव्यं तथाच परम्परयोपकारार्थमेव पुत्रिकापुत्रकरणमिति भावः। ज्येष्ठांशतेति। तस्य साक्षादेव ज्येष्ठपुत्रकार्य्यकरणादिति भावः। पौत्रत्वादिति। आतिदेशिक-पौत्रत्वादित्यर्थः।।१-३।।

**यत्तु वशिष्ठवचनम्।**

**अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलङ्कृताम्।**
**अस्यां यो जायते पुत्रः स मे पुत्रो भवेदिति।।**

**(वशिष्ठ १७।११६)**

**पुत्रिकापुत्रस्यैव पुत्रत्वं वदति तेन पुत्रिकायास्तत्पुत्रस्य च पुत्रत्वं तन्न मनुविरोधात् पिण्डदानमात्रयोगात् पुत्रत्वमस्य गौणं तद्वारेणैव पुत्रिकायाः पिण्डदातृत्वात् एकस्य स्वतोऽन्यस्य तद्योगात्॥४॥**

**पुत्रिकौरसयोस्तु सवर्णत्वे सति पूर्वोक्तविभागो बोद्धव्यः असवर्णत्वे तु तयोरसवर्णौ-रसपुत्रवदेव विभागः पुत्रिकौरसयोः समानत्वात्॥५॥**

**यदि च कृतापि पुत्रिका पुत्रमनुत्पाद्यैव विधवा भूता वन्ध्यात्वेन हि वावधृता तदा तस्याः पितृधनेऽनधिकारः, स्वधाकरपुत्रार्थं पुत्रिकायाः कृतत्वात् तदभावे दुहित्रन्तरतुल्यत्वात्॥६॥**

मनुविरोधादिति। न च विनिगमनाविरहः किं मनुविरोधात् वशिष्ठोक्तं पुत्रत्वं गौणम्, किंवा वशिष्ठविरोधात् मनूक्तं पौत्रत्वमेव गौणमिति वाच्यं मनुस्मृतेः सर्वस्मृतिप्रबलत्वस्यैव विनिगमकत्वात्। पुत्रत्वं पुत्रव्यपदेशः। गौणमिति। पिण्डदातृत्वस्य मुख्यपुत्रगुणस्य योगात् गौणता बोध्या। पिण्डदान-योगमेवोपपादयति तद्वारेणैवेति। एकस्य पुचिकापुत्रस्य, अन्यस्य पुत्रिकास्वरूपस्य तद्योगात् पुत्र-योगात्। न च परम्परया पिण्डदानापेक्षया साक्षात् पिण्डदानस्य बलवत्त्वेन पुत्रिकापुत्रस्यैव पुत्रत्वं न्याय्यं न तु पुत्रिकाया इति वाच्यं, पुत्रिकाया अङ्गजत्वात् तदधीनजन्मतया च तत्पुत्रस्य पिण्ड-दानयोगात् तस्या एवोत्कर्षेण पुत्रत्वौचित्यात्। एतन्न्यायादेव अपुत्रिकाया अपि दुहितुरभाव एव दौहित्राधिकारं वक्ष्यति अन्यथा साक्षादुपकारकतया दौहित्रस्यैव प्रागधिकारापत्तेः अतएव समस्तत्रेत्यनेन पुत्रिकौरसयोरेव समभागिता मनूक्ता न तु तस्याः पुत्रस्य औरसमभागिता केनाप्युक्तेति, इत्थञ्च पुत्रिकापुत्र एव चेति द्वादशविधपुत्रगणनायां कर्मधारयो न तु तत्पुरुष इति विभावनीयम्। पूर्वोक्तविभाग इति। समभाग इत्यर्थः। असवर्णत्वे तु औरसस्यासवर्णत्वे तु औरसशब्दोऽत्र परिणीतायां स्वयमुत्पा-दितपरः न तु सवर्णायां संस्कृतायां स्वयमुत्पादयेत्तु यम्। औरसं तं विजानीयात् पुत्रं प्रथमकल्पित-मित्युक्तौरसपरः तस्य तु असवर्णत्वासम्भवात्। असवर्णौरसपुत्रवदिति। सवर्णौरसेन सह असवर्णौरसस्य क्षत्रियादेर्यादृशस्त्रिद्व्येकांशरूपो भागः तादृश इत्यर्थः। दुहित्रन्तर तुल्यत्वादिति। एतावता यथा वन्ध्यायामपुत्रिकायां तदनन्तराधिकारिणी गृह्णीयुस्तथा पुत्रिकायामपीति प्रतिपादितम्।।४-६।।

**औरसेन तु क्षेत्रजादीनां विभागे ये पितृसवर्णा औरसपुत्राच्चोत्तमसमवर्णाः पुत्रिकापुत्र**

**क्षेत्रज कानीनगूढ़जापविद्धसहोढ़ज पौनर्भव दत्तक स्वयमुपागत कृतक क्रीताः पुत्राः ते औरसपुत्रभागस्य तृतीयांशभागिनः। तदाह द्वादशपुत्रानभिधाय देवलः।**

**एते द्वादशपुत्रास्तु सन्तत्यर्थमुदाहृताः।**
**आत्मजाः, परजाश्चैव, लब्धा, यादृच्छिकास्तथा।।**
**तेषां षट् बन्धुदायादाः पूर्वेऽन्ये पितुरेव षट्।**
**विशेषश्चापि पुत्राणामानुपूर्व्या विशिष्यते।।**
**सर्वे ह्यनौरसस्यैते पुत्रा दायहराः स्मृताः।**
**औरसे पुनरुत्पन्ने तेषु ज्यैष्ठ्यं न विद्यते।।**
**तेषां सवर्णा ये पुत्रास्ते तृतीयांशभागिनः।**
**हीनास्तमुपजीवेयुर्ग्रासाच्छादनसम्भृताः ।।७।।**

**औरसादयः षट् न केवलं पितृदायहराः किन्तु बन्धूनामपि सपिण्डादीनां दायहराः, अन्ये परभूताः पितुरेव परं दायहराः न सपिण्डादीनाम्।।८।।**

**औरसपुत्रशून्यस्य पितुः सर्वहराः औरसे सति ये पितृसवर्णास्ते तृतीयांशहराः।।९।।**

**पुत्रिकाया अपि औरसतुल्यत्वादयमेव भागक्रमः।।१०।।**

**ये तु पितुर्हीनवर्णा औरसपुत्राच्चोत्तमवर्णास्ते औरसस्य पञ्चमं षष्ठं वांशं गुणवद्गुणतया गृह्णीयुः। यथा मनुः।**

**षष्ठन्तु क्षेत्रजस्यांशं प्रदद्यात् पैतृकाद्धनात्।**
**औरसो विभजन् दायं पित्र्यं पञ्चममेव वा।।११।।**

**(मनु ९।१५४)**

**देवलवचनेन सर्वेषां क्षेत्रजतुल्यत्वाभिधानात् मनुवचने क्षेत्रजपदमुपलक्षणम्।।१२।।**

द्वादशपुत्रानिति। पुत्रिकया सहेत्यर्थः। आत्मजाः औरसपौनर्भव पुत्रिकाः। परजाः क्षेत्रजाः। लब्धाः दत्तक्रीतसहोढ़कानीनकृत्रिमाः। यादृच्छिकाः अयत्नोपस्थिताः अपविद्धस्वयमुपागतगूढ़ोत्पन्नाः। ये पितृसवर्णा इति। ब्राह्मणस्य ब्राह्मण्यां जातः क्षेत्रजः औरसक्षत्रियावैश्यापुत्रापेक्षया उत्तमवर्णः पितुः सवर्णः पितृसवर्ण इत्येवमादय इत्यर्थः। अयमेवेति। औरसेन सह तेषां यो विभागक्रमः तृतीयांशक्रमः स एव पुत्रिकयापि सहेत्यर्थः। एतदर्थमेव स्वयंकृतद्वादशविधपुत्रगणनायां पुत्रिकायाः प्रथममुद्देश इति बोध्यम्। गुणवदगुणतयेति। सगुणत्वनिर्गुणत्वाभ्यामित्यर्थ इति सम्प्रदायः वस्तुतः पितुर्हीनवर्णस्य औरससवर्णत्वे षष्ठांशिता तस्मादुत्तमवर्णत्वे पञ्चमांशिता युक्ता पितुर्हीनवर्णस्य औरससवर्णस्य विभागानुक्तेरनध्यवसायापत्तेरिति बोध्यम्। गुणवद्गुणापेक्षयेति पाठे अगुणी निर्गुणः तेन गुणवन्निर्गुणरूपविषयभेदादित्यर्थः। तुल्यत्वादिति। तुल्यांशित्वप्रतिपादनादित्यर्थः।।७-१२।।

**ये तु पितुरौरसाच्च भ्रातुर्हीनवर्णास्ते ग्रासाच्छादनमात्राधिकारिणः। तदाह मनुः।**

**एक एवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुः।**
**शेषाणामानृशंस्यार्थं प्रदद्यात्तु प्रजीवनम्।।**

**(मनु ९।१६३)**

**तथा कात्यायनः।**

**उत्पन्ने त्वौरसे पुत्रे तृतीयांशहराः स्मृताः।**
**सवर्णा असवर्णास्तु ग्रासाच्छादनभागिनः।।१३।।**

मनुवचने शेषपदं कात्यायनवचने चासवर्णपदं हीनवर्णपरं देवलेनैकवाक्यत्वात्॥१४॥

अनियोगोत्पन्नक्षेत्रजस्य औरसेन सह विभागमाह मनुः।

यद्येकऋक्थिनौ स्यातामौरसक्षेत्रजौ सुतौ।
यद यस्य पैतृकं ऋक्थं स तद गृह्णीत नेतरः॥१५॥

(मनु ९।१६२)

यस्य बीजाद यो जातः स तस्य धनं गृह्णीयात् इतरोऽन्यबीजजो न गृह्णीयादित्यर्थः। अतएव नारदः।

द्वौ सुतौ विवदेयातां द्वाभ्यां जातौ स्त्रिया धने।
तयोर्यद यस्य पित्र्यं स्यात् स तद गृह्णीत नेतरः॥१६॥

(मनु ९।१९१)

यत् पितृदत्तं यद्धनं स्त्रियास्तत्पुत्रस्तद्बीजजस्तद्धनं गृह्णीयात् नान्य इत्यस्तु किं विस्तरेण॥१७॥

आनृशंस्यम् अनुकम्पा तदर्थं तन्निमित्तकमित्यर्थ: तेन जीवनदानेऽपि इच्छामात्रं प्रयोजकं न तु तेषामधिकार इति भाव:। जीवनं भरणम्। हीनवर्णपरमिति। न तु उत्तमवर्णपरमपि। देवलेनेति। तेन उत्तमवर्णस्य भागिताया हीनवर्णस्य ग्रासाच्छादनमात्रस्य चोक्तत्वादिति भाव:। अनियोगोत्पन्नेति। औरसमुत्पाद्य क्षेत्रिणि मृते तस्मिन्नेव चेत्रेऽन्येन शुल्कं दत्त्वा य उत्पादित: तदौरसेन सहेत्यर्थ:। शुल्कादाने तु स क्षेत्रिण एव पुत्रो न वीजिन: तेन तस्य न वीजिधनाधिकारिता किन्तु क्षेत्रिण एव धने औरसतृतीयांशहारितेति। अशुल्कोपहतायान्तु पिण्डदा वोढुरेव ते इत्युक्तेरिति बोध्यम्।।१३-१७।।



# एकादशः अध्यायः

## प्रथम परिच्छेदः

अथापुत्रस्य मृतस्य धने परस्परविरुद्धवचनदर्शनेन व्याख्यातारो विवदन्ते॥१॥

तथा वृस्पितिः।

आम्नाये स्मृतितन्त्रे च लोकाचारे च सूरिभिः।
शरीरार्द्धं स्मृता जाया पुण्यापुण्यफले समा॥
यस्य नोपरता भार्य्या देहार्द्धं तस्य जीवति।
जीवत्यर्द्धशरीरेऽर्थं कथमन्यः समाप्नुयात्।
सकुल्यैर्विद्यमानैस्तु पितृमातृसनाभिभिः।
असुतस्य प्रमीतस्य पत्नी तद्भागहारिणी॥
पूर्वं प्रणीताग्निहोत्रं मृते भर्त्तरि तद्धनम्।
विन्देत् पतिव्रता साध्वी धर्म एव सनातनः॥
जङ्गमं स्थावरं हेम कुप्यं धान्यं रसाऽम्बरम्।
आदाय दापयेच्छ्राद्धं मासषाण्मासिकादिकम्॥
पितृव्यगुरुदौहित्रान् भर्त्तुः स्वस्त्रीयमातुलान्।
पूजयेत् कव्यपूर्त्ताभ्यां वृद्धानाथातिथीन् स्त्रियः॥

**तत्सपिण्डा बान्धवा वा ये तस्याः परिपन्थिनः।**
**हिंस्युर्धनानि तान् राजा चौरदण्डेन शासयेत्॥२॥**

अथेति। पुत्राधिकारनिरूपणानन्तरमित्यर्थः। धने धनाधिकारविषये। विवदन्त इति। पत्न्या भ्रात्रादेः पूर्वमधिकारः भ्रातुः पत्नीतः पूर्वमधिकार इति विरुद्धं भाषन्त इत्यर्थः। विरुद्धवचनान्याह तथेत्यादि। अम्नायते आभ्यस्यत इत्याम्नायो वेदः। पुण्येति एकैककृते ये पुण्यापुण्यकर्मणी विहितनिषिद्धकर्मणी तयोः फले स्वर्गनरकरूपे भोक्तृत्वेन समेत्यर्थः इदञ्च शरीरार्द्धमित्युक्ताभेदे हेतुः स्वकर्मफलभोगस्य स्वानतिरिक्तस्यैवौत्सर्गिकत्वात्। देहार्द्धमिति। देहार्द्धेन प्रत्यक्षतया स जीवतीत्यर्थः। सकुल्यैः सनाभिभिरिति तृतीयाद्वयं सप्तम्यर्थे तेन सकुल्यादिषु सत्स्वित्यर्थः। सनाभयः सहोदराः। प्रमीतस्य मृतस्य। पतिव्रता पतिशुश्रुषाव्रता, न तु मृते म्रियेत या पत्यौ साध्वी ज्ञेया पतिव्रतेत्युक्त-पतिव्रता, मरणेनैव तन्निष्पत्तेरत्रासम्भवात्। साध्वी अव्यभिचारिणी तेन तद्विपरीतानामधिकारनिवृत्तिः। सनातनोऽनादिपरम्परागतः। कुप्यं सुवर्णरूप्याभ्यामन्यत्तैजसं लौहादि। अम्बरं वस्त्रम्। आदाय स्वीकृत्य। दापयेदिति स्वार्थे णिच्। मासषाण्मासिकेत्यनेन पार्वणनिषेधः। आदिना आद्यादिप्रेतश्राद्धान्तरपरिग्रहः। पितृव्येति द्वितीयान्तद्वयं भर्त्तुरित्यत्रान्वेति। कव्यं मृतोद्देशेन त्यक्तम्। पूर्त्तम् अन्नपानादि।।१-२।।

**तदेतैः सप्तवचनैरपुत्रस्य मृतस्य यद् यावद्धनं स्थावरजङ्गमहेमादिकं भर्त्तुस्तत्सर्वं सोदर-भ्रातृपितृव्यदौहित्रादिषु सत्स्वपि तत्रया एवेति, ये तु तद्धनग्रहणे प्रतिपक्षाः स्वयमेव वा गृह्णन्ति ते चौरवद्दण्डनीया इति ब्रुवाणो बृहस्पतिः पत्नीसद्भावे पितृभ्रातृप्रभृतीनां धनाधिकारं सुदूरं निरस्यति॥३॥**

**तथा याज्ञवल्क्यः।**

**पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा।**
**तत्सुतो गोत्रजो बन्धुः शिष्यः सब्रह्मचारिणः।**
**एषामभावे पूर्वस्य धनभागुत्तरोत्तरः।**
**स्वर्यातस्य ह्यपुत्रस्य सर्ववर्णेष्वयं विधिः॥**

**(याज्ञवल्क्य २।१३६-१३७)**

**अनेन पूर्वपूर्वस्याभावे परपरस्याधिकारं वदन् सर्वेभ्यः पूर्वं पत्न्या एव धनाधिकार-मभिधत्ते॥४॥**

**तथा विष्णुः। अपुत्रस्य धनं पत्न्यभिगामि, तदभावे दुहितृगामि, तदभावे पितृगामि, तदभावे मातृगामि, तदभावे भ्रातृगामि, तदभावे भ्रातृपुत्रगामि, तदभावे सकुल्यगामि, तदभावे बन्धुगामि, तदभावे शिष्यगामि, तदभावे सहाध्यायिगामि, तदभावे ब्राह्मणधनवर्जं राज-गामि॥५॥ (विष्णु १७।४-१३)**

**अनेनापि क्रमपरेण प्रथमं पत्न्या एव धनाधिकारो निरूपितः। न च वर्त्तनोपयुक्तधन-मात्राधिकारार्थं पत्नीवचनमिति वाच्यं सकृच्छ्रुतस्य धनपदस्य पत्न्यपेक्षमकृत स्नपरत्वं कृत्स्न-परत्वञ्च भ्रात्राद्यपेक्षमिति तात्पर्य्यभेदस्यान्याय्यत्वात्। अतः कृत्स्नधनगोचर एव पत्न्या अधिकारो वाच्यः॥६॥**

**तथा बृहन्मनुः।**

अपुत्रा शयनं भर्त्तुः पालयन्तीव्रते स्थिता।
पत्न्येव दद्यात् तत्पिण्डं कृत्स्नमंशं लभेत च॥७॥

**तत्पिण्डमित्यतस्तदित्यनुषज्यते तच्छब्देन भर्त्तुः परामर्षात् भर्त्तुः कृत्स्नमंशं पत्नी लभेत न तु स्वांशकृत्स्नमित्यर्थः कृत्स्नस्वांशोद्देशेन लभेतेति विधानानुपपत्तेः स्वामिभावज्ञापनार्थत्वादस्य न च स्वांशे स्वामिभावज्ञापनमर्हति स्वांशज्ञापनेनैव ज्ञातत्वात्॥८॥**

**न च ग्रहणविधानार्थं तदिति वाच्यं स्वधनग्रहणस्य रागादेव प्राप्तत्वात्॥९॥**

**न च नियमार्थं वचनमिति वाच्यम् अदृष्टार्थत्वापत्तेः नियमे च नियोज्यादिकल्पनमपि स्यात्॥१०॥**

सप्तवचनैरिति। सप्तानामेव वचनानां पत्राधिकारतात्पर्य्यकत्वादिति भावः। सब्रह्मचारिणः एकदैकगुरोरध्ययनेन वेदाभ्यासेन च समानव्रताचारिणः। पूर्वस्येति वीप्सितम्। स्वर्यातस्य मृतस्य। उपलक्षणमेतत् पतितादेरपि बोध्यम्। सकृच्छ्रुतस्येति। एकस्य धनपदस्य पत्यन्वये वर्त्तनोचितधनबोधकत्वं भ्रात्राद्यन्वयेच कृत्स्नधनबोधकत्वं न सम्भवतीत्यर्थः। भर्त्तुः शयनं पालयन्ती तदीयशयने पुरुषान्तरं वारयन्तीं अव्यभिचारिणीति यावत्। व्रते पारलौकिकभर्त्रुपकारे स्थिता उद्युक्ता। व्रते एकादश्यादिव्रते स्थिता तत्कारिणीत्यर्थ इति केचित्, तदसत्, भर्त्तृमरणक्षणे तदसम्भवात्। तत्पिण्डं भर्त्तृपिण्डम्। अनुषज्यत इति। यद्यपि समासस्थविशेषणपदस्य अनुषङ्गो व्युत्पत्तिविरुद्धः अन्यथा चैत्रपटमपनय घटमानयेत्यादौ चैत्रस्यानुषङ्गेण घटानयनापत्ते तथापि तदिति षष्ठ्यन्तमव्ययमित्यभिप्रायः। आकाङ्क्षासत्त्वे समासस्थस्यावृत्तौ बाधकाभावः भर्त्तुरित्यस्यानुषङ्गस्तु व्यवहितत्वादसम्भवतीति चूड़ामणिः। वस्तुतः तदित्यर्थपरम् इत्यत इत्यनन्तरम् उपस्थितमिति शेषः तथाच तद्भर्त्तृस्वरूपमनुषज्यते अंशशब्दस्य ससम्बन्धिकतया व्युत्पत्तिबलेनोपस्थितत्वात् सम्बन्धितया अन्वीयत इत्यर्थः। ननु तद्वाक्यघटकपदोपस्थितायाः पत्न्या एवान्वयो युक्तः न तु भिन्नवाक्योपस्थितस्य भर्त्तुः तथाच पत्नी स्वांशं कृत्स्नं वर्त्तनोचितं लभेत इत्येवार्थः किं न स्यादत आह न त्विति। अनुपपत्तौ हेतुमाह स्वामिभावेति। स्वत्वज्ञापनार्थत्वादित्यर्थः। अस्य वचनस्य न च न हि। स्वांशे स्वत्वेन ज्ञाते। ज्ञातत्वादिति। तथाच प्राप्तत्वाद्विधित्वासम्भवे वैयर्थ्यं निराकाङ्क्षत्वं चेति भावः। न च ग्रहणेति। तथाच ग्रहणविधिरयं न स्वत्वविधिरिति भावः। ग्रहणं यथेष्टविनियोगलक्षणम्। रागादेवेति। तथापि विधित्वासम्भवस्तदवस्थ एवेति भावः। नियमार्थमिति। स्वांशं गृह्णीयादेवेति नियमार्थमित्यर्थः। अदृष्टेति। विधिनियमितस्य नित्यतया तस्मात् पिण्डनित्यापूर्वं कल्पनीयं तच्च दृष्टार्थत्वे सम्भवति गौरवादन्याय्यमिति भावः। गौरवान्तरमप्याह नियमे चेति। नियोज्येति। ममेदं कार्य्यमिति बुद्ध्या नियोज्यः। गुरुमते स्वर्गकामो यजेतेत्यादौ स्वर्गकामनियोज्यकयागविषयकं कार्य्यमिति बोधस्य सिद्धत्वेन प्रकृतेऽपि नित्यत्वेन प्रत्यवायपरीहारफलकामरूपनियोज्यकल्पनम् आदिपदादकरणे प्रत्यवायकल्पनमपि स्यादित्यर्थः। नियोज्यकल्पनाया उभयथाप्यावश्यकत्वेऽपि कामनारूपाधिकाराधिक्यमत्रेति बोध्यम्॥३-१०॥

**यच्चोक्तं न ह्यनन्धादिः पुत्रोऽंशं कृत्स्नं लभेत इत्युक्ते पित्र्यं कृत्स्नमंशमिति किं तर्हि कृत्स्नं स्वांशमिति तथाचापि कृत्स्नं स्वांशापेक्षमिति तन्न अनन्धादिः पुत्रोऽंशं कृत्स्नं लभेतेति वचनाभावात् दृष्टान्तानुपपत्तेः भवतु वा तथापि पूर्वोक्तहेतुना स्वांशं लभेतेति विध्यनुपपत्तेः पित्रंशापेक्षमेव वर्णनं युक्तम्॥११॥**

**अतएव सर्वत्रान्यधन एव अन्यस्वत्वसम्बन्धज्ञापनं मुनयः कुर्वन्ति यथा पितृधने पुत्राणाम् अपुत्रधने पत्न्यादीनामित्यादि न पुनः स्वांशग्रहणे प्रेरयन्ति॥१२॥**

अनन्धादिः अन्धादिभिन्नः। कृत्स्नमंशमिति। अवगम्यत इति शेषः। कृत्स्नं स्वांशापेक्षमिति वचनार्थवर्णनमिति शेषः। ननु अनन्धादिरिति मया वचनमिति कृत्वा दृष्टान्ततया नोक्तम् किन्तु तादृशार्थव्युत्पत्तिकल्पनास्थानतया तच्च वैदिकस्येव लौकिस्यापि वाक्यस्याविशिष्टं तथाच तत्र वचनाभावोऽकिञ्चित्कर इत्यत आह भवतु वेति। अभ्युपगमादाह भवतु वेतीति केचित्। पूर्वोक्तहेतुना स्वांशं लभेतेतिविधानानुपपत्तिरूपेण। पित्रंशापेक्षमिति अनन्धादिरित्युक्तवाक्येऽपीति शेषः। न च पुत्रान्तरस्याप्यंशादेकवचनमनुपपन्नमिति वाच्यं तस्योद्देश्यविशेषणतया अविवक्षितत्वात् एकपुत्रस्थलाभिप्रायेण वा तत्। अतएव स्वधने स्वत्वविधानासम्भवादेव।।११-१२।।

**यच्च सम्बन्धिशब्दत्वेन स्वसम्बन्ध्युपस्थापकत्वं यथा मातेति न परमातावगम्यते इत्युक्तं तदप्ययुक्तम् अनुपात्तसम्बन्धिविषयत्वात् तस्य, न हि डित्थस्य मातरमानयेत्युक्ते प्रयोज्यस्य माता प्रतीयते प्रयोजकस्य वा, तद्वदत्रापि तत्पिण्डमिति तत्पदोपात्तत्वात् सम्बन्धिनः कथं पत्न्यपेक्षिता विधानानुपपत्तिश्च पूर्वमुक्तैव।।१३।।**

**तस्मात् कृत्स्नतदंशग्रहणमेव पत्न्या वृद्धमनुर्बोधयति।।१४।।**

**तथा पत्न्यधिकारविपरीतबोधकानि वचनानि यथा शङ्खलिखितपैठीनसियमाः। अपुत्रस्य स्वर्यातस्य भ्रातृगामि द्रव्यं तदभावे पितरौ हरेतां पत्नी वा ज्येष्ठा सगोत्रशिष्य स ब्रह्मचारिणः।।१५।।**

**अत्र भ्रातुरभावे पित्रोस्तयोरभावे पत्न्याधिकार इति विरोधः।।१६।।**

**तथा देवलः।**

**ततो दायमपुत्रस्य विभजेयुः सहोदराः।**
**तुल्या दुहितरो वापि ध्रियमाणः पितापि वा।।**
**सवर्णा भ्रातरो माता भार्य्या चेति यथाक्रमम्।**
**एषामभावे गृह्णीयुः कुल्यानां सहवासिनः।।१७।।**

**अत्र सर्वादौ भ्रातुरधिकारः सर्वशेषे च भार्य्याया इति विरोधः।।१८।।**

सम्बन्धिशब्दत्वेनेति। सम्बन्धिशब्दस्येत्यादिः। स्वसम्बन्ध्युपस्थापकत्वं स्वार्थस्य यः सम्बन्धी प्रतियोगीनिरूपकरूपकरूपस्तद्घटितस्वार्थबोधकत्वं तं विहाय स्वार्थान्वयबोधकत्वासम्भवात् तद्घटितमूर्त्तिकत्वात् पुत्रत्वादिरूपसम्बन्धिताया घटकता पुनरुपस्थितस्यैव सम्बन्धिन इति भावः। उक्तव्युत्पत्तिकल्पनस्थलं दृष्टान्तविधया दर्शयति यथेति। यथा मातेत्युक्ते उपस्थितस्य वक्तुरेव सम्बन्धितयाऽन्वयित्वं तथा प्रकृतेऽपि अंशशब्दस्य स्वसम्बन्धिकतया उपस्थितायाः पत्न्या एव तदर्थान्वयित्वमिति तत् कथं भर्त्तुः कृत्स्नमंशमिति भर्तृन्वयं व्याख्यामीति पूर्वपक्षः। यद्यपि पत्नीपदस्य स्वसम्बन्धिकतया तदर्थान्वयित्वेन भर्त्ताप्युपस्थित एव तथा विशेषणतया विशेष्यतया च नानासम्बन्ध्युपस्थितिस्थले विशेष्यतयोपस्थितस्यैवान्वयित्वं न तु विशेषणतयोपस्थितस्येति व्युत्पत्तिः कथमन्यथा यज्ञदत्तमिवं पितृगृहं प्रविशतीत्यादौ न यज्ञदत्तस्य पित्रन्वयः अपि तु मित्रस्येति नियम उपपद्यत इति भावः। दूषयति तदपीति। अनुपात्तेति। सम्बन्धिपदार्थान्वययोग्यतया सम्बन्धिनः शब्दोपात्तत्वे तस्यैव तदन्वयित्वं न सम्बन्ध्यन्तरस्योपस्थितस्यापि तेन पत्न्या नांशान्वयः तस्याः प्रथमान्तोपस्थितत्वेन षष्ठ्यन्तसाकाङ्क्षेण सम्बन्धिना अन्वयायोग्यत्वादिति भावः। प्रकृते भर्त्तृरूपसम्बन्धिनः शब्दोपात्तत्वं प्रतिपादयति तत्पिण्डमिति। पत्न्यपेक्षिता पत्नीरूपसम्बन्धिघटितस्वार्थबोधकता अंशशब्दस्येति शेषः। पत्न्यान्वये बाधकमप्याह विधानानुपपत्तिश्चेति। उपसंहरति तस्मादिति।

तदंशग्रहणं भर्त्रंशग्रहणम्। तुल्याः सवर्णाः। ध्रियमाणः निर्दोषः सन् जीवदवस्थः। सवर्णा भ्रातरो वैमात्रेयाः सहोदराणां प्रागुक्तत्वात्। कुल्यानां सहवासिनः सकुल्याः गृह्णीयुरित्यर्थः।।१३-१८।।

**अत्र केचिदविभक्तसंसृष्टगोचरो भ्रात्रधिकारः प्रथमं विभक्तासंसृष्टगोचरश्च पत्न्याधिकार इति समादधति।।१९।।**

**तदबृहस्पतिविरुद्धम्। यदाह।**

**विभक्ता भ्रातरो ये च सम्प्रीत्यैकत्र संस्थिताः।**
**पुनर्विभागकरणे तेषां ज्यैष्ठं न विद्यते।।**
**यदा कश्चित् प्रमीयेत प्रव्रजेद्वा कथञ्चन।**
**न लुप्यते तस्य भागः सोदरस्य विधीयते।**
**या तस्य भगिनी सा तु ततोऽशं लब्धुमर्हति।**
**अनपत्यस्य धर्मोऽयमभार्य्या पितृकस्य च।।**
**संसृष्टानान्तु यः कश्चिद्विद्याशौर्य्यादिना धनम्।**
**प्राप्नोति तस्य दातव्यो द्व्यंशः शेषाः समांशिनः।।२०।।**

**अत्रोपक्रमोपसंहारयोः संसृष्टत्वकीर्त्तनात् तत्सन्दंशपतितं, न लुप्यते तस्य भागः सोदरस्य विधीयते।**

**इति वचनं संसृष्टविषयं वाच्यम्, अत्र च अनपत्यस्य धर्मोऽयमभार्य्यापितृकस्य चेति पुत्र-दुहितृपत्नीपितॄणामभावे संसृष्टस्य सोदरस्य भ्रातुरधिकारं बोधयतीति कथं तस्य पत्नीबाधकत्वम्।।२१।।**

**किञ्च न लुप्यते इति अविभक्तत्वे संसृष्टत्वे च भ्रात्रन्तरीयद्रव्यमिश्रीभूतस्य द्रव्यस्य पृथगप्रतीती लोपाशङ्कायां न लुप्यत इति वचनमुपपद्यते, विभक्तस्यासंसृष्टस्य तु धने विभक्तत्वप्रतीतौ का लोपाशङ्का तस्मात् संसृष्टविषयत्वमेवामीषां वचनानाम्।।२२।।**

प्रव्रजेत् आश्रमान्तरं प्रविशेदित्यर्थः। भगिनी अनूढ़ा। अंशं विवाहोचितं विधवापि वर्त्तनोचितमिति केचित्। इदमप्यसंसृष्टविषयं कुतो न स्यादत आह उपक्रमोपसंहारयोरिति। ननूक्तविरोधपरीहारान्यथानुपपत्त्या सन्दंशपतितन्यायो नादरणीय इति विभक्तविषयत्वमेव वाच्यमित्यत आह किञ्चेति। लोपाशङ्कायामिति। लोपोऽविभाज्यत्वम्। अमीषां बृहस्पतिवचनानाम्।।१९-२२।।

**किञ्च पत्न्यादेः पूर्वं भ्रात्रधिकारज्ञापकशङ्खादिवचनानां संसृष्टभ्रातृविषयत्वं वचनाद्वा न्यायाद्वा। तत्र न तावद्वचनात् विशेषवचनाभावात्, संसृष्टिनस्तु संसृष्टीत्यादिवचनानान्तु भ्रात्रधिकारावसरे विशेषज्ञापनपरत्वेन भ्रात्रधिकारमात्रपरत्वानुपपत्तेः।।२३।।**

**अनन्तरोपन्यस्तबृहस्पतिवचनानाञ्च संसृष्टविषयत्वे पुत्रदुहितृपत्नीपितृपर्य्यन्ताभावे सोदर-भ्रात्रधिकारज्ञापकत्वात् तद्विरुद्धत्वात् असंसृष्टविषयत्वमेव तावदयुक्तं न तु संसृष्टविषयत्वम्।।२४।।**

निरूक्तविषयविभागे हेतुमपि विकल्प्य दूषयति किञ्चेति। विशेषज्ञापनपरत्वेन समानसम्बन्धिनां मध्ये संसर्गिणः संसर्गनिबन्धनाधिकारबोधकत्वेन अन्यथा पुत्रसत्त्वेऽपि संसृष्टभ्रात्रधिकारप्रसङ्गादिति भावः। प्रत्युत विरुद्धमेव वचनमप्यस्तीत्याह अनन्तरेति। पुत्रदुहित्रित्यादि। अनपत्यस्य धर्मोऽयम-भार्य्यापितृकस्य चेत्यभिधानादिति भावः। असंसृष्टविषयत्वमेवेति। शङ्खादिवचनानामिति पूर्वोक्तमनुष-

ज्यते। युक्तमिति। संसृष्टत्वे पत्न्यभावे भ्रात्रधिकारात् अर्थादसंसृष्टत्वे पत्नीसत्त्वे भ्रात्रधिकारस्य स्वरससिद्धत्वादिति भावः।।२३-२४।।

**अथ न्यायादिदमभिधीयते तथाहि संसृष्टत्वे यदेकस्य भ्रातुर्धनं तदपरस्यापि तत्रैकस्य मरणेन स्वत्वनाशेऽपि जीवतस्तत्र स्वामित्वानपायात् तस्यैव तद्भवति न तु पत्न्याः भर्त्तृमरणेन पत्नीस्वत्वस्यापि नाशात् सत्सु पुत्रादिषु न तद्धनं पत्न्या इति।।२५।।**

**तन्मन्दं, न हि संसृष्टत्वेऽपि यदेवैकस्य तदेवापरस्यापि, किन्तु अविज्ञातैकदेशं तत् द्वयोः न तु समग्रमेव समग्रस्वत्वकल्पनायां प्रमाणाभावात्, इत्युक्तमादावेव।।२६।।**

न्यायमेवाह तथाहीति। तदपरस्यापीति। सर्वेषां संसृष्टानां सर्वधन एव सामान्यस्वत्वं न प्रादेशिकमिति भावः। ननु दम्पत्योर्मध्यगं धनमित्यनेन तत्र पत्न्या अपि स्वत्वस्य विद्यमानतया अनन्तरं पत्न्या एव युगपदुभयोर्वा तद्धनं कथं न स्यादत आह न त्विति। भर्त्तृमरणेन तत्स्वत्वापगमन। भर्त्तृमरणात् तत्पत्नीस्वत्वनाशे प्रमाणमाह यथेति। इत्थञ्च पत्न्यधिकारस्थलेऽपि भर्त्तृमरणात् तस्याः प्राचीनं स्वत्वं नश्यत्येव सामग्रीसत्त्वात् किन्तु पुनः स्वत्वान्तरमुत्पद्यते अतएव तद्धनस्य दायत्वमपीति भावः। किन्विति, अविज्ञातं चैत्रीयत्वादिना विशेषरूपेण धर्मिण्यनिश्चितम् एकदेशमिति, मध्यपदलोपिसमासाश्रयणेन, एकदेशो देश आश्रयो यस्य तादृशञ्च तदित्यर्थः। न त्विति। न तु समग्रमेव द्वयोरित्यन्वयः न तु समुदितमेवोभयस्वामिकमित्यर्थः प्रमाणाभावादिति। वैशेषिकव्यवहारानर्हत्वेन प्रमाणाभावादित्यर्थः।।२५-२६।।

**परिणयनोत्पन्नं भर्त्तृधने पत्न्याः स्वामित्वं भर्त्तृमरणात् नश्यतीत्यत्र च प्रमाणाभावात् सति तु पुत्रे तदधिकारशास्त्रादेव पत्नीस्वत्वनाशोऽवगम्यते, अत्रापि संसृष्टभ्रात्रधिकारशास्त्रात् तद्विनाशोऽवगम्यते इति चेन्न, संसृष्टभ्रातृगोचरत्वस्याद्याप्यसिद्धेः, सिद्धेहि भ्रातृसंसृष्टभर्त्तृमरणेन पत्नीस्वामित्वनाशे भ्रात्रधिकारशास्त्रस्य संसृष्टविषयत्वं सति तु तदविषयत्वे शास्त्रस्य पत्नीस्वामित्वनाश इतीतरेतराश्रयत्वम्।।२७।।**

परीणयोत्पन्नं तदधीनदाम्पत्यसंस्कारोत्पन्नम् अन्यथा परिणयनानन्तरभाविभर्त्तृधने स्वामित्वानुपपत्तेः परिणयनस्य विनष्टत्वादिति। प्रमाणाभावादिति। तथाच पत्न्याः स्वत्वस्य विरोधिनः सत्त्वात् न भ्रातृस्वत्वसम्भव इति भावः। तदधिकारशास्त्रादेवेति। तथाच भर्त्तृमरणात् स्वत्वनाशे पुत्रसत्ताकालः सहकारी कल्प्यत इति भावः। असिद्धेरिति। तथाच संसृष्टभ्रात्रधिकारबोधकशास्त्रम् एतद्वचनं न भवतीत्यर्थः। ननु भर्त्तृमरणात् पत्न्याः स्वत्वनाशात् भ्रातुः स्वत्वोत्पत्तौ बाधकाभाव इत्यत आह सिद्धेहीति। संसृष्टविषयत्वं संसृष्टधनभ्रातृविषयत्वं सेत्स्यतीति शेषः। सति तु सिद्धे तु। पत्नीस्वत्वनाश इति। तत्शास्त्रबलेनैव पुत्रसत्ताकालस्येव संसृष्टभ्रातृसत्ताकालस्यापि सहकारित्वकल्पनादिति भावः।।२७।।

**किञ्च शङ्खलिखितादिवचनानामविभक्तसंसृष्टगोचरत्वे अभिक्तस्य संसृष्टस्य च धनं तद्विधभ्रातृगामि तस्य तु तथाविधस्याभावे पितरौ हरेतामित्यन्वयो वाच्यः, तदा च विकल्पनीयं, किं विभक्तासंसृष्टौ पितरौ गृह्णीयाताम् उताविभक्तसंसृष्टौ, तत्र न प्रथमः कल्पः पत्नीदुहितरश्चेत्यादिना विभक्तासंसृष्टयोः पित्रोः पत्नीबाधत्वात् कथं पत्नीतः पूर्वं तयोरधिकारः नापि, द्वितीयः अविभक्तसंसृष्टभ्रातृसद्भावेऽपि अविभक्तसंसृष्टपितृग्राह्यत्वस्य सर्वेषामविवादात्।।२८।।**

**किञ्च यथा पित्रा भ्रात्रा च विभक्तासंसृष्टधने शरीरदातृतया आत्मा वै जायते पुत्र इत्येकत्वश्रुतेर्धनशरीरयोश्च प्रभुत्वात् तत्पितृदेयपितामहप्रपितामहपिण्डद्वये च सपिण्डनेन मृतस्य**

**भोक्तृत्वात् जीवति च पितरि पुत्राणां पार्वणपिण्डदानाभावात् भ्रातृभ्यः पूर्वं पितुरधिकारः तथेतरत्रापि युक्तः, अविभागसंसर्गयोर्वा अविशेषात् पितृभ्रात्रोस्तुल्यवदधिकारो युक्तः न तु भ्रातुरभावे पितुरिति युक्तम्।।२९।।**

ननु दम्पत्योर्मध्यगं धनमित्यनेन यत्र पत्युः स्वत्वं तत्रैव पत्न्याः स्वत्वं प्रत्याय्यते न तु वैपरीत्यं स्त्रीधने व्यभिचारात् तथाच्च पत्युः स्वत्वनाशात् पत्न्याः स्वत्वनाशः सिद्ध एवेति शास्त्रस्य संसृष्टभ्रातृविषयत्वं निष्प्रत्यूहमिति क्वान्योन्याश्रयः पत्नीस्वत्वनाशस्य प्रमाणान्तरसिद्धत्वादत आह किञ्चेति। तद्विधः अविभक्तसंसृष्टान्यतरः। तस्य भ्रातुः तथाविधस्य उक्तान्यतरस्य। पत्नीदुहितरश्चेत्या दियाज्ञवल्क्यवचनस्य विभक्तासंसृष्टविषयत्वमेव कुत इति चेदत्र चूड़ामणिः सर्वबाध्यायाः पत्न्याः प्रथममधिकारबोधकतया तत्परत्वस्यैव निश्चयादित्याशयादिति व्याचष्टे। वस्तुतः शङ्खादिवचनानां संसृष्टाविभक्तभ्रातुः पत्नीतः पूर्वमधिकारबोधकत्वे पित्रोरपि तथाविधयोरेव पत्नीतः पूर्वमधिकारबोधकत्वं तुल्यन्यायात् अतः पारिशेष्यादेव याज्ञवल्क्यवचनस्य विभक्तासंसृष्टविषयत्वमिति भाव्यम्। पत्नीतः पूर्वमिति। शङ्खादिवचनादिति शेषः। अथास्मद्विधानां बहूनामत्र विवाद एव याज्ञवल्क्यवचनात् विभक्तासंसृष्टस्य पितुभ्रातृबाधकत्वे सिद्धे शङ्खाद्युक्तभ्रातृबाध्यताया अविभक्तसंसृष्टगोचरत्वस्यैव सम्भवादत आह किञ्चेति। ननु भ्रातृदेयपिण्डत्रये सपिण्डनेन तस्य भोक्तृत्वात् भ्रातुरेव प्रागधिकारो युक्त इत्यत आह जीवति चेति। इतरत्रापि संसृष्टाविभक्तधनेऽपि। यदि चोक्तहेतूनपेक्ष्यापि संसर्गाविभक्तत्वयोरुत्कर्ष इत्युच्यते तदा पितृभ्रात्रोर्द्वयोरेव तदविशेषात् युगपदधिकारः स्यादित्याह अविभागेत्यादि।।२८-२९।।

**किञ्चाविभक्तसंसृष्टौ पितरौ गृह्णीयातामिति द्विवचनमप्यनुपपन्नं, मात्रा सह विभागाविभागयोरभावात् अतएव धनसंसर्गाभावोऽपि। यदाह बृहस्पतिः।**

**विभक्तो यः पुनः पित्रा भ्रात्रा चैकत्र संस्थितः।**
**पितृव्येणाथवा प्रीत्या स तु संसृष्ट उच्यते।।**

**अनेनैतद्दर्शयति येषामेव हि पितृभ्रातृपितृव्यादीनां पितृपितामहार्जितद्रव्येणाविभक्तत्वमुत्पत्तितः सम्भवति त एव विभक्ताः सन्तः परस्परप्रीत्या यदि पूर्वकृतविभागध्वंसेन यत्तव धनं तन्मम धनं यन्मम धनं तत्तवापीति एकत्र गृहे एकगृहिरूपतया संस्थिताः संसृज्यन्ते न पुनरनेवंरूपाणां द्रव्यसंसर्गमात्रेण सम्भूयकारिणां वणिजामपि संसर्गित्वं, नापि विभक्तानां द्रव्यसंसर्गमात्रेण पूर्वोक्तप्रीतिपूर्वकाभिसन्धानं विना, अतः संसर्गित्वाविभक्तत्वयोर्मात्रा सहासम्भवात् कथं मातृगतो भ्रातृसद्भावाधिकारविरोधः समाधेयः।।३०।।**

अथ शङ्खादिवचनयाज्ञवल्क्यादिवचनेषु क्रमेणाधिकारावगमात् यौगपद्यासम्भवः तथाच तद्भोग्यपिण्डद्वयदातृपित्रपेक्षया तद्भोग्यपिण्डत्रयदातृतया तद्देयमातामहादिपिण्डत्रयदातृतया च भ्रातृरुत्कर्षात् तत्क्रमेणैवाधिकारो युक्तः विभक्तासंसृष्टपितुः प्रागधिकारस्तु वाचनिक एवेत्यत आह किञ्चेति। अविभागः साधारण्यम्। अतएव विभागविरहादेव उत्पत्तित इति। तेन मातृव्यावृत्तिः तस्या धनसम्बन्धस्य परिणयाधीनत्वात्। विभागध्वंसेन विभागाभिव्यङ्ग्यस्वत्वध्वंसेन। यत्तवेति। यावदेकवावस्थानमिति शेषः अन्यथा विभक्ताः पितृवित्ताच्चेत् संप्रीत्यैकत्र संस्थिताः। पुनर्विभागकरणे तेषां ज्यैष्ठ्यं न विद्यत इत्यादिवचनोपदेशितपुनर्विभागस्य वैयर्थ्यापत्तेः। एतेन संसर्गे सति स्वत्वं सर्वेषां सर्वधनेषु सामुदायिकमेव न तु विभागात् पूर्वमिव प्रादेशिकमिति सिद्धम्। अत्र चोक्ताभिसन्धानबलेन साधारणधनशरीरायासाभ्यां संसृष्टिनैकेनार्जितधनेऽपि सर्वेषामेव संसृष्टिनां सामुदायिकस्वत्वमिति बोध्यम्। अधिकारविरोधः अधिकारपौर्वापर्य्यविरोधः।।३०।।

**सम्प्रति धीमद्भिः समाधीयते। तत्र विष्ण्वादिवचनेभ्यः पुत्राद्यभावमात्रेण पत्न्यधिकारः स्पष्टमवगम्यते, युक्तश्चैतत् यन्मृतधनं पुत्रपौत्रप्रपौत्राणामेव प्रथमं भवति, तथाहि मनुविष्णू।**

**पुन्नाम्नो नरकाद यस्मात् पितरं त्रायते सुतः।**
**तस्मात् पुत्र इति प्रोक्तः स्वयमेव स्वयम्भुवा।।**

**(मनु ९।१३८, विष्णु १५।४३)**

**तथा हारीतः।**

**पुन्नामा निरयः प्रोक्तच्छिन्नतन्तुश्च नैरयः।**
**तत्र वै त्रायते यस्मात् तस्मात् पुत्र इति स्मृतः।।**

**तथा शङ्खलिखितौ।**

**पितृणामनृणो जीवन् दृष्ट्वा पुत्रमुखं पिता।**
**स्वर्गी स तेन जातेन तस्मिन् संन्यस्य तदृणम्।।**
**अग्निहोत्रं त्रयो वेदा यज्ञाश्च शतदक्षिणाः।**
**ज्येष्ठपुत्रप्रसूतस्य कलां नार्हन्ति षोड़शीम्।।**
**तथा मनुशङ्खलिखितविष्णुवशिष्ठहारीताः।**
**पुत्रेण लोकान् जयति पौत्रेणानन्त्यमश्नुते।**
**अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति पिष्टपम्।।**

**(मनु ९।१३७, वशिष्ठ १३।५, विष्णु १५।४५)**

**तथा याज्ञवल्क्यः।**

**लोकानन्त्वं दिवः प्राप्तिः पुत्रपौत्रप्रपौत्रकैः।।३१।।**

**(याज्ञवल्क्य १।७८)**

स्वसिद्धान्तमाह सम्प्रतीति। न च स्वार्जितधने प्रथमं भ्रात्रधिकार पितृ सम्बन्धिधने पितुरधिकार इति रत्नाकराद्यभिहितमेव समाधानं युक्तमिति वाच्यं प्रमाणाभावात् विनिगमनाविरहेण वैपरीत्यस्यापि सम्भवाच्च। धीमद्भिरन्यदभिमतार्थवादिभिः हलायुधादिभिरित्यर्थः। विष्ण्वादीत्यादिना याज्ञवल्क्य-परिग्रहः। वचनेभ्यः अपुत्रधनं पत्न्यभिगामीति पत्नीदुहितरश्चैवेत्यादिवचनेभ्यः। वचनस्थपुत्रपदस्य वक्ष्यमाणयुक्त्या प्रपौत्रपर्य्यन्तपरत्वादाह आदीति। पौत्रप्रपौत्रपरिग्रहार्थम्। स्पष्टमिति। अपुत्रधनं पत्न्यभिगामीत्यभिधानात् एषामभावे पूर्वेषां धनभागुत्तरोत्तर इत्यभिधानाच्चेति भावः। अस्य न्याय-मूलत्वमाह युक्तमिति। नैरयो नरकम्। नैरय इति निरयगामीत्यर्थ इति केचित्, तदसत् तत्रेत्य-नन्वयापत्तेः किन्तु नरक एवार्थः तद्धितस्या-विवक्षणात्। तत्र तस्मात्। प्रसूतस्येति। भावे क्तः तेन जन्मन इत्यर्थः। ब्रन्ध्नस्य आदित्यस्य। पिष्टपं लोकम्।।३१।।

**तदेवं पुत्रादिभिर्जन्मतः प्रभृति पितुः परलोकोचितमहोपकारनिष्पादनात् मृतस्य तस्य च पार्वणविधिना पिण्डदानात् पुत्राद्यर्थं तद्धनं मृतमेवोपकरोतीति न्यायप्राप्तं पुत्रादीनां स्वामित्वं श्रुतम्।**

**तथोपकारकत्वेनैव धनसम्बन्धं मनुरप्याह।**

**ज्येष्ठेन जातमात्रेण पुत्री भवति मानवः।**
**पितृणामनृणश्चैव स तस्माल्लब्धुमर्हति।।३२।।**

**(मनु ९।१०६)**

**तस्मादिति हेतूपन्यासात् दायभागप्रकरणे च पुत्रादीनां नानाविधपित्राद्युपकारकत्वकीर्त्तनस्य अनन्यप्रयोजनकत्वात् उपकारकत्वादेव धनसम्बन्धो मनोरनुमत इति गम्यते।।३३।।**

**अतएव पुत्रपदं प्रपौत्रपर्य्यन्तपरं तत्पर्य्यन्तानामेव पार्वणविधिना पिण्डदानोपकारकत्वस्याविशेषात्।।३४।।**

**अन्यथा पुत्रपदस्य स्वार्थत्यागानुपपत्तेः पौत्राधिकारज्ञापकं वचनं कथञ्चित् यदि लभ्येतापि, प्रपौत्रस्य तु न पृथक् वचनमस्ति।।३५।।**

**तस्मादुपकारकत्वादेव प्रपौत्रस्याप्यधिकार इति पुत्रपदमुपलक्षणम्।।३६।।**

**अतएव बौधायनः। प्रपितामहः पितामहः पिता स्वयं सोदर्य्या भ्रातरः सवर्णायाः पुत्रः पौत्रः प्रपौत्रः एतान् अविभक्तदायादान् सपिण्डानाचक्षते विभक्तदायादान् सकुल्यानाचक्षते सत्स्व-ङ्गजेषु तद्गामी ह्यर्थो भवति सपिण्डाभावे सकुल्यः तदभावे चाचार्य्योऽन्तेवासी ऋत्विग्वाहरेत् तदभावे राजा।।३७।।**

**अस्यार्थः पित्रादिपिण्डत्रये सपिण्डनेन भोक्तृत्वात् पुत्रादिभिश्च त्रिभिः तत्पिण्डस्यैव दानात् यश्च जीवन् यत्पिण्डदाता स मृतः सन् सपिण्डनात् तत्पिण्डभोक्ता एवञ्च सति मध्यस्थितः पुरुषः पूर्वेषां जीवन् पिण्डदाता स मृतः तत्पिण्डभोक्ता च परेषां जीवतां पिण्डसम्प्रदानभूत आसीत् मृतैश्च तैः सह दौहित्रादिदेयपिण्डभोक्ता अतो येषामयं पिण्डदाता ये वास्य पिण्डदातारः ते अविभक्तपिण्डरूपं दायमदन्तीत्यविभक्तदायादाः सपिण्डाः पञ्चमस्य तु पूर्वस्य मध्यमः पञ्चमो न पिण्डदाता न च तत्पिण्डभोक्ता, एवमधस्तनोऽपि पञ्चमो न मध्यमस्य पिण्डदाता नापि तत्पिण्डभोक्ता, एतेन वृद्धप्रपितामहप्रभृतयस्त्रयः पूर्वपुरुषाः प्रतिप्रणप्तुश्च प्रभृत्यधस्तनास्त्रयः पुरुषाः एकपिण्डभोक्तृत्वाभावात् विभक्तदायादाः सकुल्या इत्याचक्षते।।३८।।**

श्रुतं न्यामूलश्रुतिबोधितम्। अतएव उपकारकत्वेन धनसम्बन्धस्य मनोरनुमतत्वादेव। अन्यथा न्यायमूलकत्वाभावे। ननु वाचनिक एवायमधिकारक्रमः पौत्रप्रपौत्रयोरपि वचनान्तरादेवाधिकारी भविष्यतीत्यत् आह पौत्राधिकार इति। कथञ्चिदिति। पौत्री मातामहस्तेन दद्यात् पिण्डं हरेद्धनमित्यनेन पुत्रिकापुत्रस्य पौत्रतया धनाधिकारप्रतिपादनात् पौत्रस्यापि धनाधिकारस्यार्थतः प्राप्तेरित्यर्थः। एवं अपुत्रपौत्रे संसारे दौहित्रा धनमाप्नुयुरित्यनेनापि तथैव पौत्राधिकारलाभ इत्यर्थः। यत एव प्रपौत्रस्य धनाधिकारः अतएवेत्यर्थः। दौहित्रादीत्यादिना जीवत्पुंगान्तरादिपरिग्रहः। प्रतिप्रणप्तुः प्रपौत्रपुत्रात्।।३२-३८।।

**इदञ्च सपिण्डत्वं सकुल्यत्वञ्च दायग्रहणार्थमुक्तम्।।३९।।**

**अतएव मनुनापि। न भ्रातरो न पितरः पुत्रा रिक्थहराः पितुरित्यभिधाय कुत इत्यपेक्षायां त्रयाणामुदकं कार्य्यं त्रिषु पिण्डः प्रवर्त्तते चतुर्थः सम्प्रदातैषां पञ्चमो नोपपद्यते।। (मनु ९।१८५-१८६)**

**अशौचाद्यर्थन्तु पिण्डलेपभुजामपि तद्दत्तपिण्डलेपभोक्तृत्वेन सपिण्डत्वं मार्कण्डेयपुराणे निर्दिष्टं यथा।**

**पिण्डलेपभुजश्चान्ये पितामहपितामहात्।**
**प्रभृत्युक्तास्त्रयस्तेषां यजमानश्च सप्तमः।।**
**इत्येवं मुनिभिः प्रोक्तः सम्बन्धः साप्तपौरुषः।।**

**(मार्कण्डेयपुराणम् २८।४)**

**अशौचकर इत्यर्थः।।४१।।**

**अतएव मनुनाप्युक्तमशौचप्रकरणे।**
**सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते।**
**समानोदकभावस्तु जन्मनाम्नोरवेदने।। (मनु ५।६०)**
**अन्यथा त्रयाणामित्यनेन विरोधः स्यात्।।४२।।**

**प्रपौत्रपर्य्यन्ताभावे तु वैधव्यात् प्रभृति व्रतादिना भर्त्तुः परलोकहिताचरणेन पुत्रादिभ्यो जघन्येति तेषामभावे धनहारिणी पत्नी। तदाह व्यासः।**

**मृते भर्त्तरि साध्वी स्त्री ब्रह्मचर्य्यव्रते स्थिता।**
**स्नाता प्रतिदिनं दद्यात् स्वभर्त्रे सतिलाञ्जलीन्।।**
**कुर्य्याच्चानुदिनं भक्त्या देवतानाञ्च पूजनम्।**
**विष्णोराराधनञ्चैव कुर्य्यान्नित्यमुपोषिता।।**
**दानानि विप्रमुख्येभ्यो दद्यात् पुण्यविवृद्धये।**
**उपवासांश्च विविधान् कुर्य्यात् शास्त्रोदितान् शुभे !।।**
**लोकान्तरस्थं भर्त्तारमात्मानञ्च वरानने !।**
**तारयत्युभयं नारी नित्यं धर्मपरायणा।।४३।।**

**तदेवमादिभिर्वचनैः पत्न्या अपि नरकनिस्तारकत्वश्रुतेः धनहीनतया वा अकार्य्यं कुर्वती पुण्यापुण्यफलसमत्वेन भर्त्तारमपि पातयतीति तदर्थं तद्धनं पूर्वस्वाम्यर्थमेव भवतीति युक्तं पत्न्याः स्वाम्यम्।।४४।।**

साप्तपौरुषसापिण्डविधिबोधितविरोधमाशङ्क्याह इदमिति इदं पुरुषत्रयमात्रविश्रान्तम्। वैधव्यात् प्रभृतीति। अनेन जन्मप्रभृत्युपकारकेभ्यः पुत्रादिभ्यो जघन्यत्वमुपपादितम् एव पार्वणपिण्डदाना-भावादपि जघन्यत्व बोध्यम्। न च पुत्रादिभ्यः पूर्वं परिणयनात् प्रभृत्याश्रमधर्माचरणेन उपकारकत्वात् तस्या अभ्युत्कर्षसम्भव इति वाच्यम् अलाभे चैव कन्यायाः स्नातकव्रतमाचरेदित्यादिना आश्रमधर्मा-चरणे तस्या अनियततत्वात् जन्मप्रभृतिमहोपकारकपुत्रादितो जघन्यतया दुर्बलत्वाच्च। स्वभर्त्रे इति उपलक्षणमेतत्। श्वशुरार्य्यश्वशुराभ्यामपि बोध्यम्। तर्पणं प्रत्यहं कार्य्यं भर्त्तुः कुशतिलोदकैः। तत्पि-तुस्तत्पितुश्चापि नामगोत्रादिपूर्वकम् इति काशीखण्डवचनात् अत्र प्रत्यहमितिविधानात् एषां तर्पणं नित्यम् अन्येषां काम्यमिति बोध्यम्। विष्णोरिति। आराधनं पतिबुद्ध्या विष्णोश्च पूजनं कार्य्यं पति-बुद्ध्या। न चान्यथा इति काशीखण्डवचनात्। उपवासांश्चेति। शास्त्रोदितान् नित्यान् काम्यान् वा अहोरात्राभोजनरूपान् भोजनचतुष्टयनिवृत्तिरूपान् वा उपवासांश्चेत्यर्थः। काम्योपवासाश्च महाभार-तोक्ताः। यथा त्रिरात्रं पञ्चरात्रं वा पक्षव्रतमथापि वा। मासोपवासान् कुर्य्याद्वा चान्द्रायणमथापि वा इति। त्रिरात्रोपवासो न वैश्यशूद्रयोः, त्रिरात्रं पञ्चरात्रं वा तेषां पुष्टिर्न विद्यते। वैश्याः शूद्राश्च ये मोहादुपवासं प्रकुर्वते इति भारतवचनात्। पुष्टिर्व्रतफलमिति। कश्चित्तु उपावृत्तस्य पापेभ्यो यस्तु वासो गुणैः सह। उपवासः स विज्ञेयो न शरीरविशोषणमिति पारिभाषिकोपवासपरमेव अत्रोपवासपदमित्याह तन्न, तस्य समुदितस्यैकविधत्वेन विविधानित्यनुपपत्तेः। न च उपवाससामान्यपरत्वे चाशक्यानुष्ठान-दोषः सर्वस्मिन्नेवाह्निकाम्योपवाससम्भवादिति, वाच्यम् एतस्य सम्भवपरत्वात् दानवत्। लोकान्तरस्थं दुःखदापकृष्टस्थानस्थं, तारयति सुखदोत्कृष्टस्थानं प्रापयति। नरकनिस्तारकत्वश्रुतेरिति। युक्तं पत्न्याः स्वाम्यमिति वक्ष्यमाणहेतोः। पुण्यापुण्य इति। शरीरार्द्धं स्मृता जाया पुण्यापुण्यफले समेति वचना-दित्यादि। पातयतीति इति अतोऽपीत्यर्थः।।३९-४४।।

**अतः शङ्खादिवचनेषु व्यवहितयोजना कार्य्या, अपुत्रस्य स्वर्यातस्य धनं ज्येष्ठा पत्नी हरेत् तदभावे पितरौ हरेतां तदभावे भ्रातृगामीति। तदभाव इति मध्यपठितं पूर्वेण भ्रातृगामीत्यनेन परेण च पितरौ हरेतामित्यनेन सम्बध्यते अविरोधात् न्यायस्योक्तत्वाच्च न त्वश्रुताविभक्त-संसृष्टगोचरत्वकल्पना।।४५।।**

**अतोऽविशेषणैव विभक्तत्वाद्यनपेक्षयैव अपुत्रस्य भर्त्तुः कृत्स्नधने पत्न्यधिकारो जितेन्द्रि-योक्त आदरणीयः।।४६।।**

अत इति। पत्न्यधिकारस्य न्यायसिद्धत्वं यतोऽत इत्यर्थः। शङ्खादिवचनेष्विति। अपुत्रस्य स्वर्यातस्य भ्रातृगामि धनं तदभावे पितरौ हरेतां पत्नी वा ज्येष्ठा इत्यादि प्रागुक्तेष्वित्यर्थः। व्यवहितयोजनामेवाह अपुत्रस्येति। अविरोधादिति। विष्णुयाज्ञवल्क्यशङ्खवचनानां परस्परविरोधपरी-हारायेत्यर्थः। अयञ्च व्यवहितयोजनानां मध्यपठितस्य उभयत्रान्वये वा उभयत्रैव वा हेतुः। ननु विष्णादिवचनेऽपि व्यवहितयोजना विरोधपरीहारसम्भवे व्यवहितयोजनानां विनिगमकाभाव इत्यत आह न्यायस्येति। वैधव्यात्प्रभृतीत्याद्युक्तन्यायस्येत्यर्थः। तथाच न्याय एव विनिगमक इति भावः। निराकृतमपि केषाञ्चिन्मतं हेत्वन्तरेणापि पुनर्निराकरोति न त्विति। तथाचाश्रुतकल्पनागौरवपराहतमपि तदिति भावः। अविशेषेणैव वचने विभक्तत्वादिविशेषानुपादानेनैव। विभक्तत्वाद्यनपेक्षा इत्यत्रेयं हेतुः।।४५-४६।।

**पत्नीत्वञ्च प्रथमं उत्तमवर्णायाः।**

**ज्येष्ठा पत्नीत्यभिधानात् वर्णक्रमेण ज्येष्ठत्वात्,**

**तदाह मनुः।**

**यदि स्वाश्च पराश्चैव विन्देरन् योषितो द्विजाः।**
**तासां वर्णक्रमेणैव ज्येष्ठ्यं पूजा च वेश्म च।।**

**(मनु ९।८५)**

**अतः परिणयनकनिष्ठापि सवर्णा ज्येष्ठैव तस्या एव यज्ञादिषु व्यापाराधिकारात् पत्नीत्वम्। तथाच मनुः।**

**भर्त्तुः शरीरशुश्रूषां धर्मकार्य्यञ्च नैत्यिकम्।**
**स्वा स्वैव कुर्य्यात् सर्वेषां नान्यजातिः कथञ्चन।।**
**यस्तु तत् कारयेन्मोहात् स्वजात्या स्थितयान्यया।**
**यथा ब्राह्मणचाण्डालः पूर्वदृष्टस्तथैव सः।। (मनु ९।८६-८७)**
**सवर्णायाः पुनरभावे अनन्तरवर्णा पत्नी।**

**यथा विष्णुः।**

**सवर्णाया अभावेत्वनन्तरयैवापदि न त्वेव द्विजः शूद्रया। (विष्णु २६।३) धर्मकार्य्यं कुर्य्यादित्यनुवर्त्तते। (विष्णु २६।१) तेन ब्राह्मणस्य ब्राह्मणी पत्नी तदभावे क्षत्रियाप्यापदि न तु परिणीते अपि वैश्याशूद्रे, क्षत्रियस्य क्षत्रिया पत्नी तदभावे वैश्यापि अनन्तरवर्णत्वात् न शूद्रा, वैश्यस्य वैश्यैवैका। नत्वेव द्विजः शूद्रयेति द्विजमात्रस्यैव शूद्रानिषेधात्।।४७।।**

**अनेनैव पत्नीभावक्रमेण धनाधिकारिता बोध्यव्या। अतः परिणीतस्त्रीणामप्यपत्नीत्वात् तदभिप्रायकमेव नारदवचनम्। यथा,**

भ्रातॄणामप्रजाः प्रेयात् कश्चित् वै प्रव्रजेद् यदि।
विभजेरन् धनं तस्य शेषास्ते स्त्रीधनं विना।।
भरणञ्चास्य कुर्वीरन् स्त्रीणामाजीवितक्षयात्।
रक्षन्ति शय्यां भर्त्तुश्चेदाच्छिन्दुरितरासु च।।

(नारद १३।२५-२६)

तथा तस्यैव।

अन्यत्र ब्राह्मणात् किन्तु राजा धर्मपरायणः।
तत् स्त्रीणां जीवनं दद्यादेष दायविधिः स्मृतः।।

(नारद १३।२५)

तदीयस्त्रीणामपत्नीनां वर्त्तनधनदानं पत्नीनां पुनः कृत्स्नधनेऽधिकारितेत्यविरोधः।।४८।।

अतएव बृहस्पतिः।

येऽपुत्राः क्षत्रविट्शूद्राः पत्नीभ्रातृविवर्जिताः।
तेषां धनं हरेद्राजा सर्वस्याधिपतिर्हि सः।।

पत्न्यभावे राज्ञो धनसम्बन्धं दर्शयति। नारदस्तु। तत्स्त्रीणां जीवनं दद्यादिति वर्त्तनधनं दत्त्वा राज्ञा सर्वधनं ग्रहीतव्यमिति यो विरोधः स पत्नीस्त्रियोर्भेदेन समाधेयः, अतएव पत्न्यधिकारवचनेषु पत्नीयपदानुस्मृतिः वर्त्तनवचनेषु च स्त्रीनार्य्यादिशब्दप्रयोगः।।४९।।

अग्रजा इति। पुत्रादिमातृपर्य्यन्ताभाववानित्यर्थः। शेषा इतरे भ्रातरः। तेषामेव प्रकृतत्वात् अत्र तत् स्त्रीणां भरणमात्रविधानात् तत्सत्त्वेऽपि भ्रातॄणामधिकारः प्रतीयते। तस्यैव नारदस्यैव वचनान्तरमिति शेषः। अपत्नीनामिति। व्यवहितवर्णानां शूद्राणामित्यर्थः। अतएव स्त्रीणां पत्नीत्वापत्नीत्वाभ्यां द्वैविध्यादेव। पत्नीस्ि ोर्भेदेन पत्न्यपत्न्योर्भेदेन। ऊक्तार्थे स्मृतिस्वरसमाह अतएवेति।। ४७-४९।।

यदपि देवलवचनम्।

ततो दायमपुत्रस्य विभजेरन् सहोदराः।
तुल्या दुहितरो वापि ध्रियमाणः पितापि वा।।
सवर्णा भ्रातरो माता भार्य्या चेति यथाक्रमम्।
एषामभावे गृह्णीयुः कुल्यानां सहवासिनः।।

तुल्याः सवर्णा दुहितरः। सवर्णा भ्रातरः सापत्ना अभिमताः। सोदरभ्रातॄणां स्वपदोपात्तत्वात् विशेषणानुपपत्तेः। तत्रापि सहोदरादिभार्य्यान्तरस्य लिखनक्रमो नाधिकारक्रमार्थः विष्ण्वादिविरोधात्, किन्तु विष्ण्वाद्युक्तक्रमेण गृह्णीयुरित्येतदर्थः लिखनक्रमेऽनास्थाव्यञ्जनार्थमेव दुहितरो वापि पितापि वेति अपिवाशब्दमुभयत्र प्रयुक्तवान् तच्चान्यत्राप्यनुषज्यते तेन सहोदरा वा दुहितरो वा पिता वेत्यनास्था कीर्त्तनक्रमस्य देवलवचनेन दर्शिता।।५०।।

ध्रियमाणो धनाधिकारयोग्यः तेन पतितादिव्यावृत्तिः। विशेषणानुपपत्तेरिति। अव्यावर्त्तकत्वेन वैयर्थ्यादिति भावः। विष्ण्वादिविरोधादिति। अत्र विनिगमना न्याय एवेति प्रागेवोक्तमिति भावः।।५०।।

यच्च बालकेनोक्तम् असवर्णाविषयं वा युवत्यभिप्रायं वा अविभक्तसंसृष्टविषयं वा शङ्खादिवचनमिति। तेन अव्यवस्थितशास्त्रार्थकथनेनात्मनो बालरूपत्वमेव प्रकटीकृतं सन्देहादेकतरानुष्ठानानुपपत्तेः।।५१।।

यदप्यनूढावरुद्धाभिप्रायं वर्त्तनवचनं वर्णितं तदपि धर्मपत्नीनामनुग्रहार्थमिति हेयमेव वर्त्तनविधानविषयस्य स्त्रीणां पूर्वमेव दर्शितत्वात्।।५२।।

असवर्णाविषयं वेति। एतन्मते पत्नी वा ज्येष्ठा इत्यादिशङ्खवचने अकारप्रश्लेषात् अज्येष्ठा इत्यर्थोऽवसेयः तेन न विरोधः। युवत्यभिप्रायं वेति। विधवा यौवनस्था च नारी भवति कर्कशा। आयुषः क्षपणार्थाय दातव्यं स्त्रीधनं सदेति युवत्याः प्राणधारणमात्रोपयोगिधनदानमात्रविषयकहारीत-वचनैकमूलत्वादिति भावः। अविभक्तेति। केचिदित्यादिवाद्युक्तन्यायोऽत्र हेतुः। तेन बालकेन। अव्यवस्थितशास्त्रार्थकथनेन, निर्णयानर्हशास्त्रार्थकथनेन। बालरूपत्वं बालकवत् प्रवृत्त्ययोग्यवाग्वा-दित्वम्। सन्देहादिति। तिसृषूक्तकोटिषु विहिताविहितत्वसन्देहादित्यर्थः। एकतरेति। अनुष्ठानं प्रवृत्तिः। अत्र पूर्वोत्तरपक्षद्वये हारीतवचनविरोधोऽपि द्रष्टव्यः। यच्च तेनैवापरमुक्तं स्त्रीणां कृत्स्नधनाधिकार-वचनानां वर्त्तनमात्रविधायकवचनानाञ्च विरोधपरीहाराय वर्त्तनवचनम् अनूढावरुद्धाविषयं कृत्स्नधना-धिकारवचनन्तु परिणीताविषयमिति व्यवस्थापितं तदपि दूषयति यदपीति। अवरुद्धा अन्तःपुरचारिणी भोग्या कर्मकरी। धर्मपत्नीनामिति। अवरुद्धानामित्यर्थः। अनुग्रहो वर्त्तनविधानेन सोपहासा चेयम् अवरुद्धासु धर्मपत्नीत्वोक्तिः वस्तुतस्त्वासामभार्य्यात्वात् वर्त्तनमपि कुत इत्युपहासः। यद्वा धर्मपत्नी-नामिति यथाश्रुतार्थकमेव। अनुग्रहार्थमिति तासामधिकारबोधनादित्यभिप्रायः।।५१-५२।।

**किञ्च सवर्णत्वासवर्णत्वाभ्यां पत्नीकृतविशेषेऽपि पित्रोर्भ्रातृणां चाधिकारे कथं विरोधः समाधेयः। संसर्गासंसर्गाभ्याञ्चेत् स एव विशेषः सर्वव्यापी भवतु किं पत्नीगोचरसवर्णादि-विशेषपरिकल्पनेन अयमपि विशेषो दूषितोऽस्माभिः पूर्वप्रपञ्चेन।।५३।।**

**सोदरासोदरकृतश्च विशेषो बृहस्पतिना पराहतः।**

**तदाह।**

**सकुल्यैर्विद्यमानैस्तु पितृमातृसनाभिभिः।**
**असुतस्य प्रमीतस्य पत्नी तद्भागहारिणी।।**

**सनाभयः सहोदराः। तेषु सत्स्वपि पत्न्या धनसम्बन्धं बोधयति तद्भागशब्दात् कृत्स्न एव भर्त्तृभागोऽवगम्यते न पुनस्तदेकदेशः।।५४।।**

**तस्मादस्मद्दर्शितेव व्यवस्था शास्त्रार्थः।।५५।।**

किं पत्नीगोचरेति। संसर्गासंसर्गयोः प्रयोजकत्वावश्यकत्वे किमधिकेन सवर्णासवर्णत्वादीनां प्रयोजकत्वकल्पनेनेति भावः। ननु मास्तु विशेषकल्पनं किन्तु संसर्गासंसर्गाभ्यामेव विशेषः सर्वव्यापी भवत्वित्यत्राह अयमपीति। संसर्गासंसर्गकृत इत्यर्थः पूर्वप्रपञ्चेन केचिदित्यादिवादिमतदूषणावसरे तद्बृहस्पतिवचनविरुद्धमित्यादिप्रपञ्चेन। अत्र पत्नीतः पूर्वं सोदरस्याधिकारः पश्चद्सोदरस्येति केचित् समादधिरे तदपि दूषयति सोदरेति। अत्र रत्नाकरादयः ब्रह्मचर्य्यव्रते स्थितेति वचनात् सन्ध्यग्विध-वाव्रतानुष्ठात्रीणां स्त्रीणां प्रथमं सर्वधनाधिकारः किञ्चिद्ब्रह्मचारिणीनामव्यभिचारिणीनां तदनन्तरम-धिकारः, व्रतशून्यानां तथाविधानां वर्त्तनमात्राधिकारः, तासामेव पूर्वं भ्रात्रधिकारः, व्यभिचारिणीनां वर्त्तनेऽपि नाधिकार इति व्यवस्थामाहः, अत्रापि किञ्चेत्याद्युक्तदूषणं द्रष्टव्यम्।।५३-५५।।

**पत्नी भर्त्तृधनं भुञ्जीतैव परं न तु तस्य दानाधानविक्रयान् कर्त्तुमर्हति। तदाह कात्यायनः।**

**अपुत्रा शयनं भर्त्तुः पालयन्ती गुरौ स्थिता।**
**भुञ्जीतामरणात् क्षान्ता दायदा ऊर्ध्वमाप्नुयुः।।५६।।**

**गुरौ श्वशुरादौ भर्त्तृगृहे स्थिता यावज्जीवं भर्त्तृधनं भुञ्जीत न तु स्त्रीधनवत् स्वच्छन्दं दानाधानविक्रयानपि कुर्वीत, तस्यान्तु मृतायां पत्न्यभावे ये दुहित्रादयो दायाधिकारिणस्ते**

**गृह्णीयुः न पुनर्ज्ञातयः तेषां दुहित्रादिभ्यो जघन्यत्वात् तद्बाधकत्वानुपपत्तेः पत्नी हि तेषां बाधिका तदधिकारस्य प्रागभावे प्रध्वंसे च बाधकाभावस्याविशेषात् बाधानुपपत्तेः॥५७॥**

**नापि स्त्रीधनाधिकारिणो गृह्णीयुः तेषां स्त्रीधनविषयत्वात् कात्यायनेनैव च स्त्रीधनाधिकारिणां वचनान्तरैरुक्तत्वात् पुनरुक्तत्वापत्तेश्च॥५८॥**

दानाधानेति। आधानं बन्धकम्। क्षान्ता परिमिताहारेण क्षीण। दायादा दुहित्रादयः। दुहित्रादीनामधिकारे हेत्वन्तरमाह पत्नी हीति। हि यस्मात् पत्न्येव तेषां बाधिकेत्यर्थः। तेषां दुहित्रादीनाम्। प्रागभाव इति। इदन्तु अनुत्पत्स्यमानस्यापि प्रागभावोऽस्तीति मतावलम्बनेनाभिहितं तन्मतेऽनुत्पत्स्यमानस्यापि दुःखस्य प्रागभावार्थिनः प्रायश्चित्तादौ प्रवृत्तेः प्रायश्चितप्राक् दुःखं मे मा भूदिति कामनाया आनुभविकत्वादिति। प्रागभावस्य प्रतियोगिव्याप्यत्वनये तु प्रागभावपदम् अत्यन्ताभावपरं तेन पतिसत्त्व एव मरणेन पत्न्याः प्राक्कालीनाधिकारात्यन्तभावे इत्यर्थः। बाधकाभावस्येति। स्वत्वप्रत्यासत्त्यैव तस्या बाधकत्वमित्यभिप्रायः। वस्तुतो लाघवात् तस्याः स्वत्वस्यैव प्रतिबन्धकत्वं न तु तस्या इति बोध्यम्। नापीति। दुहितृदौहित्राभावे पतिदायादसत्त्वे इति शेषः। स्त्रीधनाधिकारिणी भ्रात्रादयः। तेषामिति। तेषां धनाधिकारप्रतिपादकवचनस्य स्त्रीधनगोचरत्वादित्यर्थः। ननु प्राप्तं शिल्पैस्तु यद्वित्तं प्रीत्या चैव यदन्यतः। भर्त्तुः स्वाम्यं भवेत्तत्र शेषन्तु स्त्रीधनं स्मृतम् इति कात्यायनवचनात् तदपि स्त्रीधनं भवत्येवेत्याशङ्क्याह कात्यायनेनैवेति। पुनरुक्तेति। तथाच दायाधिकारवचनस्य पुनरुक्तत्वापत्त्या दायो न स्त्रीधनमिति भावः तथात्वे एकस्यैव मुनेः स्त्रीधने विरुद्धाधिकारिद्वयकथनेन विरोधोऽपि द्रष्टव्यः। न च गोवृषन्यायात् दायतदितरस्त्रीधनानां व्यवस्थाभेदो वचनाभ्यां भविष्यतीति नोक्तदोष इति वाच्यम्। दायस्य स्त्रीधनत्वमङ्गीकृत्य स्त्रीधनवचनानां दायेतरस्त्रीधनपरत्वेन सङ्कोचापेक्षया शेषन्तु स्त्रीधनमित्यत्र वचने शेषपदस्यैव मुनिपरिगणित स्त्रीधनपरतया सङ्कोचस्य न्याय्यत्वात् दायस्य केनापि मुनिना स्त्रीधनमध्येऽगणनात् अतएव विनियोगे स ईश्वर इति नापहारं स्त्रियः कुर्य्युरित्यादिना दाये तस्याः स्वातन्त्र्याभाव उपपद्यत इति। चूड़ामणिस्तु दायादपदस्य स्त्रीधनाधिकारिभ्रात्रादिपरत्वे दोषान्तरमाह पुनरुक्तत्वापत्तेरिति व्याचख्ये।।५६-५८।।

**अतः पत्नीदुहितरश्चेत्यादिना ये पूर्वपूर्वस्याभावे परभूताधिकारिणो निर्दिष्टास्ते यथा पत्न्याधिकारप्रागभावे गृह्णीयुस्तथा जाताधिकारायाः पत्न्या अधिकारप्रध्वंसेऽपि भोगावशिष्ट धनं गृह्णीयुः तदानीं दुहित्रादीनामेवान्यापेक्षया मृतोपकारकत्वात् युक्तो धनाधिकारः॥५९॥**

**तथा दानधर्मे।**

**स्त्रीणां स्वपतिदायस्तु उपभोगफलः स्मृतः।**
**नापहारं स्त्रियः कुर्य्यु पतिदायात् कथञ्चन॥६०॥**

**उपभोगोऽपि न सूक्ष्मवस्त्रपरिधानादिना किन्तु स्वशरीरधारणेन पत्युरुपकारकत्वात् देहधारणोचितोपभोगाभ्यनुज्ञानम् एवञ्च भर्त्तुरौर्ध्वदेहिकक्रियाद्यर्थं दानादिकमप्यनुमतम् अतएव नापहारं स्त्रियः कुर्य्युरित्यपहारवचनम् अपहारश्च धनस्वाम्यनुपयोगे भवति॥६१॥**

**अतएव वर्त्तनाशक्तौ आधानमप्यनुमतं तत्राप्यशक्तौ विक्रयणमपि न्यायस्याविशेषात्॥६२॥**

**भर्त्तुरौर्ध्वदेहिकक्रियार्थम् अर्थानुरूपं भर्त्तृपितृव्यादिभ्यो दद्यात्। तदाह बृहस्पतिः।**

**पितृव्यगुरुदौहित्रान् भर्त्तुः स्वस्त्रीयमातुलान्।**
**पूजयेत् कव्यपूर्त्ताभ्यां वृद्धानाथातिथीन् स्त्रियः॥**

**पितृव्यपदं भर्त्तुः सपिण्डपरम्। दौहित्रपदं भर्त्तुर्दुहितृसन्तानपरम्। स्वस्त्रीयपदं भर्त्तुः स्वसृ-**

सन्तानपरम्। मातुलपदञ्च भर्त्तुर्मातृकुलपरम्। तदेवमादिभ्यो दद्यात् न पुनरेतेषु सत्स्वेव स्वपितृकुलेभ्यः पितृव्यादिवचनानर्थक्यात्॥६३॥

तदनुमत्या तु स्वपितृमातृकुलेभ्योऽपि दद्यात्। तदाह नारदः।

मृते भर्त्तर्य्यपुत्रायाः पतिपक्षः प्रभुः स्त्रियाः।
विनियोगेऽर्थरक्षासु भरणे च स ईश्वरः॥
परिक्षीणे पतिकुले निर्मनुष्ये निराश्रये।
तत्सपिण्डेषु चासत्सु पितृपक्षः प्रभुः स्त्रियाः॥

(नारद १३।२८-२९)

विनियोगे दानादौ। पतिपुत्राभावे भर्त्तुकुलपरतन्त्रया तस्याः॥६४॥

एवञ्च दुहितुरप्यधिकारे जाते तस्यां मृतायां तदभावोक्ताः पितृधनाधिकारिणो गृह्णीयुः न तु दुहितृधनाधिकारिणः॥६५॥

पत्न्या च भर्त्तृधनात् कन्यायै विवाहार्थं तुरीयांशो देयः, पुत्राणामेव तद्दानप्रतिपादनात् दण्डापूपायितं पत्न्यादीनां दानम्॥६६॥

इति पत्न्यधिकारः॥६७॥

उपसंहरति। अत इति। प्रागभावे इति। पूर्वोक्तार्थकयुक्तिमाह तदानीमिति। पत्नीमरणे इत्यर्थः। ननु दानाधानेति यदुक्तं तत्र प्रमाणमाह तथेति। क्षान्तेति पूर्ववचनस्वरसात् व्याचष्टे उपभोगोऽपीति। एवञ्च भर्त्तुरुपकारस्यापेक्षणीयत्वञ्च। और्ध्वदेहिकक्रियार्थं पारलौकिकोपकारार्थम्। विनियोगे दानादाविति। एवञ्च तद्धनदाने पतिपक्षपरतन्त्रता यदि तदा स्पष्टमेव तदनुमत्या कदाचित् पितृपक्षेभ्योऽपि दानमिति। एवञ्चेति। दुहितृतोऽभ्यर्हिताया: पत्न्या एव भोगावशिष्टधने यद्यनन्तराधिकारिणामधिकारः तदा सुतरां दुहित्रनन्तरं तदभावोक्तानन्तराधिकारिणामधिकार इति भावः। पितृधनाधिकारिणः स्वपुत्रपित्रादयः। दुहितृधनाधिकारिणस्तद्दुहित्रादयः। दण्डापूपायितमिति। यथा दण्डाकर्षे तत्सम्बद्धस्यापूपस्याप्याकर्षः तथा अपुत्रसंक्रान्तधनस्य पत्नीगततया आकर्षे तत्सम्बद्धस्य कन्याधनावशिष्टत्वविशेषस्याप्याकर्ष इति भावः। इति पत्न्यधिकारः।।५९-६७।।



# एकादशः अध्यायः

## द्वितीय परिच्छेदः

पत्न्यभावे दुहितुरधिकारः। तत्र मनुनारदौ।

यथैवात्मा तथा पुत्रः पुत्रेण दुहिता समा।
तस्यामात्मनि जीवन्त्यां कथमन्यो हरेद्धनम्॥

(नारद १३।४९)

दुहितरं विशिनष्टि नारदः।

पुत्राभावे च दुहिता तुल्यसन्तानदर्शनात्।
पुत्रश्च दुहिताचोभे पितुः सन्तानकारिके॥

दुहितुरधिकारे सन्तानदर्शनं हेतुतया निगदितं सन्तानश्च पिण्डदोऽभिमतः अपिण्डदस्य अनुपकारकत्वेन अन्यसन्तानादसन्तानाच्चाविशेषात्॥१॥

दौहित्रश्च तत्पिण्डदाता, न च तत्पुत्रः नापि दौहित्री तत्पर्य्यन्तेन पिण्डविच्छेदात्।।२।।

अतः पुत्रवती सम्भावितपुत्रा चाधिकारिणी। वन्ध्या विधवा दुहितृप्रसूत्यादिना विपर्य्यस्तपुत्रा पुनरनधिकारिण्येवेति दीक्षितमतमादरणीयम्।।३।।

तत्र प्रथमं कन्यैवैका पितृधनहारिणी। यथा पराशरः। अपुत्रस्य मृतस्य कुमारी रिक्थं गृह्णीयात् तदभावे चोढ़ा। ऊढ़ापदं पूवोक्तविशेषपरम्।।४।।

तथा देवलः।

कन्याभ्यश्च पितुर्द्रव्यात् देयं वैवाहिकं वसु।
अपुत्रिकस्य कन्या स्वा धर्मजा पुत्रवद्धरेत्।।

पुत्रिकापदं पुत्रोपलक्षणम्। स्वा सवर्णा। धर्मजा औरसी।।५।।

दुहितुरधिकारो निरूप्यत इति शेषः। विशिनष्टि सन्तानवत्तयाधिकारित्वेन अन्य सन्तानादिति। अन्यस्य सन्तानो यथा न पिण्डदः तथाऽयमपीत्यविशेषः। असन्तानाद् घटादेः। तत् पुत्रो दौहित्र पुत्रः। विपर्यस्तपुत्रापुत्र विपरीता पत्या। उन्मादादिदोषग्रस्तपुत्रा इति केचित्, तदसत्, दुहितृप्रसूत्यादिनेति हेत्वनुपपत्तेः कन्यैवेति, न तु दत्तया सहेत्यर्थः। पूर्वोक्त विशेषोऽविपर्यस्त पुत्रत्वम्।

युक्तञ्चैतत् धनमन्तरेणापरिणीतायाः कन्याया ऋतुदर्शने पित्रादीनां नरकपातश्रुतेः। तदाह विष्णुः।

यावत्तु कन्यामृतवः स्पृशन्ति तुल्यैः सकाममपि याच्यमानाम्।
तावन्ति भूतानि हतानि ताभ्यां मातापितृभ्यामिति धर्मवादः।।(वशिष्ठ१७।५६)

तथा पैठीनसिः। यावन्नोद्भिद्येते स्तनौ तावदेव देया अथ ऋतुमती भवति तदा दाता प्रतिग्रहीता च नरकमाप्नोति पितृपितामहप्रपितामहाश्च विष्ठायां जायन्ते तस्मान्नग्निका दातव्या।।६।।

तस्मात् विवाहोपयुक्तत्वेन पित्रादीनां नरकनिस्तारकत्वात् परिणीतायाश्च पुत्रद्वारेणाप्युपकारकत्वात् तदर्थं धनं स्वाम्यर्थमेव भवतीति पत्न्यभावे न्याय्यं कन्यास्वत्वम्।।७।।

कन्यायास्त्वभावे सम्भावितपुत्रायाः पुत्रवत्याश्चाधिकारः। तदाह बृहस्पतिः।

सदृशी सदृशेनोढ़ा भर्त्तृशुश्रूषणे रता।
कृताकृता वाऽपुत्रस्य पितुर्धनहरी तु सा।।८।।

सदृशी पितृसवर्णा। सदृशेनोढ़ेति, उत्तमाधमवर्णपरिणीतानिरासार्थं उत्तमाधमपरिणीतादुहितृजातस्य अधमोत्तमवर्णमातामहादिश्राद्धनिषेधात् सवर्णेनोढ़ायास्तु पुत्रद्वारेण पित्रुपकारकत्वात्।।९।।

नग्निकाऽनागतर्त्तुका। नग्निकाऽनागतार्त्तं वा इत्यमरकोषात्। परिणीताया अनन्तरं विवाहितायाः। पुत्रद्वारेणेति। ऊढ़ाया एतदुपकाराविशेषेऽपि धनाभावेनापरिणीताया ऋतुमत्तया सम्भावितस्य भविष्यतो नरकस्य प्रतिकर्त्तृत्वमेव कुमार्य्याः प्रथमं धनग्रहणे निमित्तमिति बोध्यम्। सदृशीति। तेनासवर्णायाः सदृशेनोढ़ाया अपि न धनाधिकारित्वमित्युक्तम्। कृता पुत्रिका अकृता तदन्या। अपुत्रस्येति। अपत्नीकस्येत्यपि बोध्यं पत्न्यभाव एव कन्याधिकारावगमात्। निषेधादिति। निषेधस्त्वस्मादेव विशेषणात् कल्पनीय इति।।६-९।।

पुत्रिकापुत्रस्य तु पुत्रवदेवोपकारकत्वातिशयेन पुत्रिकायाः पुत्रतुल्यत्वात् पुत्रिकौरसयोः

**समधनाधिकारः अपुत्रिकायास्तूढ़ायाः पुत्रादिन्यूनोपकारकस्वपुत्रद्वारेणोपकारकत्वमिति कन्या-पर्य्यन्तानामभाव एव धनाधिकारिता युक्ता॥१०॥**

**न च वाच्यम् एवं तर्हि पुत्रवत्या एव प्रथमाधिकारोऽस्तु तदभावे तु सम्भावितपुत्राया इति यतस्तस्याः पश्चादुत्पन्नस्य दौहित्रस्यानधिकारापत्तेः न च तद्युक्तं दौहित्रतया द्वयोरप्युपकारा-विशेषात्॥११॥**

**भर्त्तृशुश्रूषापरत्वेनावैधव्यं प्रदर्शयन् सम्भावितपुत्रतां प्रदर्शयति॥१२॥**

**सेति च पूर्ववचनोपात्ता दुहिता परामृश्यते तदेवं सदृशी सदृशेनोढ़ा इत्यादि विशेषणात् न दुहितृमात्रतया पितृधनाधिकारितेति दर्शयति॥१३॥**

**अन्यथा,**

**अङ्गादङ्गात् सम्भवति पुत्रवद्दुहिता नृणाम्।**
**तस्याः पितृधनं त्वन्यः कथं गृह्णीत मानवः॥**

**इत्यनेन दुहित्रधिकारे कथिते सदृशी सदृशेनोढ़ेत्यादिना तस्यैवाभिधानं पुनरुक्तं स्यात् सामान्यप्राप्तेस्तु विशेषकथनमपुनरुक्तमेव॥१४॥**

कृताकृतावेत्येकवचनेनोपात्तत्वात् पुत्रिकाया अपि पत्नीकुमार्य्योरनन्तराधिकारः स्यादित्याशङ्काम-पनेतुमाह पुत्रिकापुत्रस्य त्विति। अनेन द्वारगत उत्कर्ष उक्तः। स्वतोऽप्युत्कर्षमाह पुत्रिकाया इति। तुल्यत्वञ्च पुत्रिकायां कृतायां त्वित्यनेन मनुना समविभागोक्तेरिति पुत्रादित्यादिना पौत्रप्रपौत्रपरिग्रहः। एवं तर्हीति। यद्युपकार एव प्रयोजकः तदेत्यर्थः। यत इति। अतएव विधवासधवयोः पुत्रवत्योर्विधवाया एव प्राक् पुत्रद्वारेण पिण्डदातृत्वात् प्रथममधिकार इति निरस्तम्। भर्त्तृशुश्रूषायाः पित्रुपकारत्वाभावात् धनग्रहणाप्रयोजकत्वमाशङ्क्याह भर्त्तृशुश्रूषापरत्वेनेति। पूर्ववचनेति। अङ्गादङ्गात् सम्मतीत्यादि-वचनोपात्तेत्यर्थः तस्यैव बृहस्पतेरेव। सामान्यप्राप्तेरिति। यद्यपि विशेषकत्वेऽपि सामान्यवचनवैयर्थ्यं तथापि सामान्यवचनाभावे। कुमारीणामनूढ़ात्वेनाधिकाराप्रसक्त्या न वैयर्थ्यम् ऊढ़ायास्तु दहितृत्व-पुरस्कारेण सामान्यवचनादधिकारप्राप्त्या विशेषस्यापुनरुक्ततैवेति भावः। तस्याः पितृधनं त्वन्यः कथमित्यनेनान्यबाधार्थत्वेनावैयर्थ्यमिति केचित्॥१०-१४॥

**यत एव स्वपुत्रद्वारेण पिण्डदातृतया दुहितुः पितृधनाधिकारः अतएव पुत्रिकाया अपि पित्रुपरमजातधनसम्बन्धायाः पश्चाद्वन्ध्यात्वेन तद्भर्त्तुर्वा प्रसवासामर्थ्येन विपर्य्यस्तपुत्राया मरणे तद्धनं न भर्त्तुः। शङ्खलिखितौ। यथा**

**प्रेतायाः पुत्रिकायास्तु न भर्त्ता द्रव्यमर्हति।**

**अपुत्रायाः। तथा पैठीनसिः।**

**प्रेतायां पुत्रिकायान्तु न भर्त्ता द्रव्यमर्हति।**
**अपुत्रायां कुमार्य्या वा स्वस्रा ग्राह्यं तदन्यया॥**

**ततः कुमार्य्या स्वस्रा अन्यया वा पुत्रवत्या सम्भावितपुत्रया स्वस्रा तद्धनं ग्राह्यम् अतः स्त्र्यधिकारे व्यावृत्तिरन्याधिकारस्य॥१५॥**

**यत्तु मनुवचनम्।**

**अपुत्रायां मृतायान्तु पुत्रिकायां कथञ्चन।**
**धनं तत् पुत्रिका भर्त्ता हरेतैवाविचारयन्॥**

**(मनु ९।१३५)**

**तदविपर्य्यस्तपुत्राया उत्पन्नसृतपुत्रायाः पुत्रिकाया मरणे वेदितव्यम्।।१६।।**

विपर्य्यस्तपुत्रायाः पुत्रात्यन्ताभाववत्याः। तद्धनं ग्राह्यमिति। तदपि पत्न्यभावे, कुमार्य्यादीनां पत्नीबाध्यत्वादिति बोध्यम्। अत इति, उक्तोभयसूचाभ्यां विपर्य्यस्तपुत्रायाः पुत्रिकाया मरणे कुमार्य्यादीनामधिकारे प्राप्ते भर्त्तुरधिकारस्य व्यावृत्तिरिति समग्रोपसंहारः। प्राञ्चस्तु यतः पुत्रिकाया एव विपर्य्यस्तपुत्राया मरणे न तत्संक्रान्तदाये भर्त्तुरधिकारोऽतः स्त्र्यधिकारे, अन्यासां दुहित्रादीनाअप्यधिकारेऽनन्तरं विपर्य्यस्तपुत्राणां तासां मरणे भर्त्तुरधिकारस्य व्यावृत्तिरिति व्याचक्रुः तदविपर्य्यस्तपुत्राया इति। एतस्यैव विवरणम् उत्पन्नमृतपुत्राया इति। अत्र पक्षान्तराभावात् चकारः क्वाचित्कः पाठः प्रामादिकः। अथात्र शङ्खलिखितादिवचनमेव उत्पन्नमृतपुत्राविषयं मनुवचनन्तु अनुत्पन्नपुत्राविषयमिति वैपरीत्यमेव न कुतः अनुत्पन्नपुत्राया इवाविपर्य्यस्तपुत्रायाः पुत्रोत्पत्त्यैव पितुः पुन्नामनरकनिवर्त्तकत्वेन कृतोपकारकतया स्वामित्वे निर्व्यूढ़े पितुरितरापेक्षया तस्या एवाधिकोपकारकत्वात् तद्भर्त्तुरधिकारो युक्तः अतएव दौहित्रस्य मुखं दृष्ट्वा किमर्थमनुशोचसीत्यनेन दौहित्रमुखदर्शनस्यापि नरकनिस्तारकतेति पुत्रानुत्पत्तौ तु पित्रुपकाराभावात् तस्या एव न स्वामित्वं कुतस्तत्पत्युरिति तत्पितृधनाधिकारिणां कन्यादीनामेव तदानीं तत्राधिकारस्य न्याय्यत्वात् यद्यपि वन्ध्यात्वेनावधृतायां जीवन्त्यामप्येवमुचितं तथापि प्रेताया इति ग्रहणात् न जीवन्त्यां तस्याम् अन्यदुहित्रादीनामधिकार इति। परे तु नेदं वचनं पुत्रिकापितृदायपरं किन्तु तदीयसौदायिकादिधनान्तरविषयं पुत्रिकायाः पुत्रत्वेन तस्याः तद्धने पित्रधिकारप्रसक्तौ तदपवादकमित्याहुः।।१५-१६।।

**पिण्डदानमेव च द्वयोरेकं निमित्तमनुवदति बृहस्पतिः।**

**यथा पितृधने स्वाम्यं तस्याः सत्स्वपि बन्धुषु।**
**तथैव तत्सुतोऽपीष्टे मातृमातामहे धने।।**

**यथा येन दौहित्रदेयपिण्डेन दुहिता पितृधनाधिकारिणी तथैव तेनैव पिण्डदानेन दुहितृसुतोऽपि मातामहधने स्वामी सत्स्वपि पित्रादिषु।।१७।।**

**न च पुत्रिकापुत्राभिप्रायेणेदं वचनं कृताकृता वाऽपुत्रस्य पितुर्धनहरी तु सा एतद्वचनोपात्तकृताऽकृतदुहित्रोरेव तस्या इति तत्सुत इति तत्पदेन परामर्शात् प्रत्यासत्त्यतिरेकाद्वा अकृतापरामर्श एव युक्तो न तु तत्परित्यागः।।१८।।**

**अतएव मनुः।**

**दौहित्रो ह्यखिलं रिक्थमपुत्रस्य पितुर्हरेत्।**
**स एव दद्यात् द्वौ पिण्डौ पित्रे मातामहाय च।।**
**पौत्रदौहित्रयोर्लोके विशेषो नास्ति धर्मतः।**
**तयोर्हि मातापितरौ सम्भूतौ तस्य देहतः।।१९।।**

**(मनु ९।१३२-१३३)**

**मातामहदेहात् दुहितुः सम्भवं दौहित्रस्य धनाधिकारे हेतुत्वेन निर्दिशति न तु पुत्रिकाकरणं इतरथा तदेव निर्दिशेत्। तथा व्यक्तमाह स एव।**

**अकृता वा कृता वापि यं विन्देत् सदृशात् सुतम्।**
**पौत्री मातामहस्तेन दद्यात् पिण्डं हरेत् धनम्।।**

**(मनु ९।१३६)**

**अकृताजातस्यापि दौहित्रस्याधिकारमभिदधाति।।२०।।**

दौहित्राधिकारार्थमाह पिण्डदानमेव चेति। चकारो युक्त्यन्तरसूचनाय। एवकारश्चोपकारस्य प्राधान्यार्थः। एतेन विपर्य्यस्तपुत्रायाः पिण्डदानायोग्याया दुहितुः सुतरां नाधिकार इत्यपि सूचितम्। यथेत्यस्य विवरणं येनेत्यादि। तथैवेत्यस्य विवरणं तेनैवेत्यादि न च पुत्रिकापुत्रेति। तथाच दौहित्र-सामान्याधिकारे नेदं वचनं किन्तु पुत्रिकाधिकार एवेति भावः। एतेनोक्तवचनस्य पुत्रिकाविषयतया तस्या एवाधिकारे पिण्डदानोपकारस्य हेतुतया निर्देशात् अपुत्रिकाणां दुहितृत्वपुरस्कारेणैवाधिकारात् तादृश्या विपर्य्यस्तपुत्राया अपि धनाधिकारस्य निर्व्यूढ़त्वात् तदनन्तरं तद्भर्त्तुरेवाधिकारो न्याय्य इति पूर्वोक्तपूर्वपक्षोऽपि सूचितः। परामर्शादिति। तद्वचनानन्तरमेव एतद्वचनस्य बृहस्पतिना अभिहितत्वादिति भावः। प्रत्यासत्त्येति। कृतापेक्षया अकृतायाः पश्चात् निर्दिष्टत्वेन अग्रिमेण तस्या इत्यनेन तस्या एवाव्यवधानातिरेकादित्यर्थः। अतएवेति। निर्दिशतीत्यग्रेणान्वयः। न त्विति। एतेन एतद्वचनं न पुत्रिकापुत्रविषयं किन्तु दुहितृसामान्यविषयं देहसम्भवस्य हेतुत्वेन निर्देशादित्यपि सिद्धम्।।१७-२०।।

**किञ्च स्मृतिषु दौहित्रपदमपुत्रिकाजातपरं नियतम्।**

**यथा बौधायनः।**

**अभ्युपगम्य दुहितरि जातं पुत्रिकापुत्रम्।**
**अन्यं दौहित्रम्। विद्यादित्यनुवर्त्तते।।२१।।**

**अतएव भोजदेवेनापि कृताकृतदुहित्रधिकारे बृहस्पतिरित्यभिधाय यथा पितृधने स्वाम्य-मिति वचनं लिखितम्।।२१।।**

**तथा गोविन्दराजेनापि मनुटीकायाम्।**
**अपुत्रपौत्रे संसारे दौहित्रा धनमाप्नुयुः।।**

**एतद्विष्णुवचनबलेन ऊढ़ातः प्रागेव दौहित्रस्याधिकारो दर्शितः।।२३।।**

**स चास्मभ्यं न रोचते सदृशौ सदृशेनोढ़ेत्यादिविरोधात्।।२४।।**

**किन्तु उढ़ायाः प्रागुक्तरूपाया अभाव एव सत्स्वपि पित्रादिषु दौहित्रस्याधिकारः तथैवेति दुहितृवद्भावविधानात् तत्सुतोऽपीत्यप्यर्थतया च निर्देशात् दौहित्रस्य जघन्यतावगतेः। अतो दुहित्रनन्तरं दौहित्रस्याधिकार इति सिद्धम्।।२५।।**

ननु पौत्रौ मातामहस्तेनेत्यभिधानात् अकृतापदम् अभिसन्धिकृतापरम् अपुत्रिकापुत्रस्य मातामह-पौत्रत्वानुपपत्तेः अभिसन्धिमात्रात् पुत्रिकेत्येकेषामिति गौतमदर्शनात् अभिसन्धिमात्रेणापि पुत्रिका-सम्भवात् तथाचाकृता अवाक्कृतेत्यर्थात् नैतद्वचनमपुत्रिकापुत्रविषयमत आह किञ्चेति। अन्यं दौहित्र-मिति। एतेनाकृतेति वचनं पौत्रीत्यनुवादादस्तु पुत्रिकापुत्रपरं दौहित्रो ह्यखिलं रिक्थमिति वचनन्तु दौहित्रपदश्रवणात् अपुत्रिकापुत्रपरमेवेत्यकृतापुत्रस्याप्यधिकारः सिद्ध एवेति दर्शितम्। अभ्युपगम्य पुत्रिकात्वेन स्वीकृत्य। अतएवेति। यथा पितृधने स्वाम्यमिति वचनस्य कृताकृतजातदौहित्रविषय-त्वादेवेत्यर्थः। बृहस्पतिवाक्ये पौत्रादिपदाभावात् अकृता अपुत्रिकेत्येवार्थ इत्याशयेनाह सदृशौ सदृशेनेति। विरोधादिति। तेन पुत्राभाव एव दुहितुरधिकारस्य प्रतिपादनात् सुतरामेव दौहित्रस्य तदनन्तरत्वादित्यर्थः। प्रागुक्तरूपाया अविपर्य्यस्तपुत्रायाः दुहितृवद्भावविधानात् तत्तुल्यत्वाभिधानात् जघन्यतावगतेरित्यग्रेणान्वयः अत्र हेतुः उपमानस्य उपमेयापेक्षया उत्कर्षबोधस्य सार्वलौकिकत्वमिति। हेत्वन्तरमाह तत्सुतोऽपीति। चकारो भिन्नक्रमे अप्यर्थतया अप्यर्थान्वितार्थबोधकतत्सुतोऽपीति-शब्दार्थतया निर्देशाच्चेत्यर्थः।।२१-२५।।

सत्स्वपि बन्धुष्वित्यनेन पित्रोरधिकारः पत्यभावे न्याय्योऽपि दुहितृदौहित्राभ्यां बाधित इति बाधकाभावे पित्रोरधिकारः सूचितः। अतएवानन्तरं बृहस्पतिः।

तदभावे भ्रातरस्तु भ्रातृपुत्राः सनाभयः।
सकुल्या बान्धवाः शिष्याः श्रोत्रिया धनहारकाः॥

तच्छब्देन दौहित्रस्य पित्रोश्च सूचितयोः परामर्शः। तेना मीषामभावे भ्रात्रादीनामधिकारः॥२६॥

यत्तु बालकवचनम्।

पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा।

इत्यादिनियतक्रमादधस्तन एव दौहित्रस्याधिकार इति तद्बृहस्पतिवचनेन विरोधात् बालवचनमेव बहुवचनान्तदुहितृपदेनैव कन्योढ़ादौहित्राणां निर्दिष्टत्वात् क्रमविरोधाभावात् यथा स्वर्यातस्य ह्यपुत्रस्येति पुत्रपदं प्रपौत्रपर्य्यन्तपरं पिण्डदत्त्वाविशेषात् तथा दौहित्रस्यापि पिण्डदत्त्वात् तत्पर्य्यन्तपरं दुहितृपदं यथा वा।

पुत्राभावे तु दुहिता तुल्यसन्तानदर्शनात्।

इत्यत्र पुत्रपदं पत्नीपर्य्यन्तपरम् अन्यथा दुहितर इति बहुवचनमनर्थकं स्यात् पत्नी तत्सुत इत्यादिवदेकवचनमेव कुर्य्यात् भ्रातर इत्यस्यापि बहुवचनस्यार्थवत्तां वक्ष्यामः॥२७॥

किञ्च पित्रादीनां, राजपर्य्यन्तानां क्रमनियमात् राज्ञोऽभावे दौहित्रस्याधिकारो वाच्यः न कदाचिद्राज्ञोऽभावोऽतीत्यनधिकार एवाभिहितो भवेत्॥२८॥

तस्मात् विश्वरूपजितेन्द्रियभोजदेवगोविन्दराजैर्दुहित्रभावे दौहित्रस्याधिकारो निरूपित आदरणीयः॥२९॥

अतएवानन्तरमिति। यथा पितृधने स्वाम्यमित्यनन्तरमित्यर्थः। तच्छब्देनेति। अन्यथा पित्रोरसूचने दौहित्राभाव एव भ्रात्रधिकारे पितरौ भ्रातरस्तथेत्यादि याज्ञवल्क्यादिविरोधः स्यादिति भावः। स एव दद्याद्वौ पिण्डाविति मनुवचनं पुत्रिकापुत्रपरमेव पितृधनग्रहणपक्षे मातामहधनग्रहणपक्षे च उभयपक्षपिण्डदानविधायकं पितृधनाग्रहणे तु केवलमातामहपक्षस्यैव पिण्डदानमिति, अपुत्रिकापुत्ररूपदौहित्राधिकारस्तु पत्नी दुहितरश्चेत्यादिना निर्दिष्टाधिकारिणाम् अनन्तरमेवेति बालकमतं तदपाकर्त्तुमाह यत्त्विति। बृहस्पतिवचनेनेति। तथैव तत्सुतोऽपीष्टे मातृमातामहे धने इत्यनेनेत्यर्थः। बालवचनमिति। शिशोरिवानभिसंहिततात्पर्य्यस्य वचनमित्यर्थः। नन्वेवं याज्ञवल्क्याद्युक्तक्रमविरोधः तैर्दुहित्रनन्तरं दौहित्रस्यानिर्देशादत आह बहुवचनेति। दुहितुरूढ़ानूढ़ाभेदेन द्वैविध्यात् बहुत्वान्वयानुपपत्त्या तथैव तत्सुतोऽपीति बृहस्पतिना दौहित्रस्य दुहितृधर्मातिदेशेन च अजहत्स्वार्थलक्षणया दुहितृपदस्य दुहितृदौहित्रोभयपरत्वादिति भावः। लक्ष्यतावच्छेदकन्तु अनूढ़ोढ़ादौहित्रान्यतमत्वादिकमिति बोध्यम्। असगोत्रत्वे सति साक्षात्परम्परा साधारणपार्वणकर्त्तृत्वमिति केचित्। प्रपौत्रपर्य्यन्तपरमिति। अत्र लक्ष्यतावच्छेदकं सगोत्रत्वे सति पार्वणकर्त्तृत्वम्। वक्ष्याम् इति। संसृष्टवचनव्याख्यावसरे इत्यर्थः। दुहितृपदस्य दौहित्रपर्य्यन्तरत्वाभावे दोषमप्याह किञ्चेति।।२६-२९।।

यदा च कन्या जाताधिकारा पश्चात् परिणीता सती म्रियते तदा तद्धनं कन्याया अनुत्पन्नाधिकाराया अभावे येषामूढ़ादीनां प्रतिपादितम् उत्पन्नाधिकाराया अप्यभावे तेषामेव तद्धनं न तु तद्भर्त्रादीनां भवति तस्य स्त्रीधनविषयत्वात् भुञ्जीतामरणात् क्षान्तेति वचनेन जाताधिकारायाः

**पत्न्या अभावे अनुत्पन्नाधिकारपत्न्यभावोक्तानां पूर्वधनस्वामिदायग्राहिणां दुहित्रादीनां धनाधिकारस्य दर्शितत्वात् पत्नीतो जघन्यदुहितृदौहित्रयोरधिकारे दण्डापूपन्यायसिद्धोऽयमर्थः॥३०॥**

**यद्वा पत्नीत्युपलक्षणं स्त्रीमात्राधिकारे अयमर्थो बोद्धव्य इति तात्पर्य्यम्॥३१॥**

**इति दुहितृदौहित्रयोरधिकारः॥३२॥**

दौहित्राधिकारं निरूप्य कन्याधिकारे विशेषमाह यदेति। केचित्तु पुत्रिकाया विपर्य्यस्तपुत्राया अभावे तत्पितृधनं न भर्त्तुः किन्तु पितृधनाधिकारिणामित्युक्तम् अपुत्रिकायास्तथात्वे किं स्यादत आह यदेति इत्याहुः। म्रियते इति। पुत्रमनुत्पाद्येत्यादि। तस्येति। भर्त्राद्यधिकारार्थकवचनस्येत्यर्थः। आदिना पितृमातृभ्रातॄणां ग्रहणम्। उक्तार्थे भुञ्जीतेति। अधिकारे अधिकारसाधने। अयमर्थ इति। जाताधिकाराभावे अनन्तराधिकारिणामूढ़ादीनामधिकार इत्येवंरूपोऽर्थ इत्यर्थः। ननु यावद्वचनं हि वाचनिकमिति न्यायात् पत्न्यधिकार एव तथात्वम् अन्यथा तत्र पत्नीपदोपादानवैयर्थ्यापत्तिः अतः पत्नीपदस्य स्त्रीमात्रपरत्वमाह यद्वेति। पत्नीति। भुञ्जीतामरणात्। क्षान्ता इत्यत्र पत्नीपदं स्त्रीमात्रोपलक्षकमित्यर्थः। ननु किमत्र स्त्रीमात्रोपलक्षकत्वे। बीजमिति चेत् अत्रायं भावः स्त्रीसंक्रान्तधनस्य स्त्रीधनत्वाभावात् अधिकारिविशेषस्यात्र वचनादप्राप्त्या वैयर्थ्यापत्तेः आकाङ्क्षया कल्पने सादृश्यात् स्त्रीसंक्रान्तधनमात्रस्य पूर्वस्वामिदायादरुपोऽधिकारी कल्पनीय इत्येतदर्थं पत्नीपदस्य स्त्रीलक्षकत्वमिति। अथेवं पत्नीतोऽभ्यर्हितायाः पुत्रिकायाः तथा दर्शनात् पुत्रिकौरसयोः साम्यात् पुत्रादिरहितस्य औरसस्यानन्तरं तद्धनं तत्पन्त्या न स्यात् स्याच्च दायादानां दुहित्रादीनामिति चेन्मैवं पुत्रस्य जन्मनैव कृतोपकारतया तत्र तस्य स्वामित्वे निर्व्यूढ़े तदनन्तरं तदुत्तराधिकारिणां तत्पत्न्यादीनां तत्राधिकारस्य न्याय्यत्वात्, विपर्य्यस्तपुत्रायास्तु पुत्रिकाया उपकारलेशाभावात् तद्धिकारस्यैवानिर्व्यूढ़तया तदनन्तरं दायादाधिकारस्यैव न्याय्यत्वादिति।।३०-३२।।



## एकादशः अध्यायः

### तृतीयः परिच्छेदः

**दौहित्रस्याभावे पितुरधिकारो न मातुः नापि युगपन्मातापित्रोः तदभावे मातृगामीति विष्णुवचनविरोधात्॥१॥**

**यत्तु मनुवचनम्।**

**अनपत्यस्य पुत्रस्य माता दायमवाप्नुयात्।**
**मातर्य्यपि च वृत्तायां पितुर्माता हरेद्धनम्॥**

**(मनु ९।२१७)**

**यच्च बृहस्पतिवचनम्।**

**भार्य्यासुतविहीनस्य तनयस्य मृतस्य च।**
**माता रिक्थहरी ज्ञेया भ्राता वा तदनुज्ञया॥**
**तत्पितृपर्य्यन्ताभावे बोद्धव्यम्॥२॥**

दौहित्राधिकारं निरूप्य तदनन्तरं पितुरधिकारमाह दौहित्रस्याभाव इति। न मातुरिति पितुः पूर्वमिति शेषः। याज्ञवल्क्यवचने पितराविति द्वन्द्वनिर्देशात् यौगपद्याधिकारमाशङ्क्याह नापि युगपदिति। तदभाव इति। एतेन तदभावे मातृगामि तदभावे पितृगामीति रत्नाकरादिभिलिखितः पाठो वक्ष्यमाण-

विरोधात् भ्रमविजृम्भित एवेति ध्वनितम्। तत्पितृपर्य्यन्ताभाव इति, वक्ष्यमाणविष्णुवचनेन मनुवचने अपत्यपदस्य पत्न्यादेः बृहस्पतिवचने च भार्य्यापुत्रपदयोः पौत्रादेरुपलक्षकत्वस्यावश्यकत्वात् पितुरुपलक्षकत्वस्यापि युक्तत्वादिति भावः।।१-२।।

**न्यायागतञ्चैतत् दौहित्रात् परतो मातृतश्च पूर्वं पितुरधिकार इति मृतपिण्डमृतभोग्यान्यपिण्डद्वयदातुर्दौहित्रात् मृतभोग्यान्यपिण्डद्वयमात्रदातृतया पितुर्जघन्यत्वात्, मात्रादिभ्यस्तु मृतभोग्यान्यपिण्डद्वयदातृतया बीजस्य चैवं योन्याश्च बीजमुत्कृष्टमुच्यते (मनु ९।३५) इति मनुवचनावगतोत्कर्षेण च बलवत्त्वात्॥३॥**

**पितरावित्यत्र च पितृक्रम एवावगम्यते। तथाहि पितृपदात प्रातिपदिकात् प्रथमं पितुरवगतेः पश्चात्तु द्विवचनबलेनैकशेषकल्पनया मातुरवगमात्॥४॥**

**अतः क्रमज्ञानं क्रमाभिधानव्याप्तं तत् निवर्त्तमानं क्रमज्ञानं निवर्त्तयतीत्यनुमानं तदप्रमाणं व्यापकनिवृत्तेरसिद्धत्वात् विष्णुवचनविरोधाच्च॥५॥**

**इति पितुरधिकारः॥६॥**

न्यायमाह न्यायागतमित्यादि। दौहत्रात्परतोऽधिकारे हेतुमाह मृतपिण्डेति। मातृतः पूर्वमधिकारे हेतुमाह मात्रादिभ्य इति। युगपदधिकाराभावे हेत्वन्तरमाह पितरावित्यत्रेति। पितृक्रम एवेति। पितुः प्राक् प्रतिपादितत्वादिति भावः। प्राक् प्रतिपत्तिं दर्शयति तथाहीति। तथाच पितराविति पितृक्रमाभिधानपरमेव तत्प्रापकन्तु उक्तन्यायोपबृंहितविष्णुवचनमेव अतोऽत्र द्विवचनावगतसाहित्यम् अभिधानक्रियापेक्षयैव गर्गा भोज्यन्तामितिवदिति भावः। केचित्तु पितरावित्यत्र युगपदेव पित्रोरन्वयबोधः तथाच क्रमिकान्वयबोधस्य क्रमिकपदार्थस्मरणव्यापकतया प्रकृते व्यापकस्य क्रमिकान्वयबोधस्याभावे व्याप्यस्य क्रमिकपदार्थस्मरणस्याप्यभावात् युगपदेव द्वयोरुपस्थित्या युगपदेवाधिकारः पित्रोरिति वदन्ति तन्मतं दूषयति अत इति। उक्तक्रमेण क्रमिकोपस्थितेरावश्यकत्वात् इत्यर्थः। क्रमज्ञानं क्रमिकपदार्थस्मरणं क्रमाभिधानं क्रमिकान्वयबोधः तद्व्याप्तमित्यर्थः, तत्क्रमाभिधानम् इत्यनुमानमिति इति व्याप्तेर्हेतोर्यदनुमानं व्याप्याभावसाधने व्यापकाभावरूपं यत् लिङ्गं तदप्रमाणम् अर्थासाधकम्, अर्थासाधने स्वरूपासिद्धिहेतुमाह व्यापकनिवृत्तेरिति। तथाच तयोरन्वयबोधः क्रमेणैवेति भावः। ननु द्वन्द्वस्थले साहित्येन युगपदन्वयबोधो न तु क्रमिकः तथाच कथं व्यापकनिवृत्तेरसिद्धत्वमित्यत आह विष्णुवचनेति तथा चान्वयबोधस्य यौगपरिकत्वेऽपि नाधिकारी यौगपदिकः विष्णुविरोधात् किन्तु क्रमिक एव यथा पत्नीदुहितरश्चैवेत्यत्र सर्वदुहितृणामेकान्वयबोधविषयत्वेऽपि वचनान्तरबलात् कुमार्य्यादिक्रमेणाधिकार इति भावः।।३-६।।



# एकादशः अध्यायः

## चतुर्थः परिच्छेदः

**पितुरभावे मातुरधिकारः पितुरधिकारानन्तरं तदभावे मातृगामीति, विष्णुश्रुतेः॥१॥**

**युक्तञ्चैतत् गर्भधारणपोषणात् कृतोपकारतया तन्निष्क्रयस्यावश्यकर्त्तव्यत्वात् पुत्रभोग्यान्यपिण्डदजननेनाप्युपकारकत्वाच्च भ्रात्रादिभ्यः पूर्वमधिकारस्य न्याय्यत्वात्॥२॥**

**अतः पितृतो गौरवातिरेकश्रुतेः मातुरधिकारः पितृतः पूर्वमिति हेयं गौरवातिरेकस्य**

**धनसम्बन्धहेतुत्वे उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः पितेति (मनु २।१४६) पितृतः पूर्वमाचार्य्यस्याधिकारापत्तेः, कनिष्ठे च भ्रातरि भ्रातृसुते वा सत्यपि पितृव्यादीनामधिकारापत्तेश्च।।३।।**

**अतः पितृतः परत एव मातुरधिकार इति, एवञ्च मृतस्य पितृसन्तानात् पूर्वं पितुश्च परतो मातुरधिकार इति वदता पितामहसन्तानात् पूर्वं पितामहाच्च परतः पितामह्या धनाधिकारः सूचितः। अन्यथा पितरौ भ्रातरस्तथेति क्रमविरोधः स्यात्। अतएव मनुः।**

**मातर्य्यपि च वृत्तायां पितुर्माता हरेद्धनम्।**
**ससन्तानायां वृत्तायामित्यर्थः।।४।।**

**अपिशब्दचकारयोश्चोभयत्रान्वयः कार्य्यः, तेन मातरि च वृत्तायां पितामह्यपि गृह्णीयात् किं पुनर्भ्रात्रादयः पितामहपर्य्यन्ता इति, अपिशब्दसूचिताः भ्रात्रादयः।।५।।**

**तदयं वचनार्थः दौहित्रान्तात् मृतसन्तानात् परतः स्वसन्तानाच्च पूर्वम् उक्तक्रमेण पित्रोरधिकारः, अतः स्वसन्तानात् पूर्वं पितामहपितामह्योरधिकारोऽनेनैव दर्शितः अतएव याज्ञवल्क्येन मातुरधिकारप्रदर्शनेनैव पितृव्यादिभ्यः पूर्वं पितामहपितामह्योरधिकारस्याप्युक्तत्वात् न पृथगुक्तः।।६।।**

**इति मातुरधिकारः।।७।।**

पितुरनन्तरं मातुरधिकारमाह पितुरिति। अस्य न्यायमूलत्वमाह युक्तञ्चैतदिति। भ्रात्रादिभ्यः पूर्वमिति। यद्यपि भ्रातापि तद्भोग्यान्यपिण्डदः तथापि गर्भधारणाद्युपकारकत्वेन भ्रातुर्मातृसम्बन्धाधीनस्वाम्येन च प्रथमं मातुरेवाधिकार इति। गौरवातिरेकेति। सहस्रन्तु पितॄन् माता गौरवेणातिरिच्यते इत्यादिनेत्यर्थः। उपसंहरति अत इति। पितृतः परत इति भ्रात्रादिभ्यः पूर्वमित्यपि बोध्यम्। पितृसन्तानात् भ्रात्रादेः पितामहसन्तानात् पितृव्यादेः। अन्यथेति। उक्तक्रमेणाधिकाराकल्पने इत्यर्थः। क्रमविरोधः स्यादिति। ननु वाचनिक एव पितरौ भ्रातरस्तथेति क्रमः स च पितामह्याः कल्पनां विना कथमनुपपन्नः नैवं मातुः परम्परया पिण्डत्रयस्य धनिभोग्यस्य दानेऽपि साक्षात् तद्भोग्यपिण्डत्रयदातृतया श्रेष्ठात् भ्रातृतः पूर्वमधिकारो गर्भधारणाद्युपकारकत्वादेव मुनिभिरुक्तः एवं पितामह्याद्यधिकारेऽपि यदि साक्षात् तद्भोग्यपिण्डद्वयदातुः पितृव्यात् अन्यद्वारा तादृशपिण्डदायाः पितामह्या धनिपितृजननेन पितृव्यधनसम्बन्धमूलतया चाधिकोपकारकत्वेन पितृव्यं बाधित्वा धनाधिकारो न भवेत् तदोक्तरूपस्याप्रयोजकत्वात् मातृभ्रात्रोः क्रमाभिधानं मुनीनां न स्यादिति भावः। केचित्तु पितामहीपितृव्ययोः पौर्वापर्य्यं केनापि नोक्तम् अतः कल्प्यं तथाच अन्यथाकल्पने मातृभ्रातृस्थलोक्तस्य उपकाराधीनाधिकारक्रमस्य विरोधादित्याहुः। अपिशब्दसूचिता इति। व्याख्यानवाक्यस्था अपिशब्दसूचिता इत्यर्थः। एतच्च पितरौ भ्रातरस्तथा इति मातृगामीत्यभिधाय तदभावे भ्रातृगामीत्याद्येकश्रुतिमूलत्वादुक्तम्।।१-७।।



# एकादशः अध्यायः

## पञ्चमः परिच्छेदः

**मातुरभावे भ्रातुर्धनं मातृगामीत्यभिधाय तदभावे भ्रातृगामीति विष्णुवचनात् तदिति मातुः परामर्शः पितरौ भ्रातरस्तथेत्यत्रापि पित्रोरभावे भ्रातुरधिकारावगतेः।।१।।**

**न च भ्रातरस्तथा तत्सुत इति यथा भ्रातरोऽधिकृतास्तथा भ्रातृपुत्रोऽपि मातुरनन्तर-**

मधिकारी स्यादिति वाच्यं भ्रातृगामीत्यभिधाय तदभावे भ्रातृपुत्रगामीति विष्णुविरोधात् तदिति भ्रातुः परामर्शः॥२॥

न्याय्यं चैतत् मृतधनिभोग्यपित्रादित्रयपिण्डदानेन भ्रातुरुपकारकत्वात् तथा तद्देयमातामहादिपिण्डत्रयदानेन तत्स्थानपाताच्च अनेवंरूपात् भ्रातृपुत्रात् बलवत्त्वात् मातृमूलत्वाच्च भ्रातुरेवंरूपस्य मातृतो जघन्यतेति मातृतः परत एवाधिकारो युक्तः॥३॥

मातुरनन्तरं भ्रातुरधिकारं निरूपयति मातुरभाव इति। तथा भ्रातृपुत्रोऽपीति। तथाच भ्रातृतत्पुत्रयोर्युगपदधिकारः स्यादिति भावः। तत्स्थानपातादिति। धनिकार्य्यकारित्वेन धनिस्थानपातादित्यर्थः। अनेवंरूपादिति। मृतभोग्यपिण्डत्रयमृतदेयपिण्डत्रयदातृभिन्नादित्यर्थः। नन्वेवं भ्रातुर्बलवत्त्वात्, मातृतः प्रागधिकारः स्यात् अत आह मातृमूलत्वाच्चेति।।१-३।।

किञ्च तथा पदं भ्रात्रैव कुतो न सम्बध्यते तेन यथा पितरौ भ्रातरोऽपि तथेपि पित्रोर्भ्रातृणाञ्च तुल्याधिकारः स्यात्॥४॥

तस्मात् विष्णुवचनविरोधेनैवायं पर्य्यनुयोगः परिहर्त्तव्यः स चान्यत्रापि समानः। तथाच मनुः।

पिता हरेदपुत्रस्य रिक्थं भ्रातर एव वा।
भ्रातर एव हरेयु र्नतु भ्रातृपुत्रोऽधिकारीत्याह॥५॥

(मनु ९।१८५)

किञ्च जीवत्पितृकस्यापि भ्रातृपुत्रस्य किमधिकारो नेष्यते न चात्रान्यो हेतुः जीवत्पितृकस्य पिण्डदत्वाभावेनानुपकारकत्वादित्यतः एवञ्चेन्मृतपितृकस्यापि भ्रातृतुल्योपकारकत्वाभावात् कथं तुल्यवदधिकारिता।

अतएव देवलेन

ततो दायमपुत्रस्य विभजेरन् सहोदराः।
तुल्या दुहितरो वापि ध्रियमाणः पितापि वा॥
सवर्णा भ्रातरो माता भार्य्या चेति यथाक्रमम्।

इत्यनेन भार्य्यासवर्णादुहितृपितृमातृसहोदरभ्रातृसापत्नभ्रातृपर्य्यन्ताधिकारिशृङ्खलायां भ्रातृपुत्रस्याकीर्त्तनात् सापत्नभ्रातृपर्य्यन्ताभाव एव भ्रातृपुत्राणामधिकारः कथितः॥६॥

अथोपकारकत्वेऽपि भ्रातरस्तथा तत्सुत इत्यनन्यथासिद्धवचनबलात् युगपदधिकारोऽस्तु इत्यत आह किञ्चेति। अन्यत्रापि भ्रातृभ्रातृपुत्रयोरधिकारेऽपि एवञ्चेदिति। उपकारक्रमेणैवाधिकारात् उपकारतारतम्येन क्रम इतिस्थितञ्चेदित्यर्थः अतएव भ्रात्रनन्तरं भ्रातृपुत्रस्याधिकारादेव।।४-६।।

यच्च सर्वे ते तेन पुत्रेणेति (मनु ९।१८२) पुत्रत्वस्मरणं तत्पिण्डदानार्थं भ्रात्रभावे च धनाधिकारार्थं पूर्वोक्तवचनेन विरोधात् अन्यथा भ्रातृतः पूर्वमेव कुतो न स्यात्॥७॥

तस्मात् भ्रातुरेव प्रथममधिकारः॥८॥

तत्रापि प्रथमं सोदरस्यैव तदुक्तं सोदरस्य तु सोदरः, भ्रातरस्तथेत्युक्तभ्रातुरधिकारावसरे प्रथमं सोदरो गृह्णीयादित्यर्थः। तस्य त्वभावे सापत्नो भ्राता एकप्रभवत्वेन तस्यापि भ्रातृशब्दार्थत्वात्॥९॥

तथाच।

संसृष्टिनस्तु संसृष्टी सोदरस्य तु सोदरः।
दद्या च्चापहरेदंशं जातस्य च मृतस्य च।।
(याज्ञवल्क्य २।१३९)

**इदमपि याज्ञवल्क्यवचनं सोदरासोदरयोर्भ्रातृशब्दार्थत्वं दर्शयति अन्यथा सोदरमात्रस्य तदर्थत्वे सोदरस्य तु सोदर इति न पुनर्विशेषणीयमिति भ्रातृशब्दादेव सोदरावगतेः।।१०।।**

**तस्मात् पितरौ भ्रातर इत्यनेन सोदरासोदरयोरेवाधिकारो दर्शितः सोदरवचनेन तु सोदरस्य प्रथममधिकारः।।११।।**

**सापत्नस्य च सोदरात् मृतदेयषाट्पौरुषिकपिण्डदातुर्मृतभोग्यमात्रपित्रादिपिण्डत्रयदातृतया जघन्यत्वात् भ्रातृपुत्राच्च मृतभोग्यपिण्डद्वयदातुर्मृतभोग्यपिण्डत्रयदातृतया उपकारकत्वातिरेकेण बलवत्त्वात् मध्य एवाधिकारः श्रीकरविश्वरूपोक्त एवादरणीयः।।१२।।**

पूर्वोक्तेति। तदभावे भ्रातृपुत्रगामीति विष्णुवचनेनेत्यर्थः। अन्यथा पुत्रत्वातिदेशबलेनैवाधिकारे। स्यादिति। अधिकार इति शेषः। भ्रात्रधिकारे विशेषमाह तत्रापीति। प्रथमं सोदरस्याधिकारे प्रमाणमाह तदुक्तमिति। भ्रातरस्तथेत्युक्तेति। तथाचैतद्वाक्येनैव सोदरासोदरभ्रातृसामान्यस्याधिकारसिद्धौ सोदरस्य तु सोदर इति यत् पुनरभिधानं तत् सोदरक्रमेणाधिकारार्थमेव अन्यथा वैयर्थ्यं स्यादिति भावः। ननु एकमातापितृजन्यपुंस्त्वमेव भ्रातृपदशक्यतावच्छेदकं तथाच सोदर एव भ्रातृपदवाच्यः वैमात्रेयादौ च पूर्वपुरुषसमसंख्यसन्तानत्वेन रूपेण गौण एव भ्रातृपदप्रयोगः एवञ्च सति सोदराभावे भ्रातृपुत्रस्यैवाधिकारो युक्तः तदभावे भ्रातृपुत्रगामीति विष्णुवचनात् तत् कथं सोदरात् परतः सापत्नभ्रातुरधिकारं ब्रूषे इत्यत्राह एकप्रभवत्वेनेति। तथाच मातापितृत्वानिवेशेन एकशरीरजन्यपुंस्त्वमेव भ्रातृपदशक्यतावच्छेदकं लाघवादिति भावः। वैमात्रेयस्य भ्रातृपदवाच्यत्वे मुनेः स्वरसमाह तथा चेति। संसृष्टिन इति। संसृष्टिनो जातस्य संसृष्टिनोत्पन्नस्य पुत्रस्य अपरः संसृष्टी दद्यात् मृतस्य संसृष्टिनोऽशं हरेदित्यर्थः। इदमपीति। अपिना प्रागुक्तलाघवतर्कः समुच्चीयते। क्रमाधिकारे युक्तिमप्याह सापत्नस्य चेति। मध्य इति। सोदरभ्रातृतत्पुत्रयोरन्तर इत्यर्थः।।७-११।।

**तत्र किं संसृष्टिनोऽप्यसोदरस्य सोदराज्जघन्यत्वं न वेत्यपेक्षायामाह याज्ञवल्क्यः।**

**अन्योदर्य्यस्तु संसृष्टी नान्योदर्य्यो धनं हरेत्।**
**असंमृष्ट्यपि चादद्यात् संसृष्टो नान्यमातृजः।।१३।।**
**(याज्ञवल्क्य २।१४०)**

**अस्यार्थः संसृष्टी पुनरन्योदर्य्यः प्रथमं हरेत् न पुनरन्योदर्य्यमात्रः प्रथमञ्च हरन् सोदरं बाधित्वैव वा तेन सहवेत्यपेक्षायाम् उत्तरार्द्धम्, असंसृष्ट्यपि सोदरो गृह्णीयात् संसृष्टपदमेव वा सोदरमभिधत्ते अतएव बृहदयाज्ञवल्क्यवचनं सोदरो नान्यमातृज इति जितेन्द्रियेण लिखितं तथाच पूर्वार्द्धस्य संसृष्टीत्यनुवर्त्तते।।१४।।**

**तेन न केवलमन्योदर्य्य एव संसृष्टी गृह्णीयात् किन्त्वसंसृष्ट्यपि सोदरो गृह्णीयादित्यर्थः तेनासंसृष्टिना सोदरेण संसृष्टिना चासोदरेण विभज्य ग्रहीतव्यम् अतएवापि च शब्दं प्रयुक्तवान्।।१५।।**

सोदरादिति। संसृष्ट्यसंसृष्टिसाधारणोक्तिः। जघन्यत्वमिति। सोदरस्य तु सोदर इत्यनेन सोदरस्यैवाधिकारप्रतिपादनादिति भावः। नवेति। एतद्वचनस्यासोदरेण संसृष्टिना सोदरतुल्याधिकारपक्षे अजघन्यत्वकोटिः। नान्योदर्य्य इत्यस्यार्थमाह न पुनरिति। अन्योदर्य्यमात्र इति। संसृष्टसंसृष्टिसाधारण

इत्यर्थः। प्रथमम् असंसृष्टिवैमात्रेयात्। सोदरपदमिति। सोदरस्य तु सोदर इति पूर्ववचनस्थसोदर-पदमित्यर्थः। नान्यमातृज इति। तथाच पूर्वापरविरोधमयादेवकारोऽध्याहार्य्य इति भावः। अनुषङ्ग-कल्पने गौरवादाह संसृष्टपदमेव वेति। अभिधत्ते इति। गर्भसंसृष्टार्थकत्वादिति भावः। अतएव संसृष्टपदस्य सोदरार्थकत्वादेव। पूर्वार्द्धस्येति। तथाचान्यमातृजः संसृष्टः केवलो न गृह्णीयादित्यु-त्तरार्द्धार्थः। निर्गलितार्थमाह तेनेति। अपिच शब्दमिति। तयोः समुच्चयार्थकत्वादिति भावः। अत्रेदं चिन्त्यते संसृष्ट्यसोदरासंसृष्टिसोदराभ्यां विभज्य ग्रहणं न युक्तिवचनप्राचीनस्वरससिद्धं तथाहि संसृष्टित्वं विनिगमकान्तराभावे एव विनिगमकम् अन्यथा पितृव्ये संसृष्टिनि असंसृष्टिनो वैमात्रेयस्याधिकारो न स्यात् न चैतद्वचनं भ्रात्रधिकारमात्रविषयं सामान्ये बाधकाभावात् पितृव्यादिसंसर्गविषयकत्वस्य वक्ष्यमाणत्वात् वचनस्य यथोक्तरीत्या व्याख्याने च दद्यादिति क्रियानुषङ्गः नान्योदर्य्य इत्यस्य वैयर्थ्यं मात्रपदाध्याहारश्चेति दूषणानि प्राचीनाश्च श्रीकरादयो युगपद्विभागं तयोर्निषिद्धवन्त इति, तस्माद्वचनस्यायमर्थः अन्योदर्य्यः संसृष्टी चेत् तदा तस्य मृतस्य धनम् अर्थात् अपरः संसृष्टी अन्योदर्य्यो न हरेत् तदा को गृह्णीयादित्यत्राह अन्यमातृज इति असंसृष्ट्यपीति अपिना संसृष्ट्यसंसृष्टी वा सोदर एव गृह्णीयात् इत्यर्थः। अन्योदर्य्याहरणे हेतुमाह नान्यमातृज इत अन्यमातृजत्वेन षट्-पुरुषपिण्डदातुः सहोदरात् जघन्यत्वप्रतिपादनात् यतः अन्यमातृजः अतो न गृह्णीयादित्यर्थः। इत्थञ्च व्याख्याने संसृष्ट्यसोदरासंसृष्टिसोदरयोस्तुल्यवद्भागोऽयुक्त एवेति सुधीभिर्भाव्यम्।।१३-१५।।

**यच्च श्रीकरमिश्रैरुक्तं संसृष्टिस्तु संसृष्टीत्यस्य असोदरसंसृष्टिमात्रविषयत्वे अन्यानपेक्षत्वात् सोदरस्य तु सोदर इत्यस्यापि असंसृष्टसोदरमात्रविषयत्वे नैरपेक्ष्यात् असोदरे संसृष्टिनि सोदरे चासंसृष्टिनि उभयोः प्राप्तौ यदि द्वयमेव प्रवर्त्तते तदा अन्योन्यसापेक्षमुभयोर्विधायकत्वं भवेत्। न चैकस्य सापेक्षं निरपेक्षञ्च विधायकत्वमुचितं विधिवैषम्यप्रसङ्गात् यथा दर्शितं द्वयोः प्रणयन्तीत्यधिकरणे पर्वचतुष्टयविहिताया उत्तरवेदेर्न पर्वद्वये प्रतिषेध उपपद्यते तत्र पर्वद्वये विकल्पसापेक्षं विधानं पर्वद्वये च निरपेक्षमिति उत्तरवेदिविधिवैषम्यापत्तेः। तथाचात्र यत्रैव निरपेक्षविधायकत्वं तत्रैव संसृष्टिनस्तु संसृष्टीत्यस्य सोदरस्य तु सोदर इत्यस्य च प्रवृत्तिः स्यात् तत्रासोदरे संसृष्टिनि सोदरे चासंसृष्टिनि सत्युभयोरप्रवृत्तेस्तद्धनं न कश्चिदपि गृह्णीयादित्यापद्यते, तस्मात् संसृष्टिनस्तु संसृष्टीति संसृष्टधने संसृष्टिनः सामान्यतो भागप्राप्तौ तदपवादार्थं सोदरस्य तु सोदर इति वचनम् एवञ्च संसृष्टिनोऽप्यसोदरस्य सोदरे सति न प्राप्तिः किं तर्हि विभागसंसृष्टस्य असंसृष्टस्य च सोदरस्यैवेत्यन्तम्।।१६।।**

निरपेक्षञ्चेति अस्य विषयः प्रागेव दर्शितः। विधिवैषम्येति। संसृष्टीक्वचिदन्यनिरपेक्षः स्वयमेव गृह्णीयात् सोदरे असंसृष्टिनि सति तु तत्सापेक्षः तेन सहेत्यर्थ इति संसृष्टिनस्तु संसृष्टीत्यस्य विधिभेदरूपं वैषम्यम् एवं सोदरोऽसंसृष्टी क्वचिदन्यनिरपेक्षः स्वयं गृह्णीयात् सति च संसृष्टसोदरे तत्सापेक्षः तेन सहेति सोदरस्य तु सोदर इत्यस्य च विधिभेदरूपं विधिवैषम्यं तत्प्रसङ्गादित्यर्थः। विधिवैषम्ये दृष्टान्तमाह द्वयोः प्रणयन्तीति। पर्वचतुष्टयेति। चातुर्मास्ययागप्रसङ्गे वैश्वदेववरुण-प्रघासशाकमेधसुनासीर्य्याख्याश्चत्वारो यागाः चतुर्माससाध्या उक्ताः तत्र च उपात्रवपन्ति न वैश्वदेवे उत्तरवेदिमुपकिरन्ति न सुनासीर्य्ये उरू वा एतौ यज्ञस्य यद्वरुणप्रघासः शाकमेधश्चेति द्वयोः प्रणयन्तीति श्रुतिरस्ति। अस्यार्थः अत्र पर्वसंज्ञके यागचतुष्के उत्तरवेदिम् उपवपन्ति निर्वपन्ति सम्पादयन्तीत्यर्थः उत्तरवेदिश्च अग्निप्रणयनोपयोगिपात्रविशेषः अत्र उत्तरवेदेः पर्वत्वेन यागचतुष्टये सामान्यविधिः अत्र प्रकृतीभूतदर्शपौर्णमासीयस्य अग्निप्रणयनस्यातिदेशादेव प्राप्तेस्तदंशे न विधिः किन्तु तदर्थम् उत्तरवेदिमात्रं विधीयते इत्थञ्च द्वयोः प्रणयन्तीत्यादि न्यायावगतमेवोक्तम् अग्नि-

प्रणयनार्थकोत्तरवेदेर्यागद्वये विधाने अग्निप्रणयनस्यापि यागद्वयीयत्वस्य सिद्धत्वादिति न वैश्वदेवे न सुनासीर्य्ये उत्तरवेदिमुपकिरन्ति यत्र यागद्वये वैश्वदेवत्वादिना विशेषविधिद्वयं यागद्वय एवाग्निप्रणयनस्य वास्तविकत्वात् तद्धेतुभूतं यागद्वयप्राशस्त्यमाह उरू वेति। महान्तावित्यर्थः। यज्ञस्य यज्ञानां मध्ये अतो द्वयोः प्रणयन्ति अग्निमिति शेषः अत्र विशेषविधिद्वयस्य निषेधविधेः सामान्यविध्युपजीवकतया उपजीव्यबाधायोगात् सामान्यविधेरपि निषिध्यमानयागद्वये प्रवृतौ सामान्यविधेर्निरपेक्षविधायकत्वं शाकमेधादियागद्वये विकल्पसापेक्षविधायकत्वञ्च वैश्वदेवादियागद्वये तथाच शाकमेधादिद्वये सदैवोत्तर-वेदि वपन्ति वैश्वदेवादिद्वये त्विच्छया वपन्तीति विधिभेदरूपं वैषम्यं स्यात् तस्मादत्र पर्य्युदासलक्षणया वैश्वदेवमुनासीर्य्यभिन्ने पर्वाख्ययागे उत्तरवेदिं वपन्तीत्येक एव विधिरिति द्वयोः प्रणयन्तीत्यधि-करणे यथा विधिवैषम्यमुक्तं तथा प्रकृतेऽपीति पूर्वेणान्वयः। यत्रैवेति। सोदरासत्त्वस्थले असोदर संसृष्टसत्त्वस्थले च संसृष्टिनस्तु संसृष्टीत्येतयोर्निरपेक्षविधायकत्वं बोध्यम्। उभयोः संसृष्टिनस्तु संसृष्टीति सोदरस्य तु सोदर इत्येतयोः। आपद्येतेति। विशेषवचनाभावादिति शेषः। इत्थं निरेपेक्षसापेक्षविधानेन दोषमुपन्यस्य स्वयं विधिद्वयम् उत्सर्गापवादभेदेन व्यवस्थापयति तस्मादिति। असंसृष्टस्य चेति। तस्यापि सोदरपदार्थत्वेनापवाद विषयत्वादिति भावः। इत्यन्तमिति श्रीकरमिश्रैरुक्त-मिति पूर्वेणान्वयः।।१६।।

**तदसङ्गतं न हि द्वयोरुभयत्रैकैकशः प्रवृत्तयोर्युगपदेकत्र प्रवृत्तिमात्रेण विधिवै-रूप्यम्।।१७।।**

**केवलोद्गातृप्रतिस्तोत्रपच्छेदेन निरपेक्षप्रवृत्तयोः सर्वस्वदाक्षिण्यादाक्षिण्य शास्त्रयोर्युगपद-भयापच्छेदे सति नैकमपि शास्त्रं प्रवर्त्तेत विधिवैरूप्यात्।।१८।।**

**तथा चातुर्होत्रां पौर्णमासीमभिमृषेत् पञ्चहोत्राममावास्यामिति शास्त्रयोरुपांशुयागाग्नीषोमीय-योरैन्द्रदध्यैन्द्रपयसोरेकैकशः प्रवृत्तयोर्द्वयोराग्नेये प्रवृत्तौ विधिवैषम्यापत्तेर्नैकमपि प्रवर्त्तेत।।१९।।**

न हीति। द्वयोर्विध्योः उभयत्र उदाहरणद्वये एकैकशः प्रवृत्तयोः परस्परनैरपेक्षेण प्रवृत्तयोः। विधिवैरूप्यमिति। सापेक्षनिरपेक्षौदासीन्येन संसृष्टिनस्त्वित्यादिना संसृष्टिमात्राधिकारविधाने सोदरस्य त्वित्यादिना सोदरमात्राधिकारविधाने च परस्परापेक्षा नास्ति युगपदुपस्थितौ तु उभयोरेव विषयत्वात् उभयोरेव युगपत्प्रवृत्तिरिति न वाक्ययोर्भवदुक्तरीत्या प्रत्येकं विधिभेदरूपं विधिवैषम्यमिति भावः। अत्र प्रतिबन्धिमाह केवलोद्गात्रिति। ज्योतिष्टोमे हविर्धानी नाम गृहमेकम् अपरञ्च हविष्पवमानाख्यं तत्र च यथोक्तक्रमेण हविर्धानीगृहात् ऋत्विजो हविष्पवमानाख्यं गृहं गच्छन्ति गच्छताञ्च मध्ये उद्गाता ऋत्विक् यदि स्खलति तदा सर्वस्वदक्षिणाविधिः यदि प्रतिस्तोता ऋत्विक् स्खलति तत्र असर्वस्व-दक्षिणाविधिश्चेति विधिद्वयमस्ति एतयोश्चैकैकस्य स्खलनस्थले एकैकशः प्रवृत्तत्वात् युगपत्स्खलने नैकस्यापि प्रवृत्तिः स्यात् भवन्मते विधिवैरूप्यात्, तथाचात्र प्रथमतः प्रतिस्तोत्रे असर्वस्वं किञ्चिद्दक्षिणां दत्त्वा उद्गात्रे सर्वस्वं दक्षिणा दीयते इति युक्तिसिद्धः पारम्परीणः सिद्धान्तो भवन्मते व्याहतः स्यादिति भावः। अपच्छेदेनेति। स्खलनेनेत्यर्थः। अत्रैव प्रतिबन्ध्यन्तरमाह तथेति। अयमर्थः दर्शपौर्ण-मासे यागे श्रूयते चतुर्होत्रां पौर्णमासीमभिमृषेत् पञ्चहोत्राममावास्यामिति अत्र चतुर्होत्रपदेन पृथिवी होत्रेत्याकारको मन्त्र उच्यते तस्य यत्र विनियोगः तच्चातुर्होत्रां पौणमासीमिति सप्तम्यर्थे द्वितीया तेन पौर्णमास्यामित्यर्थः। चातुर्होत्रामिति परिभाषा प्राप्तपृथिवीहोत्रेत्यादिमन्त्रस्य करणताप्राप्तये ततश्च पौर्णमास्यां पृथिवीहोत्रेति मन्त्रेणाभिमृषेत् स्पृशेदिति विधिप्राप्तौ किमिति स्पर्शकर्माकाङ्क्षायां वाक्यान्त-रोपस्थितानि ऐन्द्रदध्यादीनि हवींष्येव कर्मतयाऽन्वीयन्ते। चूड़ामणिस्तु पौर्णमासीपदेन कर्माभिधीयते

कर्मणस्तु स्पर्शाभावात् तत्कालीनं मुख्यं हविरेवोपांशुयागीयम् ऐन्द्रदधिरूपं प्रत्याय्यते, एवमग्निमवाक्येऽपि अभावा-स्यापदेनापि तदानीं कर्त्तव्यस्याग्नीषोमीयस्य पयोरूपं मुख्यं हविः प्रत्याय्यत इति व्याचष्टे। एष च विधिर्दर्शपौर्णमासान्तर्गतपौर्णमासीकर्त्तव्यस्योपांशुयागस्य केवल-दधिरूपहविःस्पर्शने विध्यन्तरनिरपेक्षप्रवृत्तिः उपांशुयागस्य केवलदधिकरणकत्वात् तथा पञ्चहोत्राममा-वास्यामित्यत्र पञ्चहोत्रपदेन अग्निहोत्रेत्यादिको मन्त्र उच्यते तस्य यत्र विनियोगः तत् पञ्चहोत्राम् अमावास्यामित्यच सप्तम्यर्थे द्वितीया पञ्चहोत्रामिति च तन्मन्त्रस्य करणत्वलाभाय तेनामावास्यायाम् अभिमृषेदिति विधिः अत्रापि कर्माकाङ्क्षायां पूर्वोक्तानि हवीष्येवान्वीयन्ते अयञ्च विधिः दर्शपौर्ण-मासान्तर्गततस्य दर्शकर्त्तव्यस्य अग्नीषोमीययागस्य केवलैन्द्रपयोरुपद्रव्यस्पर्शे निरपेक्षप्रवृत्तः अग्नी-षोमीयस्य केवलपयोद्रव्यकरणकत्वात् आग्नेये च दर्शपौर्णमासानतर्गते दर्शे पौर्णमास्याञ्च कर्त्तव्ये दधिपयोरूपोभयद्रव्यकं हविर्द्वयस्पर्शार्थं विध्योर्युगपत्प्रवृत्तौ भवन्मते विधिवैषम्यापातात् न कोऽपि प्रवर्त्तेत तथाचात्र द्वयोरेव विषयसत्त्वात् प्रवृत्त्या मन्त्रद्वयेन हविद्वयस्य दधिपयोरूपस्य स्पर्श इति सिद्धान्तोऽपि भवन्मते व्याहत इति। इदञ्च न सम्यक् युगपत्प्रवृत्तावपि सामान्यविध्योर्बाधाभावात् तद्रूपविधिवैरूप्याप्रसक्तेः अतः प्रागुक्तप्रतिबन्धिमात्रं साधीय इति धीमद्भिर्विभावनीयम्।।१७-१९।।

**तस्मात् बाधनिरपेक्षं नित्यवद्विधानं क्वचित् क्वचित् विध्यन्तरबाधसापेक्षमिति वैरूप्य-लक्षणम्। तथाहि उपात्र वपन्तीति वेदिविधिसापेक्षो निषेधः तद्बाधं विना विधिरेव न स्यादिति वेदिविधिबाधसापेक्षं विधानं न च नित्यवदेव तस्य बाधः तथा सति निषेधो विफलः निषेधं विनापि वेद्यकरणस्य प्राप्तेः ततश्च वेदिविधिरपि निषेधविधिबाधसापेक्षविधिभावः पर्वद्वये पर्वद्वये तु निरपेक्ष इति भवति विधिवैषम्यं विकल्पश्च स्यात् रागप्राप्ते तु नित्यवद्बाधः कादाचित्कस्या करणस्य निषेधमन्तरेणापि प्राप्तेः॥२०॥**

**अतएव षोड़शिग्रहणाग्रहणशास्त्रयोर्विकल्पः॥२१॥**

अथैवं विधिवैषम्यलक्षणं किमित्याकाङ्क्षायामाह तस्मादिति। उपात्रेति। उपात्र वपन्तीति यो वेदिविधिः तत्सापेक्ष इत्यर्थः। तद्बाधं विनेति। वेदिविधिबाधं विनेत्यर्थः। विधिरेव न स्यादिति। सामान्यविधेर्वैश्वदेवादियागद्वयाविषयकत्वे तत्र विध्यभावादेव वेद्यकरणस्य प्राप्तत्वात् निषेधविधेरप्राप्त-प्रापकत्वाभावेन विधिर्न स्यादित्यर्थः। इतीति हेतौ, यतो निषिध्यमानयागयोरपि सामान्यविधि-विषयत्वेन तद्बाधेनैव वैकल्पिकस्य निषेधस्य प्रवृत्तिः अत इत्यर्थः। ननु निषेधविधेर्विशेषत्वेन बल-वत्त्वात् सर्वदैव सामान्यविधिमुन्मूलयेत तथाच सामान्यविधेस्तत्राप्रवृत्त्या कथं तद्बाधेन वैकल्पिक-निषेधविधानमित्याशङ्क्यते न चेति। तस्य सामान्यविधेः। विफल इति। नित्यवदेव बाधे समान्य-विधेस्तदितरविषयत्वमेव वाच्यम् अन्यथा तदंशे तद्विधेरननुष्ठानलक्षणाप्रामाण्यापत्तिः तथाच विध्य-भावादेव निषेधस्य सिद्धत्वात् निषेधविधिर्विफलः स्यादित्यर्थः। एतदेवोक्तं निषेधं विनापीति। वेद्यकरणस्येति। ततश्चेति। सामान्यविधेर्निषिध्यमानयागद्वयविषयकत्वाच्चेत्यर्थः। निषेधविधिबाधेति। विरोधेन निषेधविधिबाधं विना सामान्यस्य प्रवृत्त्यसम्भवादिति भावः। विधिवैषम्यमिति। एकस्यैव वेदिविधेः पर्वद्वये नित्यवद्विधायकत्वं पर्वद्वये च निषेधबाधसापेक्षविधायकत्वमिति विधिवैषम्यमित्यर्थः। विकल्पश्चेति। निषेधाङ्गीकारे निषिध्यमानयागद्वये वेदिकरणाकरणयोर्विकल्पश्चेत्यर्थः। अयञ्च विकल्पो न व्यवस्थितः तादृशविकल्पस्थले करणे फलाधिक्यात् अधिकफलकामरूपस्याधिकारिणो भेदात् किन्त्वैच्छिकः तथाचाष्टदोषापातो वाक्यभेदश्चेति गौरवम् अतो लाघवात् पर्य्युदासलक्षणया वैश्वदेवादिभिन्ने पर्वाख्ययागे उत्तरवेदिं वपन्तीत्येक एव विधिः कल्पयत इति भावः। नन्वेवं न कलञ्जं

भक्षयेदित्यादौ रागप्राप्तनिषेधे विकल्पः स्यात् रागस्योपजीव्यत्वेन निषेधेन नित्यवद्बाधायोगादत आह रागप्राप्ते त्विति। केचितु कलञ्जेतरभोजनकलञ्जभोजनेतरयो रागप्राप्तत्वेन कलञ्जातिरिक्तं भुञ्जीत कलञ्जभोजनेतरत् कुर्वीतेति पर्य्युदासासम्भवात् निषेधे विकल्प एवेति भ्रमनिरासार्थमाह रागप्राप्ते त्वितीत्याहुः। कादाचित्कस्याकरणस्येति। न हि निषिध्यमानमनुतिष्ठन् यावज्जीवमहर्निशं तदनुतिष्ठति निषिद्धानुष्ठानस्य रागाधीनत्वेन रागस्यानियतत्वात् सहकार्य्यन्तरविलम्बाच्चेति भावः। तथात्र निषेधविधेर्वैयर्थ्यापत्त्या न विकल्पः किन्तु नित्यवद्बाध एवेति भावः। अतएवेति। अत एव सामान्यविशेषयोरेव विधिनिषेधयोः क्वचिदेकत्र प्रवृत्तौ सामान्यविधेवैरूप्यं न त्वेकविशेषनिष्ठयोस्तयोः अत एवेत्यर्थः। षोड़शीति। तथाच श्रुतिः अतिरात्रे षोड़शिनं गृह्णातीति नातिरात्रे षोड़शिनं गृह्णातीति। अतिरात्राख्यो यागविशेषः षोड़शीपात्रविशेषः गृह्णातीति लिङर्थे लट् अत्र विधिनिषेधयोर्द्वयोरेवातिरात्राख्ययागरूपविशेषनिष्ठत्वेन विधेः क्वचिन्नित्यवद्विधायकत्वाभावेन विधिवैरूप्याभावात् निषेधविषयकत्वाभावेन पूर्वोक्तन्यायेन पर्य्युदासासम्भवाच्च विकल्प इत्यर्थः अत एवोक्तम् एवमेवाष्टदोषोऽपि यद्व्रीहियववाक्ययोः। विकल्पः संश्रितस्तत्र गतिरन्या न विद्यते इति, अन्या गतिः पर्य्युदासरूपा गतिः।।२०-२१।।

**ये तु ब्रुवते प्राप्तिपूर्वकत्वात् निषेधस्य न निमित्तं विधिरपबाधत इति न्यायेन विकल्प इति तेषां मते न तौ पशौ करोतीत्यादौ रागप्राप्तनिषेधे च विकल्पः स्यात्।।२२।।**

**किञ्च एवं निमित्तिनः स्वनिमित्तबाधाक्षमत्वात् कथं पक्षेऽपि बाधः अतुल्यबलत्वात् अथ निषेधस्यैवायं स्वभावः यत् स्वनिमित्तमुन्मूलयतीति तदा सर्वदैवोन्मूलयेत् प्राप्तेरेव दुर्बलत्वात्।।२३।।**

विकल्पः स्यादिति। रागातिदेशयोरपि निमित्तत्वाविशेषादिति भावः। ननु प्रमाणयोस्तुल्यबलत्वे हि विकल्पः अतएव गौतमोऽपि तुल्यबलविरोधे विकल्प इत्याह स्म, तथाच षोड़शिग्रहणाग्रहणशास्त्रयोर्द्वयोरेव वैदिकप्रमाणत्वाविशेषात् तुल्यबलतया विनिगमनाविरहेणैकेनाप्यपरस्य नित्यवद्बाधायोगात् पक्षतो बाधेन विकल्पो युक्तः इह तु रागस्य शास्त्रात् दुर्बलतया विकल्पासम्भवात् निषेधेन नित्यवद्बाधः। एवमतिदेशस्यापि सामान्यविधितया विषयान्तरे चरितार्थत्वेन पर्य्युदाससम्भवात् तुल्यबलत्वाभावेन नित्यवद्बाध एवेति कथं विकल्पापत्तिरत आह किञ्चेति। प्राप्तेरिति। प्रापकविधेरित्यर्थः।।२२-२३।।

**ये तु ब्रुवते यादृच्छिकग्रहणप्राप्तिनिषेधोऽयं न तु विधितः प्राप्तस्येति तदतीवाज्ञवचनं वैधग्रहणस्य अवैधग्रहणनिषेधस्य च युगपदुपसंहारासम्भवात् विकल्पाभावप्रसक्तेः क्रत्वर्थतया च यादृच्छिकग्रहणप्रसक्त्यभावात् निषेधो न क्रत्वर्थः स्यात्।।२४।।**

**तस्मादस्मदुक्तन्यायादेव विकल्पः तदस्तु किं विस्तरेण।।२५।।**

परमतनिराकरणायाह ये त्विति। यादृच्छिकेति। स्वारसिकीच्छा या सा यदृच्छा राग इति यावत् तया प्राप्तं यद्ग्रहणं तद्विषयोऽयं निषेध इत्यर्थः। प्राप्तीत्यस्य कृद्विहितभावत्वेन प्राप्तार्थमाह न त्विति। तथाच वैधग्रहणं नित्यमैवेत्याशयः। युगपदिति। यौगपद्ये उपसंहारस्य विरोधस्यासम्भवादित्यर्थः। उपसंहारसम्भवादिति पाठे युगपदेकदा उपसंहारस्य एकत्रावस्थानस्य सम्भवादित्यर्थः। विकल्पाभावेति। तथाच विरुद्धयोरेव भावाभावयोर्विकल्पत्वम् इह तु वैधग्रहणावैधग्रहणनिषेधयोरविरोधात् विकल्पाभावप्रसक्तेरित्यर्थः। ननु विकल्पो न श्रौतः किन्तु कल्प्यः अस्य चाष्टदोषग्रस्ततया गत्यन्तराभाव एव कल्पना प्रकृते तु वैधेतरग्रहणनिषेधरूपगत्यन्तरसत्त्वात् कथं तत्कल्पनम् अतो

विकल्पाभावे इष्टापत्तिरेवेत्यत आह क्रत्वर्थतया चेति। क्रत्वङ्गतया चेत्यर्थः। न क्रत्वर्थः स्यादिति। ननु क्रत्वङ्गतया प्राप्तस्य प्रतियोगिनो निषेधस्यैव क्रत्वङ्गत्वमिति नियमे प्रमाणाभावः यागानङ्गस्यामिषभोजनस्य निषेधे यागाङ्गव्यभिचारश्चेति कथं यादृच्छिकग्रहणनिषेधस्याक्रत्वर्थत्वापत्तिरिति चेत् व्याप्तिबलेन नाक्रत्वर्थत्वापादनं किन्त्वेवं वाक्यार्थः क्रत्वर्थतया यादृच्छिकग्रहणस्य प्रसक्त्यभावात् उपस्थित्यभावात्, तथाच निषेधविधिना प्रकरणोपस्थित वैधग्रहणस्य निषेध एव प्रत्याय्यते न त्वनुपस्थिता वैधग्रहणस्य एवञ्च सति वैधग्रहणनिषेधो न क्रत्वर्थः स्यादिति न च षोड़शिग्रहणत्वेन वैधावैधग्रहणसाधारणेन रूपेणैव प्रकरणात् उपस्थितिः न तु वैधग्रहणत्वेन तथाच यादृच्छिकग्रहणमप्युपस्थितमेवेति वाच्यं तथापि भवदुक्तावैधग्रहणनिषेधस्य क्रत्वर्थत्वानुपपत्तेः ग्रहणसामान्याभावस्यैवाङ्गताया विधिप्रतिपाद्यत्वात् एवञ्च सति विरोधात् विकल्प एवेति हृदयम्। केचित्तु क्रत्वर्थतयेत्यादिग्रन्थम् अन्यथा योजयन्ति तथाहि नातिरात्र इति वाक्येन ग्रहणस्याङ्गत्वाभावो ग्रहणाभावस्याङ्गत्वं पुरुषार्थत्वं वा प्रत्याय्यते आद्ये क्रत्वर्थतयेति निषेधो निषेधविधिर्न क्रत्वर्थः न क्रतुविषयः, द्वितीये सन्निहितवैधग्रहणमपहायासन्निहितावैधग्रहणविषयत्वकल्पने गौरवं स्यात्, तृतीये प्रकरणविरोध इति तदसत् अस्मदुक्तक्रमेणैव यथाश्रुतार्थनिर्वाहे आशयकल्पनानौचित्यात्। तस्मादिति। यस्माद्भवदुक्तं न युक्तं तस्मादित्यर्थः। अस्मदुक्तन्यायात् नित्यनिषेधे विधिनिषेधोमयवैयर्थ्यं नित्यविधौ च निषेधवैयर्थ्यं स्यादित्येवंरूपात्। एवकारस्य भिन्नयोजनया विकल्प एवेत्यर्थः न तु भवदुक्तसमुच्चय इत्यर्थः। तदस्तु उक्तमते दूषणान्तरं मतान्तरस्य दूषणमन्यदनिबद्धमेव तिष्ठतु किं विस्तरेण ग्रन्थबाहुल्येन तथाच ग्रन्थगौरवभयात् उक्तार्थे दूषणान्तरं तद्दूषणञ्च नोपनिबद्धमिति भावः।।२४-२५।।

**यच्च स्वयमेव वर्णितम् असोदरे संसृष्टिनि सोदरे चासंसृष्टिनि संसृष्टिनस्तु संसृष्टीत्यनेन असोदरस्य धनसम्बन्धप्राप्तौ तदपवादार्थं सोदरस्य तु सोदर इति वचनं तदप्ययुक्तम् अस्मिन्नेव विषये सोदरस्य तु सोदर इति सोदरस्य धनसम्बन्धप्रसक्तौ तदपवादार्थं संसृष्टिवचनस्यापि सम्भवात् विनिगमनाकारणाभावात्।।२६।।**

**यच्च संसृष्टिनस्तु संसृष्टीत्येतद्विवरणार्थत्वेन अन्योदर्य्य इति वचनं व्याख्यातं तदप्यतीवायुक्तम् अन्योदर्य्यवचनादेव विवक्षितार्थलाभात् संसृष्टिनस्त्वित्यस्यानर्थक्यापत्तेः।।२७।।**

**किञ्च अन्योदर्य्यस्तु संसृष्टीत्यस्यायमर्थः अन्योदर्य्यस्तु संसृष्टी यः स नान्योदर्य्यधनं हरेत् किन्त्वसंसृष्ट्यपि सोदरपदानुषङ्गात् सोदर एव गृह्णीयात् संसृष्टोऽपि नान्यमातृजो गृह्णीयादिति व्याख्यातं तदपि न पूर्वार्द्धे एकस्य अन्योदर्य्यपदस्य पुनरुक्तत्वात् तथोत्तरार्द्धेऽपि नान्यमातृज इत्यस्यानर्थक्यापत्तेः अपिशब्दस्य चैवकारार्थेऽवर्णनात्।।२८।।**

श्रीकरमतदूषणस्यैव प्रकृतत्वात् संसृष्टिनस्त्विति सोदरस्य त्विति वचनयोस्तद्व्याख्यानमनूद्य दूषयति यच्चेति। वर्णनमेवाह असोदर इति। इत्यनेन वचनेन असोदरस्य संसृष्टिनोऽसोदरस्य धनसम्बन्धप्राप्तौ। धनाधिकारप्राप्तौ तदपवादार्थं तद्बाधार्थम्। विनिगमनेति। एकतरपक्षपातिनी युक्तिर्विनिगमना तद्रूपकारणाभावादित्यर्थः। अन्योदर्य्यः संसृष्टी यः सः अन्योदर्य्यधनं न हरेत् सोदरे सतीत्युत्तरार्द्धस्वरसाल्लभ्यते तर्हि को गृह्णीयादित्यत्राह असंसृष्ट्यपीति अपिरेवार्थो भिन्नक्रमेण योजनीयः तेनासंसृष्टी सोदर एव गृह्णीयादित्यर्थः किं पुनः संसृष्टी सोदर इति कैमुतिकन्यायसिद्धाधिकारोऽपि संसृष्टी सोदरः चकारेण समुच्चीयते इति। पूर्ववचने यत् सोदरस्य संसृष्ट्यसोदरापवादकत्वमुक्तं तदेव द्वितीयवचनेन विवृतमिति यदुक्तं तदपि दूषयितुमुपन्यस्यति यच्चेति। आनर्थक्यापत्तेरिति। विवरणवचनादेव उक्तार्थलाभे विव्रियमाणवचनवैयर्थ्यादिति भावः। वक्ष्यमाण-

दूषणान्तरं स्पष्टयितुं तदुक्तविवरणं दर्शयति किञ्चेति। तथाच वचनयोरेकार्थपर्य्यवसाने विनिगमना-विरहात् नैकतरवैयर्थ्यम् अतएवोक्तं सम्भेदेनान्यतरवैयर्थ्यम्। इति हेतोः। अयं वक्ष्यमाणोऽर्थः श्रीकरोक्त इति शेषः। पुनरुक्तत्वादिति। अन्योदर्य्यः संसृष्टी न गृह्णीयादित्यनेनैव प्रकृतार्थसिद्धौ अन्योदर्य्यपदान्तरस्य व्यर्थत्वादित्यर्थः।।२६-२८।।

**किञ्च सोदरे चासंसृष्टिनि असोदरस्य संसृष्टिनोऽपवादार्थं सोदरवचनस्य वर्णितत्वात् सोदरासोदरयोरसंसृष्टिनोरप्रवृत्तत्वात् तुल्यवदेवाधिकारः स्यात् न वा कस्यचिदपि स्यात्।।२९।।**

**अथात्रापि सोरवचनमेव प्रवर्त्तते तदैकत्र संसृष्टिवचनवाधसापेक्षम् अन्यत्र तु वाधानपेक्षमिति भवतामेव विधिवैरूप्यं यथा सोमे विधीयमाना वेदिः दीक्षणीयादिष्वतिदेशप्राप्तवेदिविधिवाधेन अन्यत्र बाधं विनैवेति वैरूप्यात् अवेदिमतां तद्रष्टव्यमित्युक्तम्।।३०।।**

ननु सर्वमिदं भवदुक्तदूषणमकिञ्चित्करं तथाहि सोदरवचनस्यैवापवादकत्वं सोदरस्याधिकोप-कारकत्वेन न्यायसिद्धं न तु संसृष्टिवचनस्य न्यायाभावात् अन्योदर्य्य इति न्यायमातृज इत्यनयोर्भव-दुक्तव्याख्यानेऽप्यविशेषात् अपिशब्दस्य अव्ययानामनेकार्थत्वेन एवकारार्थेऽपि वर्त्तनात् अतएव सविवादा सदा भूमिः पौरुषेणापि भुज्यते इत्यत्र अपिरेवार्थो दृष्ट इत्यत आह किञ्चेति अप्रवृत्तत्वादिति। अपवादस्य उत्सर्गविषयेऽप्रवृत्तत्वादिति भावः। तुल्यवदिति। विशेषकाभावात् भ्रातर इति सामान्य-वाक्येन भ्रातृत्वाविशेषात् द्वयोरेव युगपदधिकारः स्यादित्यर्थः। न वा कस्यचिदिति। भ्रात्रधिकार-बोधकसामान्यवचनस्य संसृष्टादिविशेषविषयकतया उपसंहतत्वादिति भावः। अथेति सोदरवचने सोदरपदस्य संसृष्ट्यसंसृष्टिसाधारणसोदरपरत्वेनात्रापि सोदरवचनं प्रवर्त्तत इत्यर्थः। एकत्र संसृष्ट्य-सोदरासंसृष्टिसोदरस्थले अन्यत्र सोदरासोदरयोरसंसृष्टिनोरित्युक्तस्थले सोदरवचनस्य सोदरत्व-पुरस्कारेणासोदरमात्रवाधसापेक्षत्वेन संसृष्टिनोऽप्यसोदरस्य बाधसापेक्षत्वावश्यकत्वादिति भावः। यथेति अत्रायमर्थः पौर्णमासयागे प्रकृतौ वेदिर्विहिता सा चातिदेशात् तद्विकृतिभूतदीक्षणीयेष्टौ प्राप्ता वाक्यान्तरे च सामान्यतः सोमद्रव्यकयागे वेदिर्विहिता तत्र दीक्षणीयेष्टेरपि सोमद्रव्यकतया यदि सामान्यवचनं तत्र प्रवर्त्तते तदा अतिदेशविधिबाधेनैव प्रवर्त्तते अन्यथा प्राप्तत्वात् विधित्वानुपपत्तेः पौर्णमास-विकृतिभिन्ने सोमद्रव्यकयागान्तरे त्वतिदेशाभावात् तदबाधेनेति विधिवैषम्यात् अवेदिमतां वाक्यान्तर-प्राप्तवेदिकभिन्नानां यागानां तत्सामान्यवेदिविधानं द्रष्टव्यमिति तत्रोक्तं विधिवैषम्यं यथा तथा प्रकृतेऽपीति।।२९-३०।।

**अस्मन्मते तु श्रीकरसम्मतमपि विधिवैरूप्यं नास्ति संसृष्टिसोदरवचनयोरेकैकविषयत्वात् अन्योदर्य्यवचनस्य च सोदरस्यासंसृष्टिनः संसृष्टिनश्चासोदरस्य तुल्यवदधिकारज्ञापनार्थत्वात् तथाहि अन्योदर्य्यस्तु संसृष्टी सन् सत्यपि सोदरेऽसंसृष्टिनि धनं हरेत् नान्योदर्य्योऽसंसृष्ट्यपि गृह्णीयादिति पूर्वार्द्धस्यार्थः तत्र किं सोदरस्तदानीं न गृह्णीयादित्यपेक्षायाम् उत्तरार्द्धेनोत्तरम्। असंसृष्ट्यपि चादद्यात् सोदर इत्यनुषज्यते संसृष्टोऽन्यमातृज एव न केवलः किन्तूभाभ्यां विभज्य ग्रहीतव्यमित्यर्थः अतो विधिवैषम्यमपि परिहृतम्।।३१।।**

**तथा मनुरप्येतदेव दर्शयति। सोदर्य्या विभजेयुस्तं समेत्य सहिताः समम्। भ्रातरो ये च संसृष्टा भगिन्यश्च सनाभयः।।३२।।**

**सोदर्य्यमात्राणां सोदर्य्या इति असोदराणाञ्च संसृष्टानां संसृष्टा इति बहुवचनान्तर-स्वपदादेवेतरेतरयोगावगतेः समेत्य सहिता इतिपदम् उभयसाहित्यार्थमेव युक्तम् अन्यथान-**

**र्थक्यात्। अत उभयोरितरेतयोगस्याश्रवणादिति अहृदयव्याहतम्। किञ्च ये चेति चकारश्रुतेः चार्थे द्वन्द्वसमासस्यापि श्रवणात् इतरेतरयोगस्याश्रवणाभिधानं द्वन्द्वस्याप्यतदर्थतामापादयति।।३३।।**

**तस्मात् सोदरासोदरमात्रसद्भावे सोदराणामेव। अतएव बृहन्मनुः।**

**एकोदरे जीवति तु सापत्नो न लभेद्धनम्।**
**स्थावरेऽप्येवमेव स्यात् तदभावे लभेत वै।।**

**स्यावरेऽप्येवमेवेति विभक्तस्थावराभिप्रायेण यस्मादनन्तरमेवाह यमः।**

**अविभक्तं स्थावरं यत् सर्वेषामेव तद्भवेत्।**
**विभक्तं स्थावरं ग्राह्यं नान्योदर्य्यैः कथञ्चन।।३५।।**

**सर्वेषां सोदरासोदराणामित्यर्थः। सोदराणामेव मध्ये एकस्य संसृष्टत्वे तस्यैव, असंसृष्टि सोदरासोदरसंसृष्टिसद्भावे च द्वयोरेव सापत्नमात्रसद्भावेऽपि प्रथमं संसृष्टिनः तदभावे वासंसृष्टिनोऽसोदरस्य मृतधनं प्रत्येतव्यम्।।३६।।**

**अतएव उक्तक्रमेण बहूनामधिकारप्रतिपत्त्यर्थं भ्रातर इति बहुवचनमुक्तम् अन्यथानर्थकं भवेत्।।३७।।**

प्रौढ़्याह अस्मन्मते त्विति। श्रीकरेति। वस्तुतस्तु विधिवैरूप्यमेव न भवतीति भावः। अन्योदर्य्यवचनस्य तुल्यवदधिकारज्ञापकत्वं यथा तथा व्याकरोति तथाहीति। नान्योदर्य्य इति। एतेनैकतरस्यान्योदर्य्यवचनस्य वैयर्थमपि परिहृतम्। असंसृष्ट्यपीति। तथा चैकस्यैवासंसृष्टिपदस्य काकाक्षिन्यायादुभयवान्वय इति भावः। केवल इति। तथाच संसृष्ट्यन्योदर्य्यसोदरयोर्य्यवस्थित-विकल्पेनाधिकारभ्रमनिरासाय तुल्यवदधिकारप्रापकं नान्यमातृजवचनमपि सार्थकमिति भावः। स्वोक्तव्याख्याने मनुसंवादमाह तथेति। तुल्यरूपाणां सोदरासोदराणां मध्ये सोदरा एव सहिता विभजेरन् संसृष्टासंसृष्टतुल्यरूपाणां मध्ये संसृष्टाः सहिता विभजेरन् इति वचनार्थमाशङ्क्याह सोदर्य्यमात्राणामिति। इतरेतरयोगावगतेः सोदरमात्राणां संसृष्टमात्राणाञ्च परस्परसाहित्यार्थमिति। सोदरसंसृष्ट्यसोदरसाहित्यार्थमित्यर्थः। एतञ्च अन्योदर्य्यस्त्वित्यादियाज्ञवल्क्यैकमूलकत्वादुक्तम्। अत इति। सहितपदादुभयसाहित्यश्रवणं यतोऽत इत्यर्थः। अहृदयव्याहतमिति। हृदयं ज्ञानं तेन वचनार्थानभिज्ञव्याहतमित्यर्थः। ननु एकस्य द्वयोर्वा तद्धनाधिकारानुपपत्त्या उद्देश्यविशेषणत्वेन बहुत्वं यथा न विवक्षितं तथा साहित्यमपीत्येतदर्थं समेत्य सहिता इत्युक्तं न तु तेषामितरेतरसाहित्यार्थं तत्कथमितरेतरसाहित्यश्रवणम् अत आह किञ्चेति। चार्थे इति। चार्थे द्वन्द्व इति सूत्रेणेति शेषः। अतदर्थत्वं इतरेतरयोगानभिधायकत्वम्। आपादयतीति। तथाच अनन्यथासिद्धचकारबलेनैवेतरेतरसाहित्यावगम इति भावः। न चैवं साहित्यस्य विवक्षितत्वे एकस्य सोदरमात्रस्य वा तद्धनाधिकारानुपपत्तिरिति वाच्यं बहुभ्रातृकनिरुक्तपक्षे एवैतदभिधानादिति। उपसंहरति तस्मादिति। सोदरश्चासोदरमात्रश्चेति द्वन्द्वः मात्रपदेन संसृष्टत्वव्यवच्छेदः। केचित्तु सोदरासोदरयोर्द्वयोरेव मात्रपदार्थान्वयमभ्युपेत्य मात्रपदं संसृष्टत्वाभाव परमिति व्याचक्रुः। अतएवेति। उक्त मनुवचनानुरोधादेव। बृहन्मनुः तुल्यरूपसोदरासोदरयोरेव मध्ये सोदरस्याधिकारं बोधयति न त्वसंसृष्ट्यसोदरसंसृष्टासोदरयोः सत्त्वे संसृष्ट्यसोदरस्य अंशं निराकरोतीत्यर्थः। जीवतीति। अधिकारिणि सतीत्यर्थः। एवमेवेति। स्थावरमपि सोदर एव गृह्णीयादित्यर्थः। लभेतेति। सापत्न इत्यनुषङ्गेणान्वयः। सर्वेषामिति। तुल्यरूपाणां सोदरसोदराणामित्यर्थः पूर्ववचने तुल्यरूपाणामेव प्रकान्तत्वात्। सोदराणामेवेति यदुक्तं तत्र विशेषमाह सोदराणामेव मध्ये इति। सापत्नमात्रेति।

तस्याप्येकोत्पन्नत्वेन भ्रातृत्वादिति भावः। भ्रातर इति बहुवचनस्यार्थवत्तां वक्ष्याम इति यदुक्तं तत्राह अत एवेति।।३५-३७।।

**संसृष्टिनस्तु संसृष्टीत्येतच्च तुल्यरूपसम्बन्धिसमवाये संसर्गकृतविशेषप्रतिपत्त्यर्थम्।।३८।।**

**तेन सोदराणां सापत्नानां वा तथा भ्रातृपुत्राणां पितृव्यादीनां वा तुल्यानां सद्भावे संसर्गो गृह्णीयात् वाक्याद् विशेषश्रुतेः पूर्ववचनेन सर्वेषामेव प्रकृतत्वात् सर्वेष्वेव चापेक्षासद्भावात् अतोभ्रातृमात्रविषयं वचनमित्यनादरणीयम्।।३९।।**

**इति भ्रात्रधिकारः।।४०।।**

संसृष्टिनस्त्विति वचनं न भ्रातृमात्रविषयं किन्तु तुल्यरूपसम्बन्धिमात्रविषयं सामान्ये बाधकाभावे सङ्कोचस्यान्याय्यत्वादिति व्यवस्थापयति संसृष्टिनस्त्विति। विशेषाधिकारित्वं तुल्यरूपसम्बन्धिनो विवृणोति तेनेति। सोदराणामित्यादि षष्ठ्यन्तेषु सर्वत्र सोदरमात्राणामित्यादिमात्रार्थान्तर्भावः तथा भ्रातृपुत्राणां सोदरभ्रातृपुत्राणां सापत्नभ्रातृपुत्राणाञ्च पितृव्यादीनामित्यत्रापि। वाक्यादिति। संसृष्टिनस्त्वितिवचनतो भ्रातर इत्यश्रवणादित्यर्थः। नन्वेवं वचनस्य तुल्यरूपसम्बन्धिसद्भावमात्रविषयत्वे सोदरासोदरयोरसंसृष्टिसंसृष्टिनोः सद्भावे कथमेतद्वचनप्रवृत्तिः स्वयमुक्तमसङ्गच्छतामिति चेन्न तुल्यरूपाणामिति न वचनप्राप्तं किन्तु न्यायप्राप्तमेव तथा च न्यायाविशेषेणान्यत्रापि प्रवृतौ बाधकाभावः तुल्यरूपाणामिति नियमपरत्वाभावादिति संसृष्टिसोदरवचनयोरेकैकविषयत्वादित्युक्तव्याख्यानपक्षे अन्योदर्य्यवचनस्यैवात्र प्रवृत्त्या संसृष्टिवचनस्याप्रवृत्तेरिष्टत्वाद्वेति। पूर्ववचनेन पत्नी दुहितर इति वचनेन सर्वेष्वेव भ्रातृभ्रातृपुत्रगोत्रजपदोपात्तपितृव्येष्वेव अपेक्षा भ्रातृपुत्रयोः पितृव्ययोर्वा संसृष्ट्यसंसृष्टिनोर्मध्ये को गृह्णीयादित्याकाङ्क्षा। अत उक्तयुक्तेः।।३९-४०।।



# एकादशः अध्यायः

## षष्ठः परिच्छेदः

**तदभावे भ्रातृपुत्रस्य, भ्रातृगामीत्यभिधाय तदभावे भ्रातृपुत्रगामीति विष्णुवचनात्।।१।।**

**तत्रापि प्रथमं सोदरभ्रातृपुत्रस्य तस्य चाभावेऽसोदरभ्रातृपुत्रस्याधिकारः सोदरस्य तु सोदर इति वचनात्, असोदरभ्रातृपुत्रो हि धनिनो मृतस्य मातरं विहाय स्वपितामहीविशिष्टस्य धनिपितुः पिण्डदातेति सोदरभ्रातृपुत्राज्जघन्यस्तदनन्तरं धनमधिकरोति।।२।।**

मात्रभावे भ्रातृपुत्रस्याधिकारमाह तदभाव इति। प्रमाणमाह भ्रातृगामीत्यभिधायेति। तत्र भ्रातृपुत्राणां मध्ये। प्रथममिति। सोदरभ्रातृपुत्रस्य असोदरभ्रातृपुत्रात् अप्रागधिकारबोधकवचनाभावेऽपि सोदरस्य तु सोदर इति वचनेन सोदरस्यासोदरबाधकत्वावगमात् बाधकपुत्रेण बाध्यपुत्रस्य बाधो न्याय्य-इत्यभिप्रायः। अत्र हेत्वन्तरमप्याह असोदरभ्रातृपुत्रो हीति। सोदरभ्रातृपुत्रादिति। मृतस्य मातरमादाय पितामहपिण्डदातुरित्यादिः।।१-२।।

**न च सपत्नीकत्वेन सपत्नीमातुः सपत्नीपितामह्याः सपत्नीप्रपितामह्याश्च श्राद्धेऽनुप्रवेशः मात्रादिशब्दानां स्वजननीपितृजननीपितामहजननीष्वेव मुख्यत्वात् तैरेव च पदैः श्राद्धे अनुप्रवेशात्। यथा,**

**स्वेन भर्त्रा सह श्राद्धं माता भुङ्क्ते स्वधामयम्।**<br>
**पितामही च स्वेनैव स्वेनैव प्रपितामही।।**

**सपत्नीमात्रादीनाञ्च पार्वणश्राद्धानुप्रवेशो निषिद्ध एव यथा पठन्ति।**

**अपुत्रा ये मृताः केचित् स्त्रियो वा पुरुषाश्च ये।**
**तेषामपि च देयं स्यादेकोद्दिष्टं न पार्वणम्।।३।।**

**किञ्च सपत्नीकस्य श्राद्धविधानस्य नित्यत्वं सर्वजनसिद्धत्वात् सपत्नीमात्रादीनाञ्चानित्यत्वात् नित्यानित्यसंयोगविरोधेन मात्राद्यपेक्षमेव सपत्नीकश्राद्धविधानं युक्तम्।।४।।**

सपत्नीकत्वेनेति। एतच्च सपत्नीकत्वेनैव पित्रादीनां देवतात्वमिति मतमाश्रित्याभिहितम्। वस्तुतः असावेतत्ते यजमानस्य पित्रे असावेतत्ते यजमानस्य पितामहायेत्यादि निरपेक्षश्रुतिश्रवणात् पत्नीनिरपेक्षाणामेव पित्रादीनां देवतात्वं किन्तु तत्पिण्डभोगमात्रे पत्न्याः सहत्वमेवेति शूलपाणिप्रभृतयोऽप्येवमिति बोध्यम्। मात्रादिशब्दानामिति। स्वेन भर्त्रा सह श्राद्धमित्यादिवचनस्थानामित्यर्थः। आदिना पितामहीप्रपितामहीशब्दयोर्ग्रहणम्। तैरेवेति। मात्रादिबोधकैः सपत्नीकपदैरेवेत्यर्थः सपत्नीकत्वेनैव देवतात्वोक्तेर्यथाश्रुतासङ्गतेः। ननु पुत्रहीनानां सपत्नीमात्रादीनां पार्वणनिषेधेऽपि सपुत्राणां तासां पार्वणानुप्रवेशे बाधकाभाव इत्यत आह किञ्चेति। नित्यानित्येति। एकस्यैव सपत्नीकाभिलापविधेर्मात्राद्यंशे नित्यवद्विधायकत्वं सपत्नीमात्राद्यंशे कादाचित्कविधायकत्वमित्येतयोर्विरोधेनेत्यर्थः। न च मात्राद्यंशेऽपि कादाचित्कविधायकत्वमेव जीवन्मात्रादिस्थले तदसम्भवादिति वाच्यम् एतस्य श्राद्धार्हमात्रादिविषय एव विधायकत्वात् अन्यथा सपत्नीकाभिलापस्य प्रसक्त्यभावादिति।।४।।

**ननु सोदरभ्रातृपुत्रवत् सोदरपितृव्यस्यापि धनिदेयसपत्नीकपूर्वपुरुषद्वयस्य पिण्डदातृत्वात् धनिपितृव्यभ्रातृपुत्रयोः समानोऽधिकारः स्यात्। उच्यते, पितृव्यो हि धनिनः पितामहप्रपितामहयोः पिण्डदः, भ्रातुः पुत्रस्तु धनिनः प्रधानं पितरमेवादाय पुरुषद्वयस्य पिण्डदातेति स एव बलवानिति पितृव्यात् पूर्वमधिक्रियते।।५।।**

**अतएव भ्रातृनप्तापि पितृव्यस्य वाधकः मृतधनिकस्य पितुः प्रधानस्यैव पिण्डदातृत्वात्।।६।।**

**भ्रातुः प्रतिनप्ता तु धनिनः पितृसन्ततिरपि पितृव्येण बाध्यते पञ्चमत्वेन पिण्डदातृत्वाभावात्। तथा च मनुः।**

**त्रयाणामुदकं कार्य्यं त्रिषु पिण्डः प्रवर्त्तते।**
**चतुर्थः सम्प्रदातैषां पञ्चमो नोपपद्यते।। (मनु ९।१८९)**

**इत्यनेन पञ्चमो निषिद्धः।।७।।**

**किन्तु पितुरपि प्रपौत्रपर्य्यन्ताभावे पितृदौहित्रस्याधिकारो बोद्धव्यः धनिदौहित्रस्येव।।८।।**

**एवं पितामहप्रपितामहसन्ततेरपि दौहित्रान्तायाः पिण्डप्रत्यासत्तिक्रमेणाधिकारो बोद्धव्यः दौहित्रोऽपि ह्यमुत्रैनं सन्तारयति पौत्रवदिति (मनु ९।१३९) हेतोरविशेषात् स्वदौहित्रवत् पित्रादिदौहित्रस्यापि तद्भोग्यपिण्डदानेन सन्तारकत्वात्।।९।।**

**अतएव मनुना पृथगमीषामधिकारो न दर्शितः त्रयाणामिति, अनन्तर इति (मनु ९।१८९-१८७) वचनद्वयेनैव संगृहीतत्वात्। याज्ञवल्क्येन च पित्रादिदौहित्रस्यापि तद्गोत्रजातस्य पिण्डदानानन्तर्य्यक्रमेणाधिकारप्रतिपत्त्यर्थं गोत्रजपदं कृतं सपिण्डस्त्रीणाञ्च व्युदासार्थं तासामतद्गोत्रजातत्वात्।।१०।।**

**अतएव अर्हति स्त्रीत्यनुवृत्तौ बौधायनः। न दायं निरिन्द्रिया अदायाश्च स्त्रियो मता इति श्रुतेः। न दायमर्हति स्त्रीत्यन्वयः, पत्न्यादीनां त्वधिकारो विशेषवचनादविरुद्धः।।११।।**

**प्रपितामहसन्तानस्य दौहित्रान्तस्य मृतभोग्यपिण्डदातुरभावे मृतदेयमातामहादिपिण्डदानेन पिण्डानन्तर्य्यात् मातुलादिग्रहणार्थं बन्धुपदं प्रयुक्तवान् याज्ञवल्क्यः, मनुना तु पिण्डदानानन्तर्य्यवचनेनैव दर्शितम्।।१२।।**

**मृतदेयमातामहादिपिण्डत्रयस्य मातुलादिभिर्दीयमानत्वात् मातुलाद्यर्थत्वं धनस्य धनद्वारेण तस्यापि तत्पिण्डदातृत्वात् धनार्जनस्य हि प्रयोजनद्वयं भोगार्थत्वं दानाद्यदृष्टार्थत्वञ्च, तत्रार्जकस्य तु मृतत्वात् धने भोग्यत्वाभावेनादृष्टार्थत्वमेव शिष्टम्। अतएव बृहस्पतिः।**

**समुत्पन्नाद्धनादर्द्धं तदर्थे स्थापयेत् पृथक्।**
**मासषाण्मासिके श्राद्धे वार्षिके च प्रयत्नतः।।**

**तथा आपस्तम्बः।**

**अन्तेवासी वार्थान् तदर्थेषु धर्मकृत्येषु प्रयोजयेत् दुहिता वा।**
**मासिकादिना तद्भोगार्थं धर्मकृत्येष्विति अदृष्टार्थत्वे हेतुः।।**

**अतएव दत्तभुक्तफलं धनमिति स्मरन्ति। तस्मात् तद्भोग्यपिण्डदातुरभावे तद्देयपिण्डदातुर्मातुलादेरधिकारो न्याय्य एव।।१३।।**

सोदरपतिृव्यस्य पितुः सोदरस्य। अतएव उपकाराधिक्यादेव। भ्रातृनप्ता भ्रातृपौत्रः। उपकाराधिक्यमाह मृतधनिकस्येति। पिण्डदातृत्वाभावे मानमाह तथा चेति। पितृदौहित्रस्येति। सोदरवैमात्रेयभगिनीपुत्रस्यापि पितृव्यादिसत्त्वेऽपीत्यर्थः। यद्यपि दुहित्रभावे दौहित्रस्येव भगिन्या एवन्प्रागधिकारोपयुक्तः तथापि तस्याः स्त्रीत्वेन पार्वणपिण्डदत्त्वाभावात् नाधिकारः, दुहितुस्तु दौहित्रात् पूर्वम् अङ्गादङ्गात् सम्भवतीत्यादिविशेषवचनादेवाधिकार इति भावः। धनिदौहित्रस्येवेति। यथा धनिप्रपौत्राद्यनन्तरं तद्दौहित्राधिकारः तथा इत्यर्थः। त्रयाणामिति अनन्तर इति। त्रयाणामुदकं कार्य्यमित्यनेन पिण्डदानमभिधाय अनन्तरः सपिण्डात् य इत्यनेनानुपदं लिखिष्यमाणेन पिण्डदानाधिकारबोधकेनेत्यर्थः। गोत्रजपदस्य प्रयोजनान्तरमप्याह सपिण्डस्त्रीणाञ्चेति। तासां व्युदासे वचनान्तरसंवादं दर्शयति अतएवेति। निरिन्द्रिया जात्यन्धादयः स्त्रियश्च अदाया दायानर्हा मता इति इत्यन्तं सूत्रम्। अनुवर्चमानार्हतीति क्रियान्वयेन निषिद्धं स्पष्टयति श्रुतेरिति। श्रुतेरुक्तवचनस्य। स्त्रीति निरिन्द्रियस्याप्युपलक्षणं तथाच पिण्डबाहिर्भावेन यस्मात् निरिन्द्रियाः स्त्रियश्च न दायार्हा अतः स्त्री निरिन्द्रियश्च न दायमर्हतीत्यर्थः। नन्वेवं पत्न्यादीनामपि अनधिकारापत्तिः तासामपि पिण्डबहिर्भावाविशेषात् अत आह पत्न्यादीनान्त्विति। आदिना दुहितृमातृपितामहीग्रहणम्। विशेषवचनात् पत्नी दुहितर इति माता ऋक्थहरी ज्ञेयेति पितुर्माता हरेद्धनमित्यादि विशेषवचनादेवेत्यर्थः। भोग्यत्वाभावेन साक्षाद्भोग्यत्वाभावेन तद्भोग्यपिण्डदातुरभावेन परम्परया भोग्यत्वाभावेन च। समुत्पन्नात् सम्बन्धितया जातात्। तदर्थे मृतस्वाम्यर्थे। मासषाण्मासिकश्राद्धादौ तन्निमित्तमित्यर्थः। अन्तेवासीत्यापस्तम्बवचने भिन्नक्रमो बोध्यः दुहितुः प्रागधिकारात्। दत्तभुक्तफलमिति। दानभोगफलमित्यर्थः।।५-१३।।

**अतएव त्रयाणामिति अनन्तर इति वचनद्वयेनैवायमर्थो दर्शित इति मत्वा तदनन्तरं मनुनोक्तम्।**

**अत ऊर्द्ध्वं सकुल्यः स्यादाचार्य्यः शिष्य एव वा।।१४।।**

**(मनु ९।१८९)**

**सकुल्यो वृद्धप्रपितामहादिसन्ततिः समानोदकाश्च भण्यन्ते तेषामुपन्यासक्रमेणाधिकारक्रमः। तदभावे आचार्य्यशिष्यादीनाम्।।१५।।**

**अन्यथा कथं मातुलादीनां मनुविरुद्धोऽन्तर्भावः शक्यते। तस्मात् मनुना पूर्ववचनद्वय-प्रतिपादितोऽयमर्थ इत्यविरोधः।।१६।।**

**अतएव दायभागप्रकरणे त्रयाणामुदकं कार्य्यं त्रिषु पिण्डः प्रवर्त्तते। चतुर्थः सम्प्रदातैषां पञ्चमो नोपपद्यते (मनु ९।१८६) इत्युक्त्वा अनन्तरः सपिण्डादयस्तस्य तस्य धनं भवेदिति (मनु ९।१८७) लिखितं पञ्चमस्यैकपिण्डसम्बन्धहीनस्य पितृमातृकुलजातैकपिण्डसम्बन्धि-सद्भावे अनधिकारार्थम् अन्यथा सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते (मनु ५।६०) इति सपिण्डत्वस्योक्तत्वात् अनन्तरः सपिण्डाद् य इत्यनेन चानन्तर्य्यस्य धनग्रहणकारणत्वेना-भिहितत्वात् त्रयाणामिति अनर्थकं स्यात्। न च त्रैपुरुषिकश्राद्धविधानार्थमिदमिति वाच्यं दायभागसन्दंशमध्यपाठात् श्राद्धस्य च वचनान्तरविहितत्वात्। तथाच मनुः।**

**स्वाध्यायेनार्चयेतर्षीन् होमैर्देवान् यथाविधि।**
**पितॄन् श्राद्धेन नृनन्नैर्भूतानि बलिकर्मणा।।१७।।**

**(मनु ३।८१)**

अतएवेति। भोग्यदेयपिण्डानन्तर्य्यक्रमेण मातुलादिपर्य्यन्तानामप्यधिकारो यत अतएवेत्यर्थः। वृद्धप्रपितामहेति। तथाच तान् प्रस्तुत्य विभक्तदायादान् सकुल्यानाचक्षते इति बौधायनवचने तेषां सकुल्यत्वस्य दर्शितत्वादिति भावः। उपन्यासक्रमेणेति। आदौ सकुल्यानां ततः समानोदकानामिति क्रमेणेत्यर्थः। तदभावे समानोदकपर्य्यन्ताभावे। अन्यथा मनुवचनस्य मातुलाद्यभिप्रायकत्वाभावे। पूर्ववचनेति। पूर्वलिखितवचन इत्यर्थः। सन्दंशेति। दायभागप्रकरणपाठादित्यर्थः। युक्तयन्तरमाह श्राद्धस्येति। पितॄन् पित्रादित्रिकान् असावेतत्ते यजमानस्य पित्रे इत्यादिश्रुत्येकवाक्यत्वात्, तथाच त्रयाणामित्यस्य पुनरुक्तत्वापत्त्या न श्राद्धपरत्वमिति भावः। न च पितॄणां संख्यागुणविधायकत्व-मेवास्येति न पुनरुक्तिरिति वाच्यं तथात्वे तद्वचनानन्तरमेवैतन्निर्देशापत्तेरिति भावः।।१४-१७।।

**न च जननक्रमेणानन्तर्य्यग्रहणार्थं वचनं न तु प्रदातृत्वेनान्तरर्य्यार्थमिति वाच्यं जननक्रमस्य वचनादनवगतेः किन्तु उदकवत् त्रिभ्यः पिण्डदानं चतुर्थोऽधस्तनः पिण्डदाता पञ्चमस्तु पूर्वतनो न सम्प्रदानं नाप्यधस्तनः पञ्चमः पिण्डदातेत्यभिधाय आनन्तर्य्यमभिदधानो मनुः प्रदातृत्वाति-शयेनैवानन्तर्य्यं ज्ञापयति।।१८।।**

**तस्मात् यो यस्तत्कुलोत्पन्नोऽतद्गोत्रोऽपि स्वदौहित्रपितृदौहित्रादिरतत्कुलोत्पन्नो वा मातुला-दिर्धनिनो मृतस्य पितृमातृकुलगतत्रैपुरुषिकपिण्डदातृतया एकपिण्डसम्बन्धेन सपिण्डः तस्य तस्याप्यधिकारार्थं त्रयाणामिति वचनम् आनन्तर्य्येण च विशेषार्थम् अनन्तर इति वचनं वर्णनीयम्।।१९।।**

**तेन मृतभोग्यमृतदेयपित्रादित्रयपिण्डदातुः पितृदौहित्रादेरभावे मृतदेयमातामहादिपिण्ड-दातॄणां मातुलादीनामानन्तर्य्यक्रमेणाधिकारो बोद्धव्यः।।२०।।**

जननक्रमेणेति। अनेकजननाव्यवहितापत्यत्वेनेत्यर्थः। तथाच पौत्रादेः पूर्वं कन्यायाः पितृदौहित्रात् पूर्वञ्च भगिन्या इत्यादिक्रमेणाधिकारः स्यादिति भावः। पिण्डदानानन्तर्य्यस्यापि वचनादनवगतेस्तत्र युक्तिमाह। किन्त्विति। स्वमतमुपसंहरति तस्मादिति। सपिण्ड इति अधिकारीति शेषः। तेन पिण्ड-दानानन्तर्य्यक्रमस्य विवक्षितत्वेन। मातुलादीत्यादिना मातुलपुत्रपौत्रयोः परिग्रहः।।१८-२०।।

**एतत्पर्य्यन्ताभावे तु सकुल्यः। तदाह मनुः।**

**तदभावे सकुल्यः स्यादाचार्य्यः शिष्य एव वा। (मनु ९।१८७)**

**सकुल्यो विभक्तपिण्डः प्रतिप्रणप्तृतः प्रभृति पुरुषत्रयमधस्तनं वृद्धप्रपितामहादिसन्ततिश्च॥२१॥**

**तत्रापि प्रतिप्रणप्तादेरानन्तर्य्यं पिण्डलेपद्वारेण तेषामुपकारकत्वात् तदभावे च वृद्धप्रपितामहादिसन्ततिः मृतदेयपिण्डलेपभोगिभ्यो वृद्धप्रपितामहादिभ्यः पिण्डदातृत्वात्॥२२॥**

**एवंविधसकुल्याभावे च समानोदकाः सकुल्यपदेनैवोपात्तामन्तव्याः॥२३॥**

**तेषामभावे आचार्य्यः, तस्याप्यभावे शिष्यः, आचार्य्यः शिष्य एवेति मनुवचनात्। तदभावे स ब्रह्मचारी, शिष्यः स ब्रह्मचारिण इति निर्देशात्॥२४॥**

**तदभावे चैकगोत्राः, तदभावे चैकप्रवराः, पिण्डगोत्रर्षिसम्बन्धा ऋक्थं भजेरन्निति (गौतम २८/१९) गौतमवचनात्॥२५॥**

एतत्पर्य्यन्ताभावे मातुलादिपर्य्यन्ताभावे। तत्रापि ऊर्ध्वतनाधस्तनसकुल्ययोर्मध्येऽपि। उपकारकत्वादिति प्रथमं प्रतिप्रणप्त्रादयोऽधिकारिण इति शेषः। सकुल्यपदेनैवेति। समानकुलोत्पन्नत्वरूपयोगार्थस्य तत्रापि सत्त्वादिति भावः। एकपदोपात्तत्वेऽपि उपकारतारतम्यादधिकारक्रम इति तात्पर्य्यम्। आचार्य्यः वेदाध्यापयिता। शिष्यश्च वेदाध्येता। स ब्रह्मचारीति। मनुना आचार्य्याभावे शिष्यस्योक्तत्वात् याज्ञवल्क्येन च शिष्याभावे स ब्रह्मचारिणी विधानात् आचार्य्य बाध्यत्वं स ब्रह्चारिणो दण्डापूपायितमिति। निर्देशादिति। शिष्यः स ब्रह्मचारिण इति याज्ञवल्क्येन निर्देशादित्यर्थः। पिण्डगोत्रेति। सपिण्डत्वसगोत्रत्वसमानप्रवरत्वसम्बन्धवन्तः पाठिकक्रमेण रिक्थं हरेयुरित्यर्थः।।२१-२५।।

**उक्तपर्य्यन्तानान्तु सर्वेषामभावे ब्राह्मणाः तद्धनं गृह्णीयुः। यदाह मनुः।**

**सर्वेषामप्यभावे तु ब्राह्मणा रिक्थहारिणः।**
**त्रैविद्याः शुचयो दान्ता एवं धर्मो न हीयते॥**

**(मनु ९।१८८)**

**भोगेन क्षीणमाणोऽपि धर्मस्तदीयधनस्य ब्राह्मणगामित्वेनापरधर्मप्राप्त्या आपूर्य्यमाणो न हीयत इति अत्रापि धनस्य तादर्थ्यमेव पुरस्करोति॥२६॥**

**तदभावे ब्राह्मणधनवर्जं राजा गृह्णीयात्। गोत्रर्षिसम्बन्धानां ब्राह्मणानां चाभावः तदग्रामे बोद्धव्यः अन्यथा राजाधिकारस्य निर्विषयत्वापत्तेः॥२७॥**

अन्यथेति। सगोत्रादीनामभावे राज्ञोऽधिकारी वाच्यः न च पृथिव्यां तत्सगोत्राद्यभावो निर्णेतुं शक्य इत्याशयः उपकारो धनाधिकारप्रयोजक इति भावः।।२६-२७।।

**तत्र यदि त्रयाणामित्यादिना पितृदौहित्रमातुलादीनामधिकारो नोक्तः स्यात् तदा सकुल्यादीनां नियतक्रमाणां मध्येऽनुप्रवेशाभावादधिकार एव न स्यात् न च मा भूदिति वाच्यं याज्ञवल्क्येन तेषां गोत्रजबन्धुपदाभ्यां दर्शितत्वात् तस्मात् मनुनापि त्रयाणामित्यादिनैव दर्शितमिति वाच्यम्। तस्मात् यथा यथा मृतधनस्य तदुपयुक्तत्वं भवति तथा तथा अधिकारक्रमोऽनुसरणीयः॥२८॥**

**अतएव पुत्रपौत्रप्रपौत्राणां तुल्यदेवाधिकारः सिध्यति पुत्रेण लोकान् जयतीत्यादिवाक्येभ्यस्तुल्योपकारश्रुतेः तत्पिण्डदानाविशेषात् अतएव जीवत्पितृकयोः पौत्रप्रपौत्रयोरनधिकारः सिद्ध्यति। न जीवन्तमतिदद्यादिति श्रुत्वा जीवन्तं पितरमतिक्रम्य तयोः पार्वणनिषेधादनुपकारकत्वात् अन्यथा मृतपितृकयोरिव तयोरपि स्यात् जननक्रमेण च सपिण्डानन्तर्य्यात् पुत्रस्यैव स्यात् न पौत्रप्रपौत्रयोः। न च पुत्रादीनां त्रयाणां युगपदधिकारप्रतिपादकं वचनमस्ति तस्मात् उपकारकत्वाविशेषादेव तुल्यवद्धनसम्बन्धोऽभिधेयः॥२९॥**

**एवञ्च सर्वत्रोक्तरीत्या मृतधनस्य मृतार्थत्वमनुसन्धेयम् उक्तक्रमेण॥३०॥**

**सचायमर्थः दायभगप्रकरणे पुत्रादीनामुपकारकत्वातिशयाभिधानस्य अनन्यप्रयोजनकत्वात् पितृणामनृणश्चैव स तस्माल्लब्धुमर्हतीत्यानृण्यकरणस्य धनलाभहेतुत्वेन कीर्त्तनात् दौहित्रोऽपि ह्यमुत्रैनं सन्तारयति पौत्रवत् (मनु ९।१३९) इत्यनेनापि सन्तारणस्य धनसम्बन्धहेतुत्वेन निर्देशात् पुत्रादीनाञ्च त्रयाणां सन्तारणदन्यस्य तुल्यवद्धनसम्बन्धकारणस्याभावात् त्रयाणामुदकमित्यादेश्चानर्थक्यापत्तेः क्लीवपतितजात्यन्धादीनाञ्चानुपकारकत्वादेवानंशित्वाभिधानस्योपपत्तेः प्रतिसम्बन्धिनाञ्चाधिकारार्थं वचनकल्पना गौरवात् तदर्जितधनस्य च तदुपकारतारतम्येन तादर्थ्यसम्पादनस्य न्याय्यत्वात् उपकारकत्वेनैव धनसम्बन्धो न्यायप्राप्तो मन्वादीनामभिमत इति मन्यते॥३१॥**

**इति निरवद्यविद्याद्योतेन द्योतितोऽयमर्थो विद्वद्भिरादरणीयः॥३२॥**

**अथात्रापरितोषो विदुषां वाचनिक एवायमर्थः तथापि यथोक्त एव वचनयोरर्थो ग्राह्य इत्यस्तु किं विस्तरेण॥३३॥**

दार्ढ्याय पुनराह तत्रेति। नियतक्रमाणामिति। तदभावे सकुल्यः स्यादिति सर्वेषामप्यभाव इति अहार्य्यं ब्राह्मणधनमिति वचनानां मनुना क्रमेणैवाभिधानात् सकुल्यादीनां क्रमेनैयत्यमिति भावः। अतएवेति। यत एव उपकारेणैव धनाधिकारिता उपकारतारतम्याच्च धनाधिकारक्रमोऽतएवेत्यर्थः। तुल्यवदिति। तथाच उपकारतारतम्याभावात् न क्रमेणाधिकारः किन्तु युगपदेवेति भावः। तयोरपि स्यादिति। जीवत्पितृकयोरपि पौत्रप्रपौत्रयोः सम्बन्धाविशेषादधिकारः स्यादित्यर्थः। जननक्रमेण चेति। यज्जननव्यवहितं यज्जननं तदुत्तरं तदधिकार इति क्रमस्य प्रयोजकत्वे चेत्यर्थः। पौत्रप्रपौत्रयोर्मृतपितृकपौत्रप्रपौत्रयोः। अयमर्थ इति। उपकारकत्वेनैव धनसम्बन्धी न्यायप्राप्त इत्येवंरूपोऽयमर्थो मन्वादीनामभिमत इति मन्यते इति दूरेणाग्रिमेणान्वयः। अत्र हेतूनाह दायभागप्रकरण इत्यादि। उपकारकत्वातिशयाभिधानस्येति तत्रयाणामुदकं कार्य्यमिति पुत्रेण लोकान् जयतीत्यादिनेति शेषः। धनसम्बन्धहेतुत्वेनेति। सन्तारकत्वस्येत्यादि। आनर्थक्यापत्तेरिति। उपकारस्याप्रयोजकत्वे तत्प्रतिपादकवाक्यस्यानावश्यकत्वादिति भावः। क्लीवेति। क्लीवादीनामनधिकारस्य वाचनिकत्वे गौरवात् उपकारस्य प्रयोजकत्वे च उपकाराभावेन न्यायमूलकत्वे लाघवादिति भावः। प्रतिसम्बन्धिनामिति। जीवत्पितृकपौत्रप्रपौत्रादीनां सम्बन्धिनामित्यर्थः। वचनकल्पनेति। मृतपितृकादीनामिव तेषामपि पौत्रत्वाद्यविशेषादधिकारप्रसक्तौ तन्निषेधार्थं भवन्मते वचनकल्पना मन्मते तु उपकाराभावेन तदनधिकारस्य न्यायप्राप्ततया न वचनकल्पनेति भावः। अथैतासां स्मृतीनां न्यायमूलत्वे सत्यपि तद्भोग्यपार्वणदातरि तस्य गङ्गायामस्थिप्रक्षेप्तुर्गयायां पिण्डदातुर्वा उदासीनस्याधिकारापत्तिरित्यत आह अथात्रेति। यतो न्यायमूलत्वे विदुषामसन्तोषोऽतो वाचनिक एवार्थ इति यदि तथापीत्यर्थः। यथोक्त एव तद्भोग्यतद्देयपिण्डत्वेपदात्रादीनाम् आनन्तर्य्यक्रमेणाधिकारक्रम इत्येवंरूप एव। वचनयोः त्रयाणामुदकं कार्य्यमिति अनन्तरः सपिण्डाद य इति वचनयोरर्थ इत्यर्थः, एवं सति च तदस्थिप्रक्षेप्तादेरुदासीनस्य नाधिकार इति भावः।।२८-३३।।

**ब्राह्मणधनवर्जं राजा गृह्णीयात्। तदाह मनुः।**

**अहार्य्यं ब्राह्मणद्रव्यं राज्ञा नित्यमिति स्थितिः।**
**इतरेषान्तु वर्णानां सर्वाभावे हरेन्नृपः॥**

**(मनु ९।१८९)**

**सर्वशब्देन ब्राह्मणपर्य्यन्तस्योपादानम्।।३४।।**

**वानप्रस्थयतिब्रह्मचारिणां धनं धर्मभ्रातृसच्छिष्याचार्य्याः गृह्णीयुः, तदभावे एकतीर्थो एकाश्रमी गृह्णीयात्,**

**तदाह याज्ञवल्क्यः।**

**वानप्रस्थयतिब्रह्मचारिणामृक्थभागिनः ।**
**क्रमेणाचार्य्यसच्छिष्यधर्मभ्रात्रेकतीर्थिनः ।।३५।।**

**(याज्ञवल्क्य २।१३८)**

**प्रतिलोमक्रमेण यथासम्भवं धनं ज्ञेयम्। ब्रह्मचारी च नैष्ठिकोऽभिमतः पित्रादिपरित्यागेन यावज्जीवमाचार्य्यकुलनिवासपरिचर्य्यानिष्ठायाः तेन कृतत्वात्, उपकुर्वाणस्य तु धनं पित्रादिभिरेव ग्राह्यम्।।३६।।**

**इति अपुत्रधनविभागः।।३७।।**

ब्राह्मणधनवर्जं राजाधिकारीति प्रागुक्तार्थे प्रमाणमाह ब्राह्मणेति। धर्मभ्राता भ्रातृत्वेनाभ्युपेतोऽपरो वानप्रस्थो गृह्णीयात् यथासंख्यक्रमेणेत्यर्थः। अत्र प्रमाणमाह तदाहेति। अनुलोमक्रमस्य विवक्षिततत्त्वे वानप्रस्थस्य आचार्य्यासम्भवादाह प्रतिलोमेति। धर्मभ्रात्रादिव्युत्क्रमेणेत्यर्थः। तथा चाचार्य्याभावे एकतीर्थिन इति ग्रन्थकृत्सम्मतो वचनार्थः। वस्तुतो धर्माभ्रातृपदम् एकतीर्थिविशेषणमेव अन्यथैतयोः पृथत्त्वे यथासंख्यक्रमानुपपत्तेरिति ध्येयम्। यथासम्भवञ्चेति। तेन वानप्रस्थधनं सञ्चितनीवारादि। यतिधनं कमण्डलुकौपीनादि। ब्रह्मचारिधनं पुस्तकवस्त्रादि। ब्रह्मचारी द्विविधः नैष्ठिकः उपकुर्वाणश्च। तत्र नैष्ठिकस्यैव धने आचार्य्यस्याधिकारोऽपरस्य तु धने तत्पित्रादीनां क्रमेणाधिकार इत्याह ब्रह्मचारी चेति। कृतत्वात् सङ्कल्पितत्वात्। उपकुर्वाणस्य अकृततथासङ्कल्पस्य अध्ययनसमाप्त्यनन्तरं पितृगेहनिवासाभिमुखस्य।

अत्रायं मृतपुंधनाधिकारिक्रमः। तत्र प्रथमं पुत्रः तदभावे पौत्रः तदभावे प्रपौत्रः, मृतपितृकपौत्रमृतपितृपितामहकप्रपौत्रयोस्तु पुत्रेण सह युगपदधिकारः। प्रपौत्रपर्य्यन्ताभावे पत्नी सा च प्राप्तभर्त्तृदाया भर्त्तृकुलं तदभावे पितृकुलं वा समाश्रिता सती शरीररक्षार्थं भर्त्तुर्दायं भुञ्जीत तथा भर्त्तुरुपकारार्थं यथाकथञ्चिद्दानादिकमपि कुर्वीत न तु स्त्रीधनवत् स्वच्छन्दं विनियुञ्जीत। तदभावे दुहिता तत्र प्रथमं कुमारी तदभावे वाग्दत्ता, तदभावे ऊढ़ा सा च पुत्रवती सम्भावितपुत्रा च द्वे युगपदेवाधिकारिण्यौ, वन्ध्या पुत्रहीना विधवा च नाधिकारिणी। ऊढ़ाया अभावे दौहित्रः तदभावे पिता तदभावे माता तदभावे भ्राता, तत्रापि प्रथमं सोदरः तदभावे वैमात्रेयः, मृतस्य भ्रातृसंसृष्टे तु सोदरमात्रविषये प्रथमं संसृष्टसोदर एवाधिकारी तदभावे चासंसृष्टसोदरः, एवं वैमात्रेयमात्रविषये प्रथमं संसृष्टवैमात्रेयः तदभावे चासंसृष्टवैमात्रेयः, यदा तु संसृष्टो वैमात्रेयः सोदरश्चासंसृष्टः तदा तावुभौ तुल्यवदधिकारिणौ। भ्रातृणामभावे भ्रातृपुत्रः, तत्रापि प्रथमं सोदरभ्रातृपुत्रः तदभावे वैमात्रेयभ्रातृपुत्रः, संसर्गे तु सोदरभ्रातृपुत्रमात्रविषये प्रथमं संसृष्टसोदरभ्रातृपुत्रः तदभावे चासंसृष्टसोदरभ्रातृपुत्रः, वैमात्रेयभ्रातृपुत्रमात्रविषये प्रथमं संसृष्टवैमात्रेयभ्रातृपुत्रः तदभावे चासंसृष्टमात्रेयभ्रातृपुत्रः यदा तु सोदरभ्रातृपुत्रोऽसंसृष्टो वैमात्रेयभ्रातृपुत्रश्च संसृष्टः तदा द्वौ भ्रातृवत्तुल्याधिकारिणौ। भ्रातृपुत्राभावे भ्रातृपौत्रः तत्रापि भ्रातुः सोदरासोदरक्रमः संसर्गासंसर्गक्रमश्च बोध्यः। तदभावे पितृदौहित्रः स च सोदरभगिनीपुत्रः, वैमात्रेयभगिनीपुत्रः, तदभावे पितामहः तदभावे पितामही तदभावे पितुः सहोदरः तदभावे पितुर्वैमात्रेयः तदभावे पितृसोदरपुत्रपितृवैमात्रेयपुत्रपितृसोदरपौत्रपितृवैमात्रेयपौत्राणां क्रमेणाधिकारः। तदभावे पितामहदौहित्रः तत्रापि पितृसोदर-

भगिनीपुत्रः तदभावे पितृवैमात्रेयभगिनीपुत्रश्च वक्ष्यमाणप्रपितामहदौहित्राधिकारेऽप्येवं, तदभावे प्रपितामहः तदभावे प्रपितामही तदभावे पितामहसहोदरभ्रातृतद्वैमात्रेयभ्रातृतत्पुत्रपौत्रप्रपौत्रप्रपितामहदौहित्राः क्रमेणाधिकारिणः। एतावत्पर्य्यन्तानां धनिभोग्यपिण्डदातृणामभावे धनिदेयपिण्डदातृणां मातामहमातुलादीनामधिकारः तत्रापि प्रथमं मातामहस्तदभावे मातुलतत्पुत्रपौत्राणां क्रमेणाधिकारः। तदभावे चाधस्तनसकुल्यानां धनिभोग्यलेपदातृणां प्रतिप्रणप्तृप्रभृतिपुरुषत्रयाणां क्रमेणाधिकारः, तदभावे पुनरूर्ध्वतनसकुल्यानां धनिदेयलेपभुक्वृद्धप्रपितामहादितत्सन्ततीनामासत्तिक्रमेणाधिकारः, तदभावे समानोदकानामधिकारः। तेषामभावे चाचार्य्यस्य तदभावे शिष्यस्य तदभावे सब्रह्मचारिणोऽधिकारः, तदभावे चैकग्रामस्थसगोत्रसमानप्रवरयोः क्रमेणाधिकारः। उक्तपर्य्यन्तानां सर्वेषां सम्बन्धिनामभावे ब्राह्मणधनवर्जं राजा गृह्णीयात्, ब्राह्मणधनन्तु त्रैविद्यादिगुणयुक्ता ब्राह्मणा गृह्णीयुः। एवं वानप्रस्थधनं भ्रातृत्वेनानुमतोऽपरवानप्रस्थ एकतीर्थसेवी गृह्णीयात्। तथा यतिधनं सच्छिष्यः। नैष्ठिकब्रह्मचारिणो धनमाचार्य्यः उपकुर्वाणस्य तु ब्रह्मचारिणो धनं पित्रादिर्गृह्णीयादिति सङ्क्षेपः।।३४-३७।।



## द्वादशः अध्यायः

**अथ संसृष्टधनविभागः। तत्र मनुविष्णू।**

**विभक्ताः सह जीवन्तो विभजेरन् पुनर्यदि।**
**समस्तत्र विभागः स्यात् ज्यैष्ठ्यं तत्र न विद्यते।।१।।**

**(मनु ९।२१०-विष्णु १८।८१)**

**समस्तत्रेति सवर्णभ्रातृसंसर्गाभिप्रायेण, ब्राह्मणक्षत्रिययोस्तु संसर्गे पूर्वक्लृप्तभागानुसारेणेव भागव्यवस्था बोद्धव्या, पूर्वक्लृप्तज्येष्ठांशनिषेधमात्रपरं हि समवचनम् अतएव बृहस्पतिः।**

**विभक्ता भ्रातरो ये तु सम्प्रीत्यैकत्र संस्थिताः।**
**पुनर्विभागकरणे तेषां ज्यैष्ठ्यं न विद्यते।।**

**इति ज्येष्ठांशमात्रं निषेधति न तु भागसाम्यमेव बोधयति।।२।।**

अपुत्रधनविभागं निरूप्य संसृष्टधनविभागं निरूपयति अथेति। संसृष्टधनेति। संसृष्टधनञ्च सामुदायिकस्वत्वनये पित्रादिभिः सह विभागान्तरं तेषां पुनरेकमत्या यत्तव धनं तन्मम धनं यन्मम धनं तत्तवेति व्यवस्थया प्राग्जातवैशेषिकस्वत्वविनाशेनोत्पन्नसामुदायिकस्वत्ववद्धनं, ग्रन्थकृन्मते तु उक्तव्यवस्थया प्राग्जातवैशेषिकस्वत्वविनाशेनोत्पन्नापरिचितवैशेषिकस्वत्ववद्धनमिति बोध्यम्। विभागो निरूप्यत इति शेषः। सह जीवन्तः संसृष्टिनः सन्तः। समस्तत्रेति सामान्योऽभिधानात् संसर्गानन्तरविषमवर्णविभागेऽपि समत्वं स्यादित्याशङ्क्याह समस्तत्रेतीति। उक्तार्थे प्रमाणमाह पूर्वक्लृप्तेति। हि यस्मात्। ननु समविभागवचनस्य ज्येष्ठ्यांशनिषेधकत्वे ज्यैष्ठ्यं तत्रेति तु ज्येष्ठांशनिषेधकमित्येव युक्तमिति चेन्न तथा सति विषमवर्णसाधारण्येन संसर्गिणां समविभागः तथा विंशोद्धारश्च तत्र नास्तीति वाक्यभेदापत्तेः अतः समस्तत्रेति ज्येष्ठांशनिषेधकमेव एतस्य वर्णकृतविषमविभागनिरासाभिप्रायकत्वशङ्कानिरासाय परं ज्यैष्ठ्यं तत्रेति हेत्वनुवाद इत्येव युक्तमिति वस्तुतस्तु समस्तत्रेति ज्येष्ठस्य द्व्यंशरूपविषमविभागनिवृत्त्यर्थे, ज्यैष्ठं तत्रेति तु विंशोद्धारनिवृत्त्यर्थम् अन्यथा विंशोद्धारस्य भागवैषम्यासम्पादकतायाः प्रागभिहितत्वात् समविभागाभिधानेऽपि तदापत्तेरशक्यवारणत्वादिति, नानुवादकतेति सुधीभिर्बोध्यम्। अत्र स्मृत्यन्तरसंवादं दर्शयति अतएवेति। यत एव न वर्णनिबन्धनविषमविभाग-

निषेधोऽत एव। ज्येष्ठांशमात्रं निषेधति बृहस्पतिरित्यन्वयः ज्येष्ठांशश्चात्र ज्येष्ठत्वेनांशद्वयं स्वोद्धारांशश्चेति द्वयं बोध्यम्।।१-२।।

**संसर्गिणश्च बृहस्पत्युक्ताः**

**विभक्तो यः पुनः पित्रा भ्राता चैकत्र संस्थितः।**
**पितृव्येणाथ वा प्रीत्या स तु संसृष्ट उच्यते। इति ।।३।।**

**परिगणितव्यतिरिक्तेषु संसर्गकृतो विशेषो नादरणीयः परिगणनानर्थक्यात्।।४।।**

**अपरें च विशेषा भ्रात्रधिकारनिरूपणप्रकरणोक्ता अनुसन्धेयाः।।५।।**

**इति संसृष्टविभागः।।६।।**

परिगणनानर्थक्यादिति। तथा च परिगणितेतरेषां संसर्ग एव नेति भावः। अपर इति। अनुपघातार्जितमर्जकस्यैव नेतरेषाम् अनुपघातार्जितविद्याधने तु समाधिकविद्यानामंशित्वम् उपघातार्जिते तु सर्वेषामंशित्वमित्यादयो ये विशेषा भ्रात्रधिकारप्रकरणोक्ताः तेऽत्रापि संसर्गविभागेऽप्यनुसरणीया इत्यर्थः।।३-६।।



## त्रयोदशः अध्यायः

**अथ विभागकाले निह्नुतस्य पश्चादवगतस्य विभागः, तत्र मनुः।**

**ऋणे धने च सर्वस्मिन् प्रविभक्ते यथाविधि।**
**पश्चादृश्येत यत्किञ्चित् तत् सर्वं समतां नयेत्।।१।।**

**(मनु ९।२१८)**

**पूर्वं यथा यस्य विभागकल्पना कृता तत्समानैव कार्य्या न पुनरपहर्त्तुपरहर्त्तुतया अल्पभागो दातव्यो न दातव्य एव वेति समतां नयेदित्यस्यार्थः न पुनस्तत्र द्रव्ये सर्वेषां समभागार्थं वचनमिद विंशोद्धारादिवाधे हेत्वभावात् ब्राह्मणक्षत्रियादीनाञ्च समभागापत्तेः।।२।।**

**तथाह याज्ञवल्क्यः।**

**अन्योन्यापहृतं द्रव्यं विभक्तैर्यत्र दृश्यते।**
**तत् पुनस्ते समैरंशैर्विभजेरन्निति स्थितिः।।३।।**

**तथा कात्यायनः।**

**प्रच्छादितन्तु यद येन पुनरागत्य तत् समम्।**
**भजेरन् भ्रातृभिः सार्द्धमभावेऽपि हि तत्सुताः।।**
**अन्योन्यापहृतं द्रव्यं दुर्विभक्तञ्च यद्भवेत्।**
**पश्चात् प्राप्तं विभज्येत समभागेन तद् भृगुः।।४।।**

**असम्यग्विभक्तस्यापि पुनर्विभागं दर्शयति। सकृदंशो निपततीति (याज्ञवल्क्य २।१२७) तु सम्यग्विभागविषयम्।।५।।**

**पश्चात् प्राप्तमिति न पुनः पूर्वविभक्तमपि विभजनीयमित्यर्थः।।६।।**

**तथा कात्यायनः।**

**बन्धुनापहृतं द्रव्यं बलान्नैव प्रदापयेत्।**
**बन्धूनामविभक्तानां भोगं नैव प्रदापयेत्।।**

**सामादिना दाप्यो न बलात् अविभक्तेन तु यदधिकं भुक्तं तदसौ न दाप्यः।।७।।**

निह्नुतविभागं निरूपयति अथेति। निह्नुतस्यापि साधारणतया सामान्यत एव समभागस्य प्राप्तत्वेन समतां नयेदिति पुनस्तदभिधानस्य प्रयोजनं दर्शयति पूर्वमित्यादि। यथा यस्येति। यस्यापहर्त्तुरनपहर्त्तुर्वा यथा भागकल्पना द्व्यंशसमांशरूपभागकल्पना द्रव्यान्तरे कृता तथा अपह्नुतद्रव्येऽपि कार्य्या इत्यर्थः। हेत्वभावादिति। अपहर्त्तुरनंशित्वाल्पांशित्वनिरासकत्वेनैव वचनस्यार्थवत्ते विंशोद्धारादिविधिसङ्कोचस्यान्याय्यत्वादिति भावः। ननु विंशोद्धारादेर्न भागवैषम्यप्रयोजकत्वमिति प्रागेवाभिहितं तथाच तद्बाधो नास्त्येव किन्तु द्व्यंशादिरूपविषमविभागनिवृत्त्यर्थमेव समविधानं स्यादित्यत आह ब्राह्मणेति। समभागापत्तेरिति। सामान्यत एव विषमविभागनिषेधस्य भवन्मते वचनार्थत्वादिति भावः। न चेष्टापत्तिः। उपकारतारतम्येऽपि भागसाम्याभ्युपगमे न्यायविरोधापत्तेः। इदमुपलक्षणम् अत्राप्युक्तक्रमेणैव वचनस्यार्थवत्त्वे क्षत्रियादौ विषमविभागविधीनां बाधस्यान्याय्यत्वमित्यपि द्रष्टव्यम्। समैरंशैरिति। पूर्वकृतांशसमैरित्यर्थः। अभावेऽपि हीति। विभागिनोऽभावे तत्सुताः तत्प्रपौत्रपर्य्यन्ताः तत्प्रच्छादितं धनं भ्रातृभिर्भाग्यन्तरैः सह समं भजेरन्नित्यर्थः। अत्र संसृष्टिना पित्रा साधारणधनानुपघातेन यत् स्वयमर्जितं तत् विभक्तजपुत्रसत्त्वे तस्यैव नेतरेषाम् अनीशः पूर्वजः पित्र्ये भ्रातृभागे विभक्तज इति पुत्रैः सह विभक्तेन पित्रा यत् स्वयमर्जितम्। विभक्तजस्य तत् सर्वमनीशाः पूर्वजाः स्मृता इत्यादेः सङ्कोचकाभावादिति बोध्यम्। दर्शयतीति। दुर्विभक्तश्च यद्भवेदित्यनेनेति शेषः। सम्यग्विभागेति। सामान्यविशेषन्यायादित्यर्थः। न पूर्वविभक्तमपीति। धनसामान्यस्य पुनर्विभाज्यत्वे पश्चात् प्राप्तमिति विशेषोपादानवैयर्थ्योपपत्तेरिति भावः। भोगं नैव प्रदापयेदित्यस्यार्थमाह अविभक्तेनेति।।१-७।।

**अत्र च साधारणधने परधनमप्यस्तीति तन्निह्नवे स्तेन एव भवति किल्विषी चेति ये मन्यन्ते तान् प्रत्युच्यते, य एव हि परस्येदमिति विशेषं जानानः परस्वे स्वत्वहेतुमन्तरेणैव स्वत्वमारोपयति स स्तेन इति लोकप्रसिद्धोऽर्थः, न चात्रेदं परकीयं इदं वा ममेति विवेक्तुं शक्नोति द्रव्यस्याविभक्तत्वात्। यथा यदेव हि ममेदमिति विशेषं जानानः परस्वत्वापत्तये स्वामी त्यजति, परश्च विशेषेणेदं ममेति स्वत्वं प्रत्येति तत्रैव दाननिष्पत्तिः, न च साधारणधने तथा सम्भवतीति साधारणधनमदेयमुक्तं तथा स्तेयमपि नैतन्मम धनं परस्येदमिति जानत एव भवतीति न साधारणधनापहारे स्तेयनिष्पत्तिः।।८।।**

साधारणधनापह्नवः चौर्य्यमेवेति केषाञ्चिन्मतं प्रसङ्गात् तदभिधानपूर्वकं दूषयति अत्र चेति। विशेषमिति। इतरव्यावृत्तपरकीयस्वत्ववत्तया जानन्नित्यर्थः। य एव हीति। हि यस्मात् परस्येदमिदमित्यादि लोकप्रसिद्धोऽर्थो यत एवात एव न साधारणधनापहारे स्तेयनिष्पत्तिरिति दूरेणान्वयः। स्वत्वहेतुमन्तरेण स्वामिकृतदानविक्रयादिकं विना स्वत्वमारोपयति स्वस्वत्वेच्छयोपादानं करोति तेन याचिताद्युपादाने न स्तैन्यं तदुपादानस्य स्वत्वेच्छानधीनत्वात्। स स्तेन इति। तथाचेदन्तया परकीयत्वेन निश्चितद्रव्यस्यापहारः स्तैन्यमित्यर्थः। विशेषं जानान इत्यत्र प्रमाणमाह लोकेति। अतएव स्वकीयत्वभ्रमेण परस्वं गृह्णत्यपि पुरुषे न लोकानां स्तेयव्यवहार इति। प्रकृते च साधारणे इदन्त्वेन परकीयज्ञानासम्भवं दर्शयति न चात्रेति। ननु स्वकीयत्वभ्रमेणोपादाने स्तेयव्यवहाराभावात् परकीयत्वेन ज्ञानमपेक्षितमस्तु न त्विदन्त्वेन परकीयत्वज्ञानं प्रमाणाभावात्, तथाच साधारणधनेऽपि परकीयत्वज्ञानमस्त्येवेति तदपहारः स्तेयं कथं न स्यादेव इत्यत इदन्तया परकीयत्वज्ञानस्यापेक्षितत्वं दृष्टान्तेन साधयति यथेति। इदं ममेत्यनेन स्वीकारेण दातुत्यागादुत्पन्नस्वत्वं प्रत्येतीत्यर्थः। तथा सम्भवतीति। इति हेतोः साधारणमदेयमुक्तमित्यर्थः। न चात्रापि प्रमाणाभावः अविभक्तधने हि स्वत्वं गुटिकापाताभि-

व्यङ्ग्यमेव तथाचास्मिन् भागे यदि मम गुटिकापातो न स्यात् तदा नैतन्मम धनं तत् कथं दाननिष्पत्तिरिति शङ्कया तत्राप्रवृत्तेरदेयत्वस्य युक्तिसिद्धत्वात् तथा स्तेयमपीति यथा इदन्त्वेन जानत एव दाननिष्पत्तिः तथा परस्येदमिति जानत एव स्तेयं भवतीत्यर्थः।।८।।

**अपहारपदन्तु सङ्गोपनाभिप्रायं न हि सङ्गोपनं स्तेयमुक्तम् असङ्गुप्तग्रहणेऽपि स्तेयपदप्रयोगप्रदर्शनात्। तथा च कात्यायनः।**

**प्रच्छन्नं वा प्रकाशं वा निशायामथ वा दिवा।**
**यत् परद्रव्यहरणं स्तेयं तत् परिकीर्त्तितम्।।**

**अतएव राज्ञा बलात् न दाप्य इति पूर्वमुक्तं चौरत्वे तु चौरं प्रदाप्यापहृतं घातयेद्विविधैरिति (याज्ञवल्क्यः २।२६८) वचनादास्तां सामादिना दापनं घातनमपि कार्य्यम्।।९।।**

**एतच्च मुनिभिरपहर्त्तुरपि विभागदानप्रतिपादनादुन्नीयते।।१०।।**

ननु तर्हि कथं साधारणापह्नवे स्तेयशक्तस्यापहारपदस्य प्रयोगो मुनीनामत आह अपहारपदन्त्विति। सङ्गोपनेति। वस्तुनो ज्ञानसामग्रीविघटनव्यापाररूपे सङ्गोपने लाक्षणिकमित्यर्थः। ननु सङ्गोपनं स्तेयमेव तत् कथं लक्षणेत्याशङ्क्य निषेधति न हीति। प्रच्छन्नम् आच्छादितम्। प्रकाशमनाच्छादितम्। तेन सङ्गोपनाभावः। परद्रव्यहरणं स्वत्वेच्छया परद्रव्योपादानम्। अतएवेति। यत एव साधारणपह्नवो न स्तेयमत एवेत्यर्थः। चौरत्वे त्विति साधारणापह्नवकर्त्तुरित्यादि। एतच्चेति। उक्तरूपस्तेयलक्षणञ्चेत्यर्थः। विभागप्रतिपादनादिति। साधारणधनापहारस्य स्तेयत्वेऽशीतिरत्तिकाऽन्यूनसाधारणसुवर्णापहर्त्तुर्महापातकित्वेन पतितत्वात् तद्भागाप्रसक्तेः तत्साधारण्येन विभागप्रतिपादनानुपपत्तेरिति भावः।।९-१०।।

**तदुक्तं विश्वरूपेणापि अतः तस्करदोषो नास्तीति वचनारम्भसामर्थ्यात् स्तेन धात्वर्थानिष्पत्तेरित्यभिप्रायः।।११।।**

**अतएव प्रायश्चित्तकाण्डे जितेन्द्रियेण भणितं यदि स्वर्णमेव परकीयं लौहादिबुद्ध्या गृह्णाति, असुवर्णं सुवर्णबुद्ध्या, आत्मीयसदृशं परकीयमेव आत्मीयबुद्ध्या, गृह्णाति सर्वत्र नापहारनिष्पत्तिः सर्वत्र यथावस्तु परकीयबुद्धेरभावात्, तद्वदत्रापि समानं, विभागात् पूर्वं तद्व्यङ्ग्यकदेशविशेषगतस्वत्वस्यापरिज्ञानात् अतो नात्र स्तेयनिष्पत्तिः।।१२।।**

**सत्यपि वा स्तेयेऽपहर्त्तुरपि विभागवचनदर्शनात् न स्तेयदोषः अन्यथा सुवर्णादिनिह्नवे पतितस्य भागो न स्यात्।।१३।।**

उक्तार्थे संवादं दर्शयति तदुक्तमिति। तस्करदोषो नास्तीति। तस्करस्य दोषः तस्करत्वं तत् नास्तीत्यर्थः। ननु तदपहारस्य स्तेयत्वेऽपि विभागो वचनबलादेव भविष्यतीत्याशङ्कामपनेतुं विश्वरूपस्याशयमाह स्तेयधात्वर्थेति। इदन्तया परकीयत्वेन निश्चितपरद्रव्यापहार एव स्तेयधात्वर्थः अन्यथा साधारणापङ्कवस्य स्तेयत्वे लोकव्यवहारविरोधो विभागवचनस्य वेदमूलकत्वकल्पना च स्यादिति तदभिप्रायः। अत्रैवोपष्टम्भकान्तरमाह अत एवेति। नापहारनिष्पत्तिरिति। न कामकृतसुवर्णापहारनिष्पत्तिरित्यर्थः। तथाच ग्राह्यत्वेनेच्छाविषयतावच्छेदको यो धर्मः तद्रूपेण परकीयत्वनिश्चयाधीनतद्रूपावच्छिन्नपरद्रव्यापहार एव कामकृततदपहारः प्रकृते च प्रथमे लौहबुद्ध्य सुवर्णं ग्रहीतुर्न कामकृतसुवर्णापहारः सुवर्णत्वस्य ग्राह्यत्वेनेच्छाविषयतावच्छेदकत्वाभावात् तद्रूपेण परकीयत्वज्ञानाभावाच्च नापि कामकृतलौहापहारः लौहत्वस्य तादृशेच्छाविषयतावच्छेदकत्वेऽपि वस्तुतः तद्रूपावच्छिन्नापहाराभावात् किन्त्वकामकृतसुवर्णापहार एव, द्वितीये चासुवर्णं सुवर्णबुद्ध्यापहर्त्तुर्न सुवर्णापहारः वस्तुतः

तद्रूपावच्छिन्नापहाराभावात् किन्त्वज्ञानकृतासुवर्णापहार एव तदगतस्य पित्तलत्वादेस्तादृशेच्छाविषयतावच्छेदकत्वाभावात्, तृतीयेऽपि स्वकीयत्वभ्रमेणैव परकीयं गृह्णतोऽपि न कामकृततदपहारः परकीयत्वेन ज्ञानाभावादिति पर्य्यवसितोऽर्थः। तद्वदिति। तदुक्तवदित्यर्थः। अत्रापि साधारणधनेऽपि। समानमिति। तत्र यथा लौहबुद्ध्या गृह्णतो ग्राह्यत्वेनेच्छाविषयता वच्छेदकलौहत्वेन ज्ञानेऽपि सुवर्णत्वेन ज्ञानाभावात् असुवर्णापहारे च विशेष्यस्य सुवर्णापहारस्यैवाभावात् स्वकीयत्वबुद्ध्या परकीयं गृह्णतश्च परकीयत्वेन ज्ञानाभावात् न कामकृततदपहारनिष्पत्तिः ग्राह्यत्वेनेच्छाविषयतावच्छेदकसुवर्णत्वादिना परकीयत्वज्ञानाभावात् तथेहापि ग्राह्यतया इच्छाविषयतावच्छेदकेनैतत्सुवर्णत्वादिना परकीयत्वज्ञानाभावात् नापहारनिष्पत्तिरित्यर्थः। ननु परकीयद्रव्यापहार एव स्तेयं लाघवात् परकीयद्रव्यापहर्त्तर्य्येव स्तेनत्वेन लोकव्यवहारप्रवृत्तेश्च अतएव स्तेयधात्वर्थोऽपि स एव तदेव च स्तेयम् अपहर्त्तव्यतावच्छेदकप्रकारेण परकीयत्वज्ञानपूर्वकञ्चेत्तदा कामकृतम् एवञ्च सति विश्वरूपेण तस्करदोषो नास्तीत्यनेन तस्करत्वनिबन्धनो यो दोषः पातित्यादिरूपः तद्राहित्यमेवोक्तं न तु स्तेयत्वानिष्पत्तिरित्युक्तम् अतएव स्तेयधात्वर्थानिष्पत्तिरिति तदभिप्रायवर्णनमयुक्तमेव पातित्यादिदोषराहित्यस्यैव तदभिप्रेतत्वात् तथा जितेन्द्रियेणापि यथावस्तु परकीयबुद्ध्यभावादित्यनेनापहर्त्तव्यतावच्छेदकप्रकारेण परकीयत्वज्ञानपूर्वकतद्रूपावच्छिन्नपरद्रव्यापहारः कामकृतस्तेयमित्यभिहितं न त्विदन्त्वादिना परकीयत्वज्ञानपूर्वकत्वं तेनोक्तम्, इत्थञ्च सति साधारणेऽपि सुवर्णादावपहर्त्तव्ये एतत् सुवर्णसमुदायमध्ये सुवर्णं परकीयमप्यस्तीति अपहर्त्तव्यतावच्छेदकसुवर्णत्वादिना परकीयत्वज्ञानमावश्यक समुदाये स्वस्वाम्यव्यतिरेकनिश्चयात् अन्यथा अपह्नव एव कुत इति साधारणस्यापह्नवे स्तेयत्वमेवेति तत्कथं साधारणधनापहारे न स्तेयनिष्पत्तिरित्यभिहितमित्यत आह सत्यपि वेति। स्तेयत्वाभ्युपगमोऽयम् उक्तसाम्प्रदायिकमतावष्टम्भेन। वस्तुतस्तु अत्र न स्तेयनिष्पत्तिरित्यग्रे स्वयं वक्ष्यते। न स्तेयदोषो न स्तेयनिबन्धनपातित्यादिदोषः।।११-१३।।

**अथ पातकहेतुसुवर्णापहारेऽपि स्तेनस्य भाग इति विशेषवचनाभावात् द्रव्यान्तरस्तेयविषयो भागविधिर्वर्ण्यते एवं तर्हि सुवर्णादिस्तेयनिषेध एव किमिति असाधारणपरकीयमात्रद्रव्यगोचरो न व्यवस्थाप्यते तथापि किं विनिगमनाप्रमाणमिति चेत् उच्यते परद्रव्यहरणं स्तेयमिति परशब्दात् आत्मीयत्वव्यवच्छेदेनैव परकीयत्वस्यावगमात् साधारणासाधारणयोश्चासाधारणस्यैव शीघ्रप्रतीतेः। यथेष्टिपूर्वकमेवादः पौर्णमासं हविरिति अग्नीषोमीयपुरोडाशस्यैवोत्कर्षः नोपांशुयाजीयाज्यस्य अग्नीषोमीयानग्नीषोमीयस्य साधारणत्वात्।।१४।।**

**अतएव लोकेऽपि नैवंविधविषये क्वचिद्विनिगमनादिकं दृश्यते।।१५।।**

नन्वेवं पातित्यं प्रति परिमितसुवर्णापहारस्य हेतुतायां साधारणसुवर्णापहारभेदनिवेशे गौरवं तद्वरं तदपहर्त्तुः पातित्यमेवेष्टं विभागविधिस्तु तदतिरिक्तसाधारणद्रव्यापहारविषय इत्याशङ्कते अथेति। विशेषवचनेति। तत्सद्भावे तु तद्वचनेनैव पातित्यकारणतायां साधारणतदपहारभेदनिवेशः स्यादिति भावः। प्रतिबन्धिना समाधत्ते एवं तर्हीति। किमितीति। न व्यवस्थाप्यत इत्यन्वयः तथाच विभागविधेर्द्रव्यान्तरस्तेयविषयता सङ्कोचः किं वा सुवर्णस्तेयनिषेधविधेः परमात्रीयसुवर्णस्तेयविषयतया सङ्कोच इत्यत्र विनिगमनाविरह इति भावः। किं विनिगमनेति विनिगमनाप्रमाणाभावे द्वयोरेव सङ्कोचे साधारणसुवर्णापहर्त्तुरपतितत्वेऽपि विभागाप्राप्तिः विभागविधेर्द्रव्यान्तरस्तेयविषयत्वेन सङ्कोचौचित्यात् असङ्कोचे तु तादृशपतितस्य विभागप्राप्त्या पतितस्य विभागनिषेधविधिविरोधः स्यादिति भावः। साधारणापह्नवे स्तेयत्वसत्त्व एव द्वयोः सङ्कोचे विनिगमनाविरहः अस्यास्तेयत्वे तु क्व विनिगमनाविरहः

द्वयोरेवासङ्कोचादित्यभिप्रायेण स्तेयनिष्पत्तिरेवात्र न भवतीति समाधत्ते उच्यत इति। स्तेयमित्यनन्तरं शास्त्रमिति तदन्तर्गतादिति च पदद्वयं पूरणीयं तथा च यत् परद्रव्यहरणं तत् स्तेयमिति शास्त्रं तदन्तर्गतात् परशब्दात् परशब्दमभिव्याहृतद्रव्यशब्दादित्यर्थः। आत्मीयत्वेति। आत्मस्वत्वेत्यर्थः। व्यवच्छेदेनेति तृतीया विशेषणे। तथाचात्मीयत्वव्यवच्छिन्नस्य परकीयत्वस्य परस्वत्वविशिष्टस्यावगमादित्यर्थः। एतस्यावगमे हेतुमाह साधारणेति। साधारणं तदितरसम्बन्धि। असाधारणं तन्मात्रसम्बन्धि, तयोर्मध्ये तत्सम्बन्धिबोधकशब्दात् तन्मात्रसम्बन्धिन एव प्रथमोपस्थितिर्यतोऽत इत्यर्थः। अत्र दृष्टान्तमाह यथेष्टीति पौर्णमासी कर्त्तव्या अग्नीषोमीययागसम्बन्धि हविः द्विविधं पुरोडाशरूपम् आज्यरूपञ्च पूर्वमसाधारणम् अग्नीषोमीयमात्रत्वात् उत्तरञ्च साधारणम् अग्नीषोमीयतदन्योपांशुयागसम्बन्धित्वात् तत्रेष्टिविशेषे इष्टिपूर्वकमेवादः पौर्णमासं हविरित्यनेन पौर्णमासहविष इष्ट्युत्तरकालकर्त्तव्यत्वरूपमुत्कर्षविधानं स चायमुत्कर्षः पुरोडाशस्यैव असाधारणत्वेन पौर्णमासपदात् शीघ्रोपस्थितेः न त्वाज्यस्य साधारणत्वात् तद्वदिहापीत्यर्थः तथाच परमात्रस्वत्वाश्रयद्रव्यापहारस्यैव स्तेयत्वेन शास्त्रबोधितत्वात् नासाधारणापहारे स्तेयनिष्पत्तिरिति भावः। अतएव स्तेयानिष्पत्तेरेव। एवंविधविषये साधारणापह्नवे। इदञ्च सामुदायिकस्वत्ववादिमतमाश्रित्य समाहितं स्वमते तु स्वत्वस्य प्रदेशिकत्वात् एतावता प्रयासेनाप्यत्र स्तेयनिष्पत्तिर्दुर्वारैव परमात्रस्वत्ववदद्रव्यस्यापहृतसमुदायमध्ये सत्त्वादिति बोध्यम्।।१४-१५।।

**अतो यद बालकवचनं, यथा मुद्गापचारे माषप्रतिनिधौमुद्गानां माषाणाञ्च यज्ञसम्बन्धे अयज्ञिया वै माषा इति माषा निषिद्धाः, तथा आत्मीयानात्मीयहरणेऽपि अनात्मीयापहारो निषिद्धः। तद्बालकवचनमेव पूर्वव्याहृतस्य स्तेयपदार्थस्यैवाभावात् माषगतमुद्गावयवोपादानेऽपि माषाणां यज्ञसम्बन्धो नास्तीति न शक्यते वक्तुं माषामिश्रितानामेव यज्ञसम्बन्धप्रतीतेः।।१६।।**

**इत्यन्योन्यापहृतविभागः।।१७।।**

अत्र बालमतं दूषयितुमुपन्यस्यति अत इति। वक्ष्यमाणहेतोरित्यर्थः। यथेति। मुद्गापचारे मुद्गाभावे माषप्रतिनिधौ सादृश्यवचनेन माषप्रतिनिधौ प्राप्ते मुद्गानां माषाणाञ्च यज्ञसम्बन्धे मुख्यकल्पानुकल्पभावेन यज्ञसम्बन्धप्रसक्तौ अयज्ञिया वै माषा इत्यनेन यथा माषा निषिद्धाः तथा आत्मीयानात्मीयापहारेऽपि आत्मीयञ्च तदनात्मीयम् अन्यदीयञ्चेति साधारणमित्यर्थः तदपहारेऽपि अनात्मीयापहारनिषेधबोधको विधिः परस्वं नाददीतेत्येवंरूपः निषिद्धो निषेधक इत्यर्थः। तथाचायं पर्य्यवसितोऽर्थः। मौद्गश्चरुर्भवतीति श्रुतिः तस्याश्चावघातादिविधिपर्य्यालोचनेन अवयवपर्य्यन्तपर्य्यवसाने मुद्गावयवैश्चरुर्भवतीत्येवार्थः, मुद्गावयवाश्च द्विविधा मुद्गमात्रारम्भकाः मुद्गमाषोभयारम्भकाश्च द्विविधानां यज्ञसम्बन्धोऽवगतः तत्र च मुद्गाभावे माषस्य प्रतिनिधित्वेन यज्ञसम्बन्धप्रसक्तौ अयज्ञिया वै माषा इत्यनेन माषावयवा माषमात्रारम्भकाः असाधारणा अवयवाः, माषमुद्गोभयारम्भकाश्च साधारणा अवयवा अपि यथा निषिद्धाः माषावयवत्वपुरस्कारेणैव सामान्यतो निषेधात् तथा परस्वं नाददीतेति परस्वत्वपुरस्कारेणैव निषेधात् परमात्रीयस्य स्वपरसाधारणस्य चापहारो निषिद्ध इति अस्य च सामुदायिकस्वत्ववादितया न द्रव्यस्य स्वपरसाधारण्यानुपपत्तिरिति बोध्यम्। दूषयति तदबालेति। पूर्वव्याहृतस्य पूर्वोक्तप्रबन्धेन प्रतिपादितस्य स्तेयपदार्थस्य स्तेयलक्षणस्य परमात्रीयद्रव्यापहारत्वरूपस्याभावात् साधारणापह्नवेऽभावात् तथाच स्तेयस्यैव निषेधविषयतया साधारणापह्नवो न निषिद्ध इति भावः। दृष्टान्तासिद्धिमाह माषगतेति माषाणां माषमात्रारम्भकावयवानां वक्तुं न शक्यते। कुतस्तत्राह, माषामिश्रितानामेवेति माषमात्रारम्भकावयवामिश्रितानामेवेत्यर्थः। यज्ञसम्बन्धप्रतीतेः यज्ञसम्बन्धप्रसक्तेः

तथाच अयज्ञिया वै माषा इति वाक्येन माषमात्रारम्भकावयवा एव निषिद्धाः न तु माषमुद्गोभयारम्भकावयवा इति तथात्वे मुद्गोपादनेऽपि तेषामपरिहार्य्यत्वात् विधिविप्लवापत्तेः, परन्तु माषगतमुद्गावयवोपादाने माषमात्रारम्भकावयववानामप्यपरिहर्त्तव्यत्वेन उपादानस्यावश्यकत्वात् तेषामपि यज्ञसम्बन्धः स्यादित्यतो माषगतमुद्गावयवानां नोपादानमित्येवेति क्व दृष्टान्तावकाशः।।१६-१७।।



## चतुर्दशः अध्यायः

**अथ वृत्तविभागसन्देहनिर्णयः। तत्र नारदः।**

**विभागधर्मसन्देहे दायादानां विनिर्णयः।**
**ज्ञातिभिर्भागलेख्येन पृथक्कार्य्यप्रवर्त्तनात्।।१।।**

**(नारद १३।३५)**

**ज्ञातीनां कीर्त्तनं तेषु सत्सु नान्यसाक्षिग्रहणमित्येतदर्थम्। अतएव याज्ञवल्क्यः।**

**विभागनिह्नवे ज्ञातिबन्धुसाक्ष्यभिलेखितैः।**
**विभागभावना ज्ञेया गृहक्षेत्रैश्च यौतकैः।।२।।**

**(याज्ञवल्क्य २।१५०)**

**प्रथमं ज्ञातयः सपिण्डाः साक्षिणः। तदभावे बन्धुपदोपनीताः सम्बन्धिनः। तदभावे उदासीना अपि साक्षिणः। तुल्यवद्भावे साक्षिपदेनैवोपात्तत्वात् ज्ञातिबन्धुपदानर्थकतापत्तेः।।३।।**

**अतएव शङ्खः।**

**गोत्रभागविभागेऽर्थे सन्देहे समुपस्थिते।**
**गोत्रजैश्चापरिज्ञाते कुलं साक्षित्वमर्हति।।**

**गोत्रजैर्ज्ञातिभिरित्यर्थः तैरज्ञाते कुलं बन्धुः साक्षित्वमर्हति न पुनरसम्बन्धी तेनाप्यपरिज्ञाते अन्यः साक्षीत्यर्थः।।४।।**

**अतएव मुख्यभूता ज्ञातय एव नारदेन निर्दिष्टाः। ज्ञातिभिरिति पाठोऽनाकरः।।५।।**

प्रकरणान्तरमाह अथेति। वृत्तः प्राग्जातो विभागः तस्य सन्देहे वयं विभक्ता न वेति भागिनां सन्देहे वक्ष्यमाणप्रकारेण निर्णय उच्यत इत्यर्थः। विभागधर्मेति विभागरूपो यो धर्मः तत्सन्देहे दायादानां ज्ञातिभिरित्यादिहेतुभिर्निर्णय इत्यर्थः। भागलेख्येन विभागपत्रेणेत्यर्थः। भोगलेख्येनेति पाठे समाहारद्वन्द्वः तेन प्रत्येकवस्तुषु प्रत्येकमसाधारणभोगेन लेख्येन वा इत्यर्थः। पृथक् स्वातन्त्र्येण-परस्परानुमतिनैरपेक्ष्येण यागादिकार्य्यप्रवर्त्तनादित्यर्थः। अतएव ज्ञातिसत्त्वेऽन्यसाक्षिग्रहणस्य निषिद्धत्वादेव। विभागभावना विभागनिष्पत्तिः। यौतकैः पृथग्भूतैः युमिश्रणेऽमिश्रणे इति धात्वनुसारात्। ननु ज्ञातिबान्धवादीनां द्वन्द्वनिर्देशात् तुल्यवदेव साक्षित्वं स्यात् तत् कथं प्रथमं ज्ञातय इत्यादिव्याख्यानमत आह तुल्यवद्भाव इति। अनर्थकतापत्तेरिति। साक्ष्यभिलेखितैरिति। सामान्याभिधाने-नैवोक्तार्थसिद्धिरिति क्रमेणैव तेषां साक्षित्वार्थं ज्ञात्यादीना पृथगुपादानमिति भावः। गोत्रेति गोत्रस्य भागो धनं तस्य विभागरूपेऽर्थे सन्देहे इत्यर्थः। न पुनरसम्बन्धी कुले साक्षिणि। सतीत्यादिः। नारदेनेति। ज्ञातिभिर्भागलेख्येनेत्यादिना नारदेन निर्दिष्टा इत्यर्थः। ज्ञातृभिरिति शङ्खवचने गोत्रजैरित्यत्रेत्यादिः।।१-५।।

**तथा लिखितेन वा निर्णयः लिखितन्तु साक्षिभ्यो बलवदेवेत्युक्तम्।।६।।**

**तथा पृथक्कार्य्यप्रवर्त्तनादपि निर्णयः। यथोक्तं नारदेन।**

**दानग्रहणपश्वन्नगृहक्षेत्रपरिग्रहाः।**
**विभक्तानां पृथक् ज्ञेयाः पाकधर्मागमव्ययाः॥**
**साक्षित्वं प्रातिभाव्यञ्च दानं ग्रहणमेव च।**
**विभक्ता भ्रातरः कुर्य्युर्नाविभक्ताः परस्परम्॥**
**येषामेताः क्रिया लोके प्रवर्त्तन्ते स्वरिक्थतः।**
**विभक्तानवगच्छेयुर्लेख्यमप्यन्तरेण तान्॥७॥**

**(नारद १३।३८-४०)**

**तथा बृहस्पतिः।**

**साहसं स्थावरं न्यासः प्राग्विभागश्च रिक्थिनाम्।**
**अनुमानेन विज्ञेयं न स्यातां पत्रसाक्षिणौ॥**
**बलानुबन्धव्याघातहोढं साहसभावकम्।**
**स्वस्य भोगः स्थावरस्य विभागस्य पृथग्धनम्॥**
**पृथगायव्ययधनाः कुसीदञ्च परस्परम्।**
**वणिक्पथञ्च ये कुर्य्युर्विभक्तास्ते न संशयः॥८॥**

नारदवचने भागलेख्येनेत्यस्यार्थमाह तथा लिखितेन वेति। बलवदिति। साक्षिभ्यो लिखितं गुर्विति वचनादिति शेषः। पृथक्कार्य्येति। पृथगुपादानादिकार्य्यप्रवर्त्तनादित्यर्थः। परिग्रहाः परिवारा दासादयः, प्रतिग्रहार्थत्वे ग्रहणेत्यनेन पौनरुक्त्यापत्तेः। पृथक् ज्ञेयाः प्रत्येकं स्वातन्त्र्यविषयाः ज्ञेयाः। पाकधर्मो वैश्वदेवादि कर्म। आगमो धनागमोपायः क्रयादिः। व्ययो धनवियोगः। प्रतिभाव्यं लग्नकत्वत्। स्वरिक्थतः स्वस्वरिक्थतः। लेख्येति इतरप्रमाणसामान्योपलक्षणम्। साहसं बलात् समक्षक्रियमाणं पारुष्यादि। तथाच नारदः। सहसा क्रियते कर्म यत्किञ्चिद्बलदर्पितैः। तत्साहसमिति प्रोक्तं सहोबलमिहोच्यते।। मनुष्यमारणं स्तेयं परदाराभिमर्षणम्। पारुष्यमुभयञ्चेह साहसं पञ्चधा स्मृतम्।। इति। स्थावरं स्थावरगततदीयत्वम्। न स्यातामिति। पत्रसाक्षिणोरभावे साहसादयोऽनुमानादिना निश्चेया इत्यर्थः। साहसादीनामनुमाने क्रमेण लिङ्गान्याह बलानुबन्धेत्यादि बलानुबन्धोबलवत्त्वप्रयुक्त चेष्टाविशेषः। व्याघातः ताड़नचिह्नम्। होढ़ो लोप्तं, तत् सर्वं साहसस्य भावकं ज्ञापकमित्यर्थः। स्थावरे तदीयत्वलिङ्गान्याह स्वस्येति। स्वस्य स्वस्वामिकस्थावरस्य पृथक्भोग इत्यर्थः। विभागलिङ्गान्याह पृथग्धनमिति। पृथगायव्ययधनाः पृथग्धनायव्ययाः। कुसीदम् ऋणादानं परस्परमित्यर्थः।।६-८।।

**एको भ्राता ददाति अपरश्च गृह्णाति गृहादिकम् आयव्ययस्थितिश्च पृथक् पृथक् एकेन ऋणादिषु क्रियमाणेषु अपरश्च साक्षी प्रतिभूर्वा क्रियते परस्परं वा ऋणादिकव्यवहारः एको यत्किञ्चिदद्रव्यम् अन्यतः क्रीत्वा वाणिज्यार्थं भ्रातरि विक्रीणीते एवमादिका एकैकापि क्रिया परस्परं विभक्तानामेव सम्भवति तया विभागानुमानं धीमद्भिरनुसन्धेयमिति॥९॥**

**न च येषामेताः क्रिया इत्येतच्छब्देन बह्वीनामुपादानात् मिलितानामेव गमकत्वं वाच्यं न्यायमूलत्वात् वचनानाम् एकैकत्रापि च तारतम्याविशेषाविशेषात्॥१०॥**

**न स्यातां पत्रसाक्षिणावित्यनेन पत्रसाक्षिणोरभावे अनुमानमनुसरणीयमित्युक्तम्॥११॥**

दानग्रहणेत्याद्युक्तवचनानि व्याकरोति एको भ्रातेत्यादि। इदं दानग्रहणेत्यस्य विवरणम्। गृहक्षेत्रेत्यस्य विवरणं गृहादिकमिति, आयेति धनस्येति शेषः। एकेनेति। इदं साक्षित्वं प्रातिभाव्यमित्यस्य

विवरणम्। कुसीद मिति विवृणोति परस्परं वेति। वणिक्पथञ्चेत्यस्यार्थमाह एक इति। विभक्तानामेवेति। एतेनोक्तक्रियासु विभागस्य व्याप्तिर्दर्शिता। न्यायमूलत्वादिति। न्यायो व्याप्तिस्तन्मूलत्वात् वचनानां विभागलिङ्गवचनानाम्। एकैकत्रापीति। तारतम्याविशेषो व्याप्तिः तस्याः प्रत्येकक्रियास्वेवाविशेषात् सत्त्वादित्यर्थः। तथाच प्रत्येकस्यैव व्याप्यत्वात् प्रत्येकस्यैव गमकत्वं न तु मिलितानाम्। वचनानामपि तथैवाभिप्रायः अन्यथा धूमालोकादीनामपि मिलितानां किमिति वह्यादिगमकतां नाङ्गीकुरुषे इति भावः। बृहस्पतिवचने न स्यातामित्यादेरर्थमाह न स्यातामिति।।९-११।।



## पञ्चदशः अध्यायः

**नाचार्य्यगौरवपराहतदायभागतत्त्वप्रबोधजनरञ्जनमत्र शक्यम्।**
**किन्तु प्रमाणपरतन्त्रधियां मुनीनां संवादमात्रकृतये कृतिनः प्रयत्नः।।१।।**

**बहुविधपूर्वनिबन्धृ-व्याख्यासञ्जातसंशयस्यैतत्।**
**जीमूतवाहनकृतं प्रकरणमपनुत्तये ध्येयम्।।२।।**

**पारिभद्रकुलोद्भूतः श्रीमान् जीमूतवाहनः।**
**दायभागं चकारेमं विदुषां संशयच्छिदे।।३।।**

**इतिपारिभद्रीय महामहोपाध्याय श्रीजीमूतवाहनकृतौ धर्मरत्ने दायभागः समाप्तः।**

नाचार्य्येति। आचार्य्याणां श्रीकरमिश्रादीनां गौरवेण आदरेण पराहतो दूरीभूतो दायभागतत्त्वस्य प्रबोधो यथार्थज्ञानं येषां तादृशजनानां रञ्जनमनुरञ्जनम् अत्रानेन ग्रन्थेन न शक्यम्। तर्हि प्रायशो विफलोऽत्र प्रयत्न इत्यत्र आह किन्त्विति। प्रमाणं वेदादि तत्परतन्त्रा तदधीना धीर्येषां तेषां मुनीनां मन्वादीनां संवादः परस्परवचनाविरोधः तन्मात्रकृतये तन्मात्रार्थं कृतिनो मम प्रयत्न इत्यर्थः सर्वेषामेव मुनीनां वेदार्थनिबन्धृत्वेन वेदानां परस्परविरोधाभावात् तत्तद्वचनेऽपि विरोधो नास्त्येव आपाततः प्रतीयमानतद्विरोधो न्यायसचिवानुमानेन तेषां तात्पर्य्यार्थविशेषमवधार्य्य परिहृतो यदि तदा अनेनैवास्माकं प्रयत्नसार्थक्ये अविवेचकानुरञ्जनस्य अकिञ्चित्करत्वमिति भावः। मनीषा संवादेति पाठे प्रमाणदर्शिनां बुद्धिसंवादकरणाय तैः स्वयं पर्य्यालोचनया यन्निर्णीतम् अस्माभिरपि तदेवोपनिबद्धमित्येतत् दर्शनार्थमेव प्रयत्न इत्यर्थः।

सेतू भवाब्धेर्जगदेकहेतू कृत्वा हृदब्जे परदेवताङ्घ्री।
धीमददरूहे खलु दायभागे श्रीकृष्णविप्रो विवृतिं वितेने।।

टिप्पनी विशदार्थेयं निगूढ़ार्थप्रकाशिनी।
धीरामोदकरी नाम्ना दायभागप्रबोधनी।।

इति श्रीकृष्णतर्कालङ्कारभट्टाचार्य्यकृता दायभागप्रबोधनी समाप्ता।





